यजमानस्य तद्यद्देवाऽस्याऽत्र तद्वैतदुपतिष्ठमानः कुरुते तस्मादुपैव तिष्ठेत ॥ ५ ॥ अथ यस्मान्नोपतिष्ठेत । यो वै ब्राह्मणं वा शूद्रसमानोऽनुचरति क्षत्रियं वाऽयं मे दास्यत्ययं मे गृहान्करिष्यतीति यो वै तं व्राचेन वा कर्म्मणा वाऽभिरिराधयिषति तस्मै वै स देयं मन्यतेऽथ य ऽआह किं नु त्वं ममाऽसि यो मे न ददासीतीश्वर ऽएनं द्वेष्टोरीश्वरो निर्वेदं गन्तोस्तस्मान्नोपतिष्ठेतैतद्धित्त्वेवैष ऽएतं याचते यदिन्धे यज्जुहोति तस्मान्नोपतिष्ठेत ॥ ६ ॥ अथ यस्मादुपैव तिष्ठेत । उत वै याचन्दातारं लभत ऽएवोतो भर्त्ता भार्य्यं नाऽनुबुध्यते स यदेवाऽऽह भार्य्यो वै तेऽस्मि विभृहि मेत्यथैनं वेदाऽथैनं भार्य्यं मन्यते तस्मादुपैव तिष्ठेतेदमित्तु समस्तं यस्मादुपतिष्ठेत ॥ ७ ॥ प्रजापतिर्वा ऽएष भूत्वा । यावत ऽईष्टे यावदेनमनु तस्य रेतः सिञ्चति यदग्निहोत्रं जुहोतीदमेवैतत्सर्वमुपतिष्ठमानोऽनु विकरोतीदः सर्वमनु प्रजनयति ॥ ८ ॥ स वा ऽउपवत्या प्रतिपद्यते । इयं वा ऽउप ह्येनेयमुप यद्धीदं किञ्च जायतेऽस्यां तदुपजायतेऽथ यत्पृच्छ्रयस्यामेव तदुपोप्यते तद्दृ रात्र्या भूयो-भूय ऽएवाऽक्षय्यं भवति तदक्षय्येणैवैतद्भूम्ना प्रतिपद्यते ॥९॥ स ऽआह । 'उपप्रयन्तो ऽअध्वर'मित्यध्वरो वै यज्ञ ऽउपप्रयन्तो यज्ञमित्येवैतदाह 'मन्त्रं वोचेमाऽऽग्नय' ऽइति मन्त्रमु ह्यस्मा ऽएतद्वक्ष्यन्भवत्या'रे ऽअस्मे च शृण्वत' ऽइति यद्यप्यस्मदारका-

(१) शु० सं० अ० ३ क० ११। (२) शु० सं० अ० ३ क० ११। (३) शु० सं० अ० ३ क० ११।

दस्यथ न ऽएतच्छृण्वेवैवमेवैतन्मन्यस्त्वेत्येवैतदाह ॥१०॥ 'अग्निर्मूर्द्धा दिवः । ककुत्पतिः पृथिव्या ऽअयम् । अपाꣳ रेताꣳसि जिन्वती'त्यग्न्वेव धावति तद्यथा याचद्कल्याणं ब्रूदेदामुष्यायणो वै त्वमस्यलं वै त्वमेतस्मा ऽअसीत्येवमेषा ॥ ११ ॥ अथैन्द्राग्नी । 'ऽउभा वामिन्द्राग्नी ऽआहुवध्या ऽउभा राधसः सह मादयध्यै । उभा दाताराविषाꣳ रयीणामुभा वाजस्य सातये हुवे वामि'त्येष वा ऽइन्द्रो य ऽएष तपति स यदस्तमेति तदाहवनीयं प्रविशति तदुभावेवैतत्सह सन्ता ऽउपतिष्ठत ऽउभौ मे सह सन्तौ दत्तामिति तस्मादैन्द्राग्नी ॥ १२ ॥ 'अयं ते योनिर्ऋत्वियः । यतो जातो ऽअरोचथाः । तं जानन्नग्न ऽआरोहाऽथा नो वर्धया रयिमि'ति पुष्टं वै रयिर्भूयो-भूय ऽएव न ऽइदं पुष्टं कुर्वित्येवैतदाह ॥ १३ ॥ 'अयमिह प्रथमः । धायि धातृभिर्होता यजिष्ठो ऽअध्वरेष्वीड्यः । यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशे-विश' ऽइत्यग्न्वेव धावति तद्यथा याचद्कल्याणं ब्रूदेदामुष्यायणो वै त्वमस्यलं वै त्वमेतस्मा ऽअसीत्येवमेषा यथो ऽएवैष तथो ऽएवैनमेतदाह यदाह विभ्वं विशे—विश ऽइति विभूर्ह्ययं विशे-विशे ॥ १४ ॥ 'अस्य प्रत्नाम् । अनु द्युतꣳ शुक्रं दुदुहे ऽअह्रयः । पयः सहस्रसामृषिमि'ति परमा वा ऽएषा सनीनां यत्सहस्रसनिस्तदेतस्यैवाऽवरुद्ध्यै

(१) शु० सं० अ० ३ क० १२ । (२) शु० सं० अ० ३ क० १३ । (३) शु० सं० अ० ३ क० १४ । (४) शु० सं० अ० ३ क० १५ । (५) शु० सं० अ० ३ क० १६ ।

तस्मादाह पयः सहस्त्रसामृपिमिति ॥ १५ ॥ तदेतत्समा-हार्य्यः पङ्कचम्। तस्योपवती प्रथमा प्रत्नवत्युत्तमाऽवोचाम तद्यस्मादुपवत्यथाऽद् ऽएव प्रत्नं यावन्तो ह्येव सन्ताऽग्ने देवास्तावन्त ऽएव देवास्तस्माद्दः प्रत्नं तदिमे ऽएवाऽन्त-रेण सर्वे कामास्ते ऽअस्मा ऽइमे सञ्जानाने सर्वान्कामान्स-न्नमतः ॥ १६ ॥ स वै त्रिः प्रथमां जपति । त्रिरुत्तमां त्रिवृत्प्रायणा हि यज्ञास्त्रिवृदुदयनास्तस्मात्त्रिः प्रथमां जपति त्रिरुत्तमाम् ॥ १७ ॥ यद्ध वा ऽअत्राऽग्निहोत्रं जुह्वत् । वाचेन वा कर्म्मणा वा मिथ्या करोत्यात्मनस्तदुवयत्या-युषो वा वर्चसो वा प्रजायै वा ॥ १८ ॥ तदु खलु । 'तनूपा ऽअग्नेऽसि तन्वं मे पाह्यायुर्दा ऽअग्नेऽस्यायुर्म्मे देहि वर्चोदा ऽअग्नेऽसि वर्चो मे देहि । अग्ने यन्मे तन्वा ऽऊनं तन्म ऽआपृण'ेति ॥ १९ ॥ यद्ध वा ऽअत्राऽग्निहोत्रं जुह्वत् । वाचेन वा कर्म्मणा वा मिथ्या करोत्यात्मनस्तदुवयत्यायुषो वा वर्चसो वा ऽप्रजायै वा तन्मे पुनराप्प्यायय्येत्येवैतदाह तथो हाऽस्यैतत्पुनराप्प्यायते ॥ २० ॥ 'इन्धानास्त्वा । शतः हिमा द्युमन्तः समिधीमही'ति शतं वर्षाणि जीव्व्या-स्मेत्येवैतदाह तावत्त्वा महान्तः समिधीमहीति यदाह द्युमन्तः समिधीमहीति 'वयस्वन्तो वयस्कृतः सहस्वन्तः सहस्कृतमि'ति वयस्वन्तो वयं भूयास्म वयस्कृत्त्वं भूया ऽइत्येवैतदाह सहस्वन्तो वयं भूयास्म सहस्कृत्त्वं भूया

( १ ) शु० स० अ० ३ क० १७ । ( २ ) शु० स० अ० ३. क० १८ । ( ३ ) शु० स० अ० ३. क० १८ ।

ऽइत्येवैतदाह। 'अग्ने सपत्नदम्भनमदब्धासो ऽअदाभ्यमि'ति त्वया वयꣳ सपत्नाꣳपापीयसः क्रियास्मेत्येवैतदाह ॥ २१ ॥ 'चित्रावसो स्वस्ति ते पारमशीये'ति। त्रिरेतज्जपति रात्रिर्वै चित्रावसुः सा हीयꣳ सङ्गृह्येव चित्राणि वसति तस्मान्नाऽऽरकाच्चित्रं ददृशे ॥ २२ ॥ एतेन ह स्म वा ऽऋषयः। रात्रेः स्वस्ति पारꣳ समश्नुवत ऽएतेनो ह स्मैनान्रात्रेर्नाष्ट्रा रक्षाꣳसि न विन्दन्त्येतेनो ऽएवैष ऽएतद्रात्रेः स्वस्ति पारꣳ समश्नुत ऽएतेनो ऽएनꣳ रात्रेर्नाष्ट्रा रक्षाꣳसि न विन्दन्त्येतावन्नु तिष्ठञ्जपति ॥ २३ ॥ अथाऽऽसीनः। 'सं त्वमग्ने सूर्य्यस्य वर्चसा गथा' ऽइति तद्यदस्तं यन्नाऽऽदित्य ऽआहवनीयं प्रविशति तेनैतदाह 'समृषीणाꣳ स्तुतेने'ति तद्यदुपतिष्ठते तेनैतदाह 'सं प्रियेण धाम्ने'त्याहुतयो वा ऽअस्य प्रियं धामाऽऽहुतिभिरेव तदाह 'समहमायुषा सं वर्चसा सं प्रजया सꣳ रायस्पोषेण ग्मिषीये'ति यथा त्वमेतैः समगथा ऽएवमहमायुषा वर्चसा प्रजया रायस्पोषेणेति यद्भूम्नेति तदेवमहमेतैः सङ्गच्छा ऽइत्येवैतदाह ॥ २४ ॥ अथ गामभ्यैति। 'अन्धꣳ स्थाऽन्धो वो भक्षीय मह स्थ महो वो भक्षीये'ति यानि वो वीर्य्याणि यानि वो महाꣳसि तानि वो भक्षीयेत्येवैतदा'होर्ज्ज स्थोर्ज्जं वो भक्षीये'ति रस स्थ रसं वो भक्षीयेत्येवैतदाह 'रायस्पोष

(१) शु॰ सं॰ अ॰ ३. क॰ १८। (२) शु॰ सं॰ अ॰ ३ क॰ १८। (३) शु॰ सं॰ अ॰ ३. क॰ १९। (४) शु॰ सं॰ अ॰ ३. क॰ १९। (५) शु॰ सं॰ अ॰ ३. क॰ १९। (६) शु॰ सं॰ अ॰ ३ क॰ १९। (७) शु॰ सं॰ अ॰ ३ क॰ २०। (८) शु॰ सं॰ अ॰ ३. क॰ २०। (९) शु॰ सं॰ अ॰ ३. क॰ २०।

स्थ रायस्पोषं वो भक्षीये'ति भूमा स्थ भूमानं वो भक्षीयेत्येवैतदाह ॥ २५ ॥ 'रेवती रमद्ध्वमि'ति । रेवन्तो हि पशवस्तस्मादाह रेवती रमद्ध्वमि'त्यस्मिन्योनावस्मिन्गोष्ठेऽस्मिँल्लोकेऽस्मिन्क्षये । इहैव स्त माऽपगाते'त्यास्मन्नऽएवैतदाह मदेव माऽपगातेति ॥ २६ ॥ अथ गामभिमृशति । 'सꣳहितासि विश्वरूपी'ति विश्वरूपा ऽइव हि पशवस्तस्मादाह विश्वरूपी'त्यूर्ज्जा माऽऽविश गौपत्येने'त्यूर्ज्जेति यदाह रसेनेति तदाह गौपत्येनेति यदाह भूम्नेति तदाह ॥ २७ ॥ अथ गार्हपत्यमभ्यैति । स गार्हपत्यमुपतिष्ठत 'ऽउप त्वाग्ने दिवे-दिवे दोषावस्तर्द्धिया वयम् । नमो भरन्त ऽएमसी'ति नम ऽएवास्मा ऽएतत्करोति यथैनं न हिꣳस्यात् ॥ २८ ॥ 'राजन्तमद्ध्वराणां गोपामृतस्य दीदिविम् । वर्धमानꣳ स्वे दम' ऽइति स्वं वै त ऽइदं यन्मम तन्नो भूयो-भूय ऽएव कुर्वित्येवैतदाह ॥ २९ ॥ 'स नः पितेव *सूनवेऽग्ने सूपायनो भव । सचस्वा नः स्वस्तय' ऽइति यथा पिता पुत्राय सूपचरो नैवैनं केन चन हिनस्त्येवं नः सूपचर ऽएधि मैव त्वा केन चन हिꣳसिष्मेत्येवैतदाह ॥ ३० ॥ अथ द्विपदाः । 'अग्ने त्वन्नो ऽअन्तम ऽउत त्राता शिवो भवा वरूथ्यः ।

---

* 'ख ग च पुस्तकेषु 'सूनवे । अग्ने' इत्येव पाठो दृश्यते ।

( १ ) शु० स० अ० ३ क० २१ । ( २ ) शु० स० अ० ३ क० २१ । ( ३ ) शु० स० अ० ३ क० २२ । ( ४ ) शु० स० अ० ३ क० २२ । ( ५ ) शु० स० अ० ३ क० २२ । ( ६ ) शु० स० अ० ३ क० २३ । ( ७ ) शु० स० अ० ३ क० २४ । ( ८ ) शु० स० अ० ३ क० २५-२६ ।

वसुरग्निर्वसुश्रवा ऽअच्छा नक्षि द्युमत्तमः रयिन्दाः ॥ तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः । स नो बोधि श्रुधी हवमुरुष्या णो ऽअघायतः समस्मादि'ति ॥ ३१ ॥ यद्वा ऽआहवनीयमुपतिष्ठते । पशूँस्तद्याचते तस्मात्तमुच्चावचैश्छन्दोभिरुपतिष्ठत ऽउच्चावचा ऽइव हि पशवोऽथ यद् गार्हपत्यं पुरुषाँस्तद्याचते तद् गायत्रं प्रथमं त्रिचं गायत्रं वा ऽअग्नेश्छन्दः स्वेनैवैनमेतच्छन्दसोपपरैति ॥ ३२ ॥ अथ द्विपदाः । पुरुषच्छन्दसं वै द्विपदा द्विपाद्वा ऽअयं पुरुषः पुरुषानेवैतद्याचते पुरुषान्हि याचते तस्माद् द्विपदाः पशुमान्ह वै पुरुषवान्भवति य ऽएवं विद्वानुपतिष्ठते ॥ ३३ ॥ अथ गामभ्यैति । 'इड ऽएह्यदित ऽएही'तीडा हि गौरदितिर्हि गौस्तामभिमृशति 'काम्या ऽएते'ति मनुष्याणाᳬ ह्येतासु कामाः प्रविष्टास्तस्मादाह काम्या ऽएतेति 'मयि वः कामधरणं भूयादि'त्यहं वः प्रियो भूयासमित्येवैतदाह ॥ ३४ ॥ अथाऽन्तरेणाऽऽहवनीयं च गार्हपत्यं च । प्राङ् तिष्ठन्निमीक्षमाणो जपति 'सोमानᳬ स्वरणं कृणुहि ब्रह्मणस्पते । कक्षीवन्तं य ऽऔशिजः ॥ यो रेवान्यो ऽअमीवहा वसुवित्पुष्टिवर्द्धनः । स नः सिषक्तु यस्तुरः ॥ मा नः शᳬसो ऽअररुषो धूर्त्तिः प्रणङ् मर्त्यस्य । रक्षा णो ब्रह्मणस्पत' ऽइति ॥ ३५ ॥ यद्वा ऽआहवनीयमुपतिष्ठते । दिवं तदुपतिष्ठ-

(१) शु० सं० अ० ३ क० २७ । (२) शु० सं० अ० ३ क० २७ ।
(३) शु० सं० अ० ३ क० २७ । (४) शु० सं० अ० ३ क० २८–३० ।

तेऽथ यद् गार्हपत्यं पृथिवीं तदुपैतदन्तरिक्षमेषा हि दिग्बृहस्पतेरेताᳬं ह्येतद्दिशमुपतिष्ठते तस्माद्गार्हपत्यं जपति ॥ ३६ ॥ 'महि त्रीणामवोऽस्तु । द्युक्षं मित्रस्याऽर्यम्णः । दुराधर्षं वरुणस्य ॥ न हि तेषाममा चन नाऽध्वसु वारणेषु । ईशे रिपुरघशᳬसः ॥ ते हि पुत्रासो ऽअदितेः प्रजीवसे मर्त्याय । ज्योतिर्यच्छन्त्यजस्र'मिति तत्राऽस्ति नाऽध्वसु वारणेष्वित्यते ह वा ऽअध्वानो वारणा य ऽइमेऽन्तरेण द्यावापृथिवी ऽएतान्ह्येतदुपतिष्ठते तस्मादाह नाऽध्वसु वारणेष्विति ॥ ३७ ॥ अथैन्द्री । इन्द्रो वै यज्ञस्य देवता सेन्द्रमेवैतदग्न्युपस्थानं कुरुते 'कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुष' ऽइति यजमानो वै दाश्वान्न यजमानाय द्रुह्यसीत्येवैतदा'होपोपेन्नु मघवन्भूय ऽइन्नु ते दानं देवस्य पृच्यत' ऽइति भूयो भूय ऽएव न ऽइदं पुष्टं कुर्वित्येवैतदाह ॥ ३८ ॥ अथ सावित्री । सविता वै देवानां प्रसविता तथो हाऽस्मा ऽएते सवितृप्रसूता ऽएव सर्वे कामाः समृध्यन्ते 'तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदया'दिति ॥ ३९ ॥ अथाऽऽग्नेयी । तदग्नय ऽएवैतदात्मानमन्ततः परिददाति गुप्त्यै 'परि ते दूडभो रथोऽस्माँ ॥ २ ऽअश्नोतु विश्वतः । येन रक्षसि दाशुष' ऽइति यजमाना वै दाश्वाᳬंसो यो ह वा ऽअस्याऽनाधृष्यतमो रथस्तेनैष यजमाना-

(१) शु० सं० अ० ३ क० ३१-३३। (२) शु० सं० अ० ३ क० ३४। (३) शु० सं० अ० ३ क० ३५। (४) शु० सं० अ० ३ क० ३५। (५) शु० सं० अ० ३ क० ३६।

नभिरक्षति स यस्तेऽनाधृष्यतमो रथो येन यजमानानभिरक्षसि तेन नः सर्वतोऽभिगोपायेत्येवैतदाह त्रिरेतज्जपति ॥ ४० ॥ अथ पुत्रस्य नाम गृह्णाति । 'इदं मेऽयं वीर्यं पुत्रोऽनुसन्तनवदि'ति यदि पुत्रो न स्यादप्यात्मन एव नाम गृह्णीयात् ॥ ४१ ॥

तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥



अथ हुतेऽग्निहोत्र उपतिष्ठते । 'भूर्भुवः स्वरि'ति तत्सत्येनैवैतद्वाचः समर्द्धयति यदाह भूर्भुवः स्वरिति तया समृद्धयाऽऽशिषमाशास्ते 'सुप्रजाः प्रजाभिस्यामि'ति तत्प्रजामाशास्ते 'सुवीरो वीरैरि'ति तद्वीरानाशास्ते 'सुपोषः पोषैरि'ति तत्पुष्टिमाशास्ते ॥ १ ॥ यद्वा अदो दीर्घमग्न्युपस्थानम् । आशीरेव साऽऽशीरियं तदेतावतैवैतत्सर्वमाप्नोति तस्मादेतेनैवोपतिष्ठेतैतेन न्वेव वयमुपचराम इति ह स्माऽऽहाऽऽसुरिः ॥ २ ॥ अथ प्रवत्स्यन् । गार्हपत्यमेवाग्र उपतिष्ठतेऽथाऽऽहवनीयः ॥ ३ ॥ स गार्हपत्यमुपतिष्ठते । 'नर्य प्रजाम्मे पाही'ति प्रजाया हैष ईष्टे तत्प्रजामेवास्मा एतत्परिददाति गुप्त्यै ॥ ४ ॥ अथाऽऽहवनीयमुपतिष्ठते । 'शंस्य पशून्मे पाही'ति

(१) तै० ब्रा० ५ १ । (२) शु० स० अ० ३ क० ३७ । (३) शु० सं० अ० ३ क० ३७ । (४) शु० स० अ० ३ क० ३७ । (५) शु० स० अ० ३ क० ३७ । (६) शु० स० अ० ३ क० ३७ । (७) शु० सं० अ० ३ क० ३७ ।

पशूनाᳬ हैव ऽईष्टे तत्पशूनेवाऽस्मा ऽएतत्परिददाति गुप्त्यै ॥५॥ अथ प्र वा व्व्रजति प्र वा धावयति । स यत्र वेलां मन्यते तत्स्यन्त्वा वाचं विसृजतेऽथ प्रोष्य परेक्ष्य यत्र वेलां मन्यते तद्वाचं यच्छति स यद्यपि राजाऽन्तरेण स्यान्नैव तमु- पेयात् ॥ ६ ॥ स ऽआहवनीयमेवाऽग्र ऽउपतिष्ठते । अथ गार्हपत्यं गृहा वै गार्हपत्यो गृहा वै प्रतिष्ठा तद्गृहेष्वेवै- तत्प्रतिष्ठायां प्रतितिष्ठति ॥७॥ स ऽआहवनीयमुपतिष्ठते। '[1]आगन्म विश्ववेदसमस्मभ्यं वसुवित्तमम्। अग्ने सम्राडभि द्युम्नमभि सह ऽआयच्छस्वे'त्यथोपविश्य तृणान्यपलुम्पति ॥ ८ ॥ अथ गार्हपत्यमुपतिष्ठते । '[2]अयमग्निर्गृहपतिर्गार्ह- पत्यः प्रजाया वसुवित्तमः । अग्ने गृहपतेऽभिद्युम्नमभि सह ऽआयच्छस्वे'त्यथोपविश्य तृणान्यपलुम्पत्येतद्ध जपेनैतेन न्वेव भूयिष्ठा ऽइवोपतिष्ठन्ते ॥ ९ ॥ स वै खलु तूष्णी- मेवोपतिष्ठेत । इदं वै यस्मिन्न्वसति ब्राह्मणो वा राजा वा श्रेयान्मनुष्यो न्वेव तमेव नाऽर्हति वक्तुमिदं मे त्वं गोपाय प्राऽहं वत्स्यामीत्यथाऽस्मिन्नेते श्रेयाᳬसो वसन्ति देवा ऽअग्नयः क ऽउ तानर्हति वक्तुमिदं मे यूयं गोपायत प्राऽहं वत्स्यामीति ॥१०॥ मनो ह वै देवा मनुष्यस्याऽऽजानन्ति। स वेद गार्हपत्यः परिदां मेदमुपागादिति तूष्णीमेवाऽऽहवनीय- मुपतिष्ठते स वेदाऽऽहवनीयः परिदां मेदमुपाऽगादिति ॥११॥ अथ प्र वा व्व्रजति प्र वा धावयति। स यत्र वेलां* मन्यते

(१) शु० स० अ० ३ क० ३८। (२) शु० स० अ० ३ क० ३९।

* 'ग च' पुस्तकयो 'वेला' इत्यत्र 'वेगो' इति पाठ ।

तत्स्यन्त्वा वाचं विसृजतेऽथ प्रोष्य परेक्ष्य यत्र वेलां मन्यते तद्वाचं यच्छति स यद्यपि राजाऽन्तरेण स्यान्नैव तमुपेयात् ॥ १२ ॥ स ऽआहवनीयमेवाऽग्र ऽउपतिष्ठते । अथ गार्हपत्यं तूष्णीमेवाऽऽहवनीयमुपतिष्ठते तूष्णीमुपविश्य तृणान्यपलुम्पति तूष्णीमेव गार्हपत्यमुपतिष्ठते तूष्णीमुपविश्य तृणान्यपलुम्पति ॥ १३ ॥ अथाऽतो गृहाणामेवोपचारः । एतद्ध वै गृहपतेः प्रोषुष ऽआगताद् गृहाः समुद्रस्ता ऽइव भवन्ति किमयमिह वदिष्यति किं वा करिष्यतीति स यो ह तत्र किंचिद्वदति वा करोति वा तस्माद् गृहाः प्रत्रसन्ति तस्येश्वरः कुलं विक्षोब्धोरथ यो ह तत्र न वदति न किं चन करोति तं गृहा ऽउपसंश्रयन्ते न वा ऽअयमिहाऽवादीन्न किं चनाऽकरदिति स यदिह्यऽपि सुक्रुद्ध ऽइव स्याच्छ्र ऽएव ततस्तत्कुर्य्याद्यद्वदिष्यन्वा करिष्यन्वा स्यादेष ऽउ गृहाणामुपचारः ॥ १४ ॥

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



प्रजापतिं वै भूतान्युपाऽऽसीदन् । प्रजा वै भूतानि वि नो धेहि यथा जीवामेति ततो देवा यज्ञोपवीतिनो भूत्वा दक्षिणं जान्वाच्योपाऽऽसीदँस्तानब्रवीद्यज्ञो वोऽन्नममृतत्वं व ऽऊर्ग्वः सूर्य्यो वो ज्योतिरिति ॥ १ ॥ अथैनं पितरः । प्राचीनावीतिनः सव्यं जान्वाच्योपाऽऽसीदँस्तानब्रवीन्मासि-मासि वोऽशनं स्वधा वो मनोजवो

वश्चन्द्रमा वो ज्योतिरिति ॥ २ ॥ अथैनं मनुष्याः। प्राव्वृता ऽउपस्थं कृत्त्वोपाऽऽसीदँस्तानब्रवीत्सायं प्रातर्वो-ऽशनं प्रजा वो मृत्युर्वोऽग्निर्वो ज्योतिरिति ॥ ३ ॥ अथैनं पशव ऽउपाऽऽसीदन्। तेभ्यः स्वैरमेव चकार यदैव यूयं कदा च लभाद्धै यदि काले यद्यनाकालेऽथैवाऽश्नाथेति तस्मादेते यदैव कदा च लभन्ते यदि काले यद्यनाकाले-ऽथैवाऽश्नन्ति ॥ ४ ॥ अथ हैनः शश्वदप्यसुरा ऽउपसेदु-रित्याहुः। तेभ्यस्तमश्च मायां च प्रददावस्त्यहैवाऽसुर-मायेतीव पराभूता ह त्वेव ताः प्रजास्ता ऽइमाः प्रजास्त-थैवोपजीवन्ति यथैवाऽऽभ्यः प्रजापतिर्व्यदधात् ॥५॥ नैव देवा ऽअतिक्रामन्ति। न पितरो न पशवो मनुष्या ऽएवैके-ऽतिक्रामन्ति तस्माद्यो मनुष्याणां मेद्यत्यशुभे मेद्यति विहूर्च्छति हि न ह्ययनाय चन भवत्यनृतः हि कृत्वा मेद्यति तस्मादु सायम्प्रातराश्येव स्यात्स यो हैवं विद्वान्त्सा-यम्प्रातराशी भवति सर्वः हैवाऽऽयुरेति यदु ह किं च वाचा व्याहरति तदु हैव भवत्येतद्धि देवसत्त्यं गोपायति तद्वैत-त्तेजो नाम ब्राह्मणं य ऽएतस्य व्रतः शक्नोति चरितुम् ॥ ६ ॥ तद्वा ऽएतत्। मासि—मास्येव पितृभ्यो ददतो यदैवैष न पुरस्तान्न पश्चाद्ददृशेऽथैभ्यो ददात्येष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः स ऽएताः रात्रिं क्षीयते तस्मिन्क्षीणे ददाति तथैभ्योऽसमदं करोत्यथ यदक्षीणे दद्यात्समदः ह कुर्य्याद्देवेभ्यश्च पितृभ्यश्च तस्माद्यदैवैष न पुरस्तान्न पश्चाद्ददृशेऽथैभ्यो ददाति ॥ ७ ॥ स वा ऽअप-

राह्णे ददाति । पूर्वाह्णो वै देवानां मध्यन्दिनो मनुष्याणा-मपराह्णः पितॄणां तस्मादपराह्णे ददाति ॥ ८ ॥ स जघनेन गार्हपत्यम् । प्राचीनावीती भूत्वा दक्षिणासीन ऽएतं गृह्णाति स तत ऽएवोपोत्थायोत्तरेणाऽन्वाहार्यपचनं दक्षिणा तिष्ठन् वहन्ति सकृत्फलीकरोति सकृदु ह्येव पराञ्चः पितरस्तस्मात्सकृत्फलीकरोति ॥ ९ ॥ तछ श्रपयति । तस्मिन्नधिश्रित ऽआज्यं प्रत्यानयत्यग्नौ वै देवेभ्यो जुह्वत्यु-द्धरन्ति मनुष्येभ्योऽथैव पितॄणां तस्मादधिश्रित ऽआज्यं प्रत्यानयति ॥ १० ॥ स ऽउद्वास्याऽग्नौ द्वे ऽआहुती जुहोति देवेभ्यः । देवान्वा ऽएष ऽउपाऽऽवर्त्तते य ऽआहिताग्निर्भवति यो दर्शपूर्णमासाभ्यां यजतेऽथैतत्पितृयज्ञेनेवाऽचारीत्तदु देवेभ्यो निन्हुते स देवैः प्रसूतोऽथैतत्पितृभ्यो ददाति तस्मादुद्वास्याऽग्नौ द्वे ऽआहुती जुहोति देवेभ्यः ॥ ११ ॥ स वा ऽअग्नये च सोमाय च जुहोति । स यदग्नये जुहोति सर्वत्र ह्येवाऽग्निरन्वाभक्तोऽथ यत्सोमाय जुहोति पितृ-देवत्यो वै सोमस्तस्मादग्नये च सोमाय च जुहोति ॥१२॥ स जुहोति । '*अग्नये कव्यवाहनाय स्वाहा सोमाय पितृ-मते स्वाहे*'त्यग्नौ मेक्षणमभ्यादधाति तत्स्विष्टकृद्भाजन-मथ दक्षिणेनाऽन्वाहार्यपचनछ सकृदुल्लिखति तद्वेदि-भाजनछ सकृदु ह्येव पराञ्चः पितरस्तस्मात्सकृदुल्लिखति ॥ १३ ॥ अथ परस्तादुल्मुकं निदधाति । स यन्निधा-

* 'क' पुस्तके 'ऽथैनम्' इति पाठ ।

( १ ) शु० सं० अ० २ क० २९ ।

योल्मुकमथैतत्पितृभ्यो दद्यादसुररक्षसानि हैषामेतद्विमथ्नीरँस्तथो हैतत्पितॄणामसुररक्षसानि न विमथ्नते तस्मात्परस्तादुल्मुकं निदधाति ॥ १४ ॥ स निदधाति । 'ये[1] रूपाणि प्रतिमुञ्चमाना ऽअसुराः सन्तः स्वधया चरन्ति । परापुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्मादि'त्यग्निर्हि रक्षसामपहन्ता तस्मादेवं निदधाति ॥ १५ ॥ अथोदपात्रमादायाऽवनेजयति । असाववनेनिक्ष्वेत्येव यजमानस्य पितरमसाववनेनिक्ष्वेति पितामहमसाववनेनिक्ष्वेति प्रपितामहं तद्यथाऽऽशिष्यतेऽभिषिञ्चेदेवं तत् ॥ १६ ॥ अथ संकृदाच्छिन्नान्युपमूलं दिनानि भवन्ति । अग्रमिव वै देवानां मध्यमिव मनुष्याणां मूलमिव पितॄणां तस्मादुपमूलं दिनानि भवन्ति सकृदाच्छिन्नानि भवन्ति सकृदु ह्येव पराञ्चः पितरस्तस्मात्सकृदाच्छिन्नानि भवन्ति ॥ १७ ॥ तानि दक्षिणोपस्तृणाति । तत्र ददाति स वा ऽइति ददातीतीव वै देवेभ्यो जुह्वत्युद्धरन्ति मनुष्येभ्योऽथैवं पितॄणां तस्मादिति ददाति ॥ १८ ॥ स ददाति । असावेतत्त ऽइत्येव यजमानस्य पित्रे ये च त्वामन्वित्यु हैक ऽआहुस्तदु तथा न ब्रूयात्स्वयं वै तेषाꣳ सह येषाꣳ सह तस्मादु ब्रूयादसावेतत्त ऽइत्येव यजमानस्य पित्रेऽसावेतत्त ऽइति पितामहायाऽसावेतत्त ऽइति

(१) शु० सं० अ० २ क० ३०।

* "कुशोत्पाटनसमय एव मूलस्याऽधस्तात् सकृत् एकेनैव दात्रप्रहारेण यदुत्पाटितं बर्हिः तत्सकृदाच्छिन्नमित्युच्यते"। छेदनसमये मूलस्याऽधोभाग एव लवितव्यो नोर्ध्वभाग इत्यर्थः। अतो मूलं बर्हिः सकृदाच्छिन्नम् इति वैशायनोक्ति परास्तेति ॥

प्रपितामहाय तद्यदितः पराग्ददाति सकृदु ह्येव पराञ्चः पितरः ॥ १९ ॥ तत्र जपति । 'अत्र पितरो मादयध्वं यथाभागमावृषायध्व'मि'ति यथाभागमश्नीतेत्येवैतदाह ॥ ॥ २० ॥ अथ पराङ् पर्य्यावर्त्तते । तिर ऽइव वै पितरो मनुष्येभ्यस्तिर ऽइवैतद्भवति स वा ऽआ तमितोरासीतेत्याहुरेतावान्ह्यसुरिति स वै मुहूर्त्तमेवाऽऽसित्वा ॥ २१ ॥ अथोपपर्य्यावृत्य जपति । 'अमीमदन्त पितरो यथाभागमावृषायिषते'ति यथाभागमाशिषुरित्येवैतदाह ॥ २२ ॥ अथोदपात्रमादायाऽवनेजयति । असाववनेनिक्ष्वेत्येव यजमानस्य पितरमसाववनेनिक्ष्वेति पितामहमसाववनेनिक्ष्वेति प्रपितामहं तद्यथा †जक्षुपेऽभिषिञ्चेदेवं तत् ॥ २३ ॥ अथ नीविमुद्वृह्य नमस्करोति । पितृदेवत्या वै नीविस्तस्मान्नीविमुद्वृह्य नमस्करोति यज्ञो वै नमो यज्ञियानेवैनानेतत्करोति षट्कृत्वो नमस्करोति षड् वा ऽऋतवः पितरस्तस्मात्षट्कृत्वो नमस्करोति 'गृहान्नः पितरो दत्ते'ति गृहाणाᳬ ह पितर ऽईशत ऽएषो ऽएतस्याऽऽशीः कर्म्मणोऽथाऽवजिघ्रति प्रत्यवधाय पिण्डान्त्स यजमानभागोऽग्नौ सकृदाच्छिन्नान्यभ्यादधाति पुनरुल्मुकमपि सृजति ॥२४॥

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



(१) शु० सं० अ० २ क० ३१। (२) शु० सं० अ० २ क० ३१। (३) शु० सं० अ० २ क० ३२।

† जक्षुपे भुक्तवते पुरुषाय मुखप्रक्षालनार्थं करे उदकमभिषिञ्चेदित्यर्थः। 'जक्षुषे' इत्यत्र अदेर्लिटि क्वसुप्रत्यये 'लिट्यन्यतरस्याम्' (पा सू २ ४०) इति घसादेशे पुनश्चतुर्थ्येकवचने सम्प्रसारणे च रूपमिति।

तद्ध होवाच कहोडः कौषीतकेयः । अनयोर्वा ऽअयं द्यावापृथिव्यो रसोऽस्य रसस्य हुत्वा देवेभ्योऽथैतमश्नामेति तस्माद्वा ऽआग्रयणेष्ट्या यजत ऽइति ॥ १ ॥ तद्ध होवाच याज्ञवल्क्यः । देवाश्च वा ऽअसुराश्चोभये प्राजापत्याः पस्पृधिरे ततोऽसुरा ऽउभयीरोषधीर्याश्च मनुष्या ऽउपजीवन्ति याश्च पशवः कृत्ययेव त्वद्विषेणेव त्वत्प्रलिलिपुरुतैवं चिद्देवानभिभवेमेति ततो न मनुष्या ऽआशुर्न पशव ऽआलिलिशिरे ता हेमाः प्रजा ऽअनाशकेन नोत्पराबभूवुः ॥ २ ॥ तद्धै देवाः शुश्रुवुः । अनाशकेन ह वा ऽइमाः प्रजाः पराभवन्तीति ते होचुर्हन्तेदमासामपजिघाᳪसामेति केनेति यज्ञेनैवेति यज्ञेन ह स्म वै तद्देवाः कल्पयन्ते यदेषां कल्प्यमासर्षयश्च ॥ ३ ॥ ते होचुः । कस्य न ऽइदं भविष्यतीति ते मम--ममेत्येव न सम्पादयाश्चक्रुस्ते हाऽसम्पाद्योचुराजिमेवाऽस्मिन्नजामहै स यो न ऽउज्जेष्यति तस्य न ऽइदं भविष्यतीति तथेति तस्मिन्नाऽऽजिमाजन्त ॥ ४ ॥ ताविन्द्राग्नी ऽउदजयताम् । तस्मादैन्द्राग्नो द्वादशकपालः पुरोडाशो भवतीन्द्राग्नी ह्यस्य भागधेयमुदजयतां तौ यत्रेन्द्राग्नी ऽउज्जिगीवाᳪसौ तस्थतुस्तद्विश्वे देवा ऽअन्वाजग्मुः ॥ ५ ॥ क्षत्रं वा ऽइन्द्राग्नी । विशो विश्वे देवा यत्र वै क्षत्रमुज्जयत्यन्वाभक्ता वै तत्र विट् तद्विश्वान्देवानन्वाभजतां तस्मादेष वैश्वदेवश्चरुर्भवति ॥ ६ ॥ तं वै पुराणानां कुर्य्यादित्याहुः । क्षत्रं वा ऽइन्द्राग्नी

* 'ग--च' पुस्तकयो 'कृत्यम्' इति ।

नेत्क्षत्रमभ्यारोहयाणीति तौ वा ऽउभावेव नवानाᳫं स्यातां *यद्धि पुरोडाश ऽइतरश्चरुरितरस्तेनैव क्षत्रमनभ्यारूढं तस्मादुभावेव नवानार्ᳫं स्याताम् ॥ ७ ॥ त ऽउ ह विश्वे देवा ऽऊचुः । अनयोर्वा ऽअयं द्यावापृथिव्यो रसो हन्तेमेऽअस्मिन्नाभजामेति ताभ्यामेतं भागमकल्पयन्नेतं द्यावापृथिव्यमेककपालं पुरोडाशं तस्माद् द्यावापृथिव्य ऽएककपालः पुरोडाशो भवति तस्येयमेव कपालमेकेव हीयं तस्मादेककपालो भवति ॥ ८ ॥ तस्य परिचक्षा । यस्यै वै कस्यै च देवतायै हविर्गृह्यते सर्वत्रैव स्विष्टकृदन्वाभक्तोऽथैतः सर्वमेव जुहोति न स्विष्टकृतेऽवद्यति सा परिचक्षोतो हुतः पर्य्यावर्त्तते ॥ ९ ॥ तदाहुः । पर्य्याभृद्वाऽअयमेककपालो मोहिष्यति राष्ट्रमिति नाऽस्य सा परिचक्षाऽऽहवनीयो वा ऽआहुतीनां प्रतिष्ठा स यदाहवनीयं प्राप्याऽपि दशकृत्वः पर्य्यावर्त्तेत न तदाद्रियेत यद्वीत्वन्न्ये वदन्ति कस्तत्सन्धमुपेयात्तस्मादाज्यस्यैव यजेदाज्यः ह वा ऽअनयोर्द्यावापृथिव्योः प्रत्यक्षः रसस्तत्प्रत्यक्षमेवैने ऽएतत्स्वेन रसेन मेधेन प्रीणाति तस्मादाज्यस्यैव यजेत् ॥१०॥ एतेन वै देवाः । यज्ञेनेष्ट्वौषधीनामोषधीनां याश्च मनुष्याऽउपजीवन्ति याश्च पशवः कृत्यामिव त्वद्विषमिव त्वदुपजघ्नुस्तत ऽआश्नन्मनुष्या ऽआलिशन्त पशवः ॥११॥ अथ यदेष ऽएतेन यजते । तन्नाऽहं श्नैवैतस्य तथा कश्चन कृत्ययेव त्वद्विषेणेव त्वत्प्रलिम्पतीति देवा ऽअकुर्वन्निति त्वेवैष

---

* 'क' पुस्तके 'यद्वै' इति दृश्यते ।

ऽएतत्करोति यमु चैव देवा भागमकल्पयन्त तमु चैवैभ्य-ऽएष ऽएतद्भागं करोतीमा ऽउ चैवैतदुभयीरोषधीर्य्याश्च मनुष्या ऽउपजीवन्ति याश्च पशवस्ता ऽअनमीवा ऽअकिल्विषाः कुरुते ता ऽअस्याऽनमीवा ऽअकिल्विषा ऽइमाः प्रजा ऽउपजीवन्ति तस्माद्वा ऽएष ऽएतेन यजते ॥ १२ ॥ तस्य प्रथमजो गौर्द्दक्षिणा । अग्रयमिव हीदꣳ स यदीजानः स्याद्दर्शपूर्णमासाभ्यां वा यजेताऽथैतेन यजेत यद्यु ऽअनीजानः स्याच्चातुष्प्राश्यमेवैतमोदनमन्वाहार्य्यपचने पचेयुस्तं ब्राह्मणा ऽअश्नीयुः ॥ १३ ॥ द्वया वै देवा देवाः । अहैव देवा ऽअथ ये ब्राह्मणाः शुश्रुवाꣳसोऽनूचानास्ते मनुष्यदेवास्तद्यथा वषट्कृतꣳ हुतमेवमस्यैतद्भवति तन्नो यच्छकुयात्तद्दद्यान्नाऽदक्षिणꣳ हविः स्यादिति ह्याहुर्नाऽग्निहोत्रं जुहुयात्समदꣳ ह कुर्य्यादग्निहोत्रं जुहुयादन्यद्वा ऽआग्रयणमन्यदग्निहोत्रं तस्मान्नाऽग्निहोत्रं जुहुयात् ॥ १४ ॥

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥
कण्डिकासंख्या ॥ ११३ ॥



प्रजापतिर्ह वा ऽएतेनाऽग्रे यज्ञेनेजे । प्रजाकामो बहुः प्रजया पशुभिः स्याꣳ श्रियं गच्छेयं यशः स्यामन्नादः स्यामिति ॥ १ ॥ स वै दक्षो नाम । तद्यदेनेन सोऽग्रेऽयजत तस्माद्दाक्षायणयज्ञो नामोतैनमेके वसिष्ठयज्ञ ऽइत्याचक्षत ऽएष वै वसिष्ठ ऽएतमेव तदभ्याचक्षते स ऽएतेन

यज्ञेनेजे स ऽएतेन यज्ञेनेष्ट्वा येयं प्रजापतेः प्प्रजातिर्या श्रीरेतद्बभूवैताꣳ ह वै प्प्रजातिं प्रजायत ऽएताꣳ श्रियं गच्छति य ऽएवं विद्वानेतेन यज्ञेन यजते तस्माद्वा ऽएतेन यजेत ॥ २ ॥ तेनो ह तत ऽईजे । प्प्रतीदर्शः श्वैक्नः स ये तं प्रत्यासुस्तेषां विवचनमिवाऽऽस विवचनमिव ह वै भवति य ऽएवं विद्वानेतेन यज्ञेन यजते तस्माद्वा ऽएतेन यजेत ॥ ३ ॥ तमाजगाम । सुप्ला सार्ञ्जयो ब्रह्मचर्य्यं तस्मादेतं च यज्ञमनूचेऽथ्यमु च सोऽनूच्च्य पुनः सृञ्जयाञ्जगाम ते ह सृञ्जया विदाञ्चक्रुर्य्यज्ञं वै नोऽनूच्च्याऽगन्निति ते होचुः सह वै नस्तद्देवैरागन्न्यो नो यज्ञमनूच्च्याऽगन्निति स वै सह देवः सार्ञ्जयस्तदप्प्येतन्निवचनमिवाऽस्त्यन्न्यद्वा ऽअरे सुप्ला नाम दध ऽइति स ऽएतेन यज्ञेनेजे स ऽएतेन यज्ञेनेष्ट्वा येयः सृञ्जयानां प्रजातिर्या श्रीरेतद्बभूवैताꣳ ह वै प्प्रजातिं प्रजायत ऽएताꣳ श्रियं गच्छति य ऽएवं विद्वानेतेन यज्ञेन यजते तस्माद्वा ऽएतेन यजेत ॥ ४ ॥ तेनो ह तत ऽईजे । देवभागः श्रौतर्षः स ऽउभयेषां कुरूणां च सृञ्जयानां च पुरोहित ऽआस परमता वै सा यो न्न्वेवैकस्य राष्ट्रस्य पुरोहितोऽसत्सा न्न्वेव परमता किमु यो द्वयोः परमतामिव ह वै गच्छति य ऽएवं विद्वानेतेन यज्ञेन यजते तस्माद्वा ऽएतेन यजेत ॥ ५ ॥ तेनो ह तत ऽईजे । दक्षः पार्वतिस्त ऽइमेऽप्प्येतर्हि *दाक्षायणा राज्यमिवैव प्प्राप्ता

* दाक्षायणयज्ञो नाम एकस्मिन् प्रयोगे द्विर्द्विरनुष्ठेयो यागविशेषो दर्शपूर्णमासयाग एव गुणविकृतिभूतो न कर्मान्तरम् । तेन दाक्षायणयज्ञानुष्ठानपक्षे दर्शपूर्णमासयोरभिधा 'गुणविधाने वा सन्निधिसम्पद्वचनाभ्याम्' ( का॰ श्रौ॰ सू॰ ४ ४ ३ । ) इति ।

राज्यमिह वै प्राप्नोति य ऽएवं विद्वानेतेन यज्ञेन यजते तस्मा-
द्वा ऽएतेन यजते स वा ऽएकैक ऽएवाऽनूची नाऽहं पुरोडाशो
भवत्येतेनो हाऽस्याऽसपत्नानुपबाधा श्रीर्भवति स वै द्वे
पौर्णमास्यौ यजते द्वे ऽअमावास्ये द्वे वै मिथुनं मिथुन-
मेवैतत्प्रजननं क्रियते ॥ ६ ॥ अथ यत्पूर्वेद्युः । अग्नीषो-
मीयेण यजते पौर्णमास्यां ते द्वे देवते द्वे वै मिथुनं
मिथुनमेवैतत्प्रजननं क्रियते ॥ ७ ॥ अथ प्रातः । आग्नेयः
पुरोडाशो भवत्यैन्द्रः सान्नाय्यं ते द्वे देवते द्वे वै मिथुनं
मिथुनमेवैतत्प्रजननं क्रियते ॥ ८ ॥ अथ यत्पूर्वेद्युः । ऐन्द्रा-
ग्नेन यजतेऽमावास्यायां ते द्वे देवते द्वे वै मिथुनं मिथुनमेवै-
तत्प्रजननं क्रियते ॥ ९ ॥ अथ प्रातः । आग्नेयः पुरोडाशो
भवति मैत्रावरुणी पयस्या नेद्यज्ञाद्वयानीति न्न्वेवाऽऽग्नेयः
पुरोडाशोऽथैतावेव मित्रावरुणौ द्वे देवते द्वे वै मिथुनं
मिथुनमेवैतत्प्रजननं क्रियत ऽएतदु हाऽस्य तद्रूपं येन
बहुर्भवति येन प्रजायते ॥ १० ॥ अथ यत्पूर्वेद्युः । अग्नी-
षोमीयेण यजते पौर्णमास्यां यमेवाऽमुमुपवसथेऽग्नीषोमीयं
पशुमालभते स ऽएवाऽस्य सः ॥ ११ ॥ अथ प्रातः ।
आग्नेयः पुरोडाशो भवत्यैन्द्रः सान्नाय्यं प्रातः सवनमेवा-
ऽस्याऽऽग्नेयः पुरोडाश ऽआग्नेयः हि प्रातः सवनमथैन्द्रः
सान्नाय्यं माध्यन्दिनमेवाऽस्य तत्सवनमैन्द्रः हि माध्य-
न्दिनः सवनम् ॥ १२ ॥ अथ यत्पूर्वेद्युः । ऐन्द्राग्नेन यज-
तेऽमावास्यायां तृतीयसवनमेवाऽस्य तद्वैश्वदेवं वै तृतीय-
सवनमिन्द्राग्नी वै विश्वेदेवाः ॥ १३ ॥ अथ प्रातः। आग्नेयः

पुरोडाशो भवति मैत्रावरुणी पयस्या नेद्यज्ञादुयानीति न्वेवाऽऽग्नेयः पुरोडाशोऽथ यामेवाऽमूं मैत्रावरुणीं वशामनूबन्ध्यामालभते सैवाऽस्य मैत्रावरुणी पयस्या स पौर्णमासेन चाऽमावास्येन चेष्ट्वा यावत्सौम्येनाऽध्वरेणेष्ट्वा जयति तावज्जयति तदु खलु महायज्ञो भवति॥ १४ ॥ अथ यत्पूर्वेद्युः। अग्नीषोमीयेण यजते पौर्णमास्यामेतेन वाऽइन्द्रो वृत्रमहन्नेतेनो ऽएव व्यजयत याऽस्येयं विजितिस्तां तथो ऽएवैष ऽएतेन पाप्मानं द्विषन्तं भ्रातृव्यꣳ हन्ति तथो ऽएव विजयतेऽथ यत्सन्नयत्यामावास्यं वै सान्नाय्यं दूरे तद्यदमावास्येति क्षिप्र ऽएवैतद्वृत्रं जघ्नुषे तमेतेन रसेनाऽप्रीणꣳक्षिप्रे ह वै पाप्मानमपहते य ऽएवं विद्वान्पौर्णमास्याꣳ सन्नयत्येष वै सोमो राजा देवानामन्नं यच्चन्द्रमास्तमेतत्पूर्वेद्युरभिषुण्वन्ति प्रातर्भक्षयिष्यन्तस्तमेतद्भक्षयन्ति यदपक्षीयते ॥ १५ ॥ अथ यत्पूर्वेद्युः। अग्नीषोमीयेण यजते पौर्णमास्यामभिषुणोत्येवैनमेतत्तस्मिन्नभिषुत ऽएतꣳ रसं दधात्येतेन रसेन तीव्रीकरोति स्वदयति ह वै देवेभ्यो हव्यꣳ स्वदते हाऽस्य देवेभ्यो हव्यं य ऽएवं विद्वान्पौर्णमास्याꣳ सन्नयति ॥ १६ ॥ अथ यत्पूर्वेद्युः। ऐन्द्राग्नेन यजतेऽमावास्यायां दर्शपूर्णमासयोर्वै देवते स्तऽइन्द्राग्नी ऽएव ते ऽएवैतदञ्जसा प्रत्यक्षं यजत्यञ्जसा ह वाऽअस्य दर्शपूर्णमासाभ्यामिष्टं भवति य ऽएवमेतद्वेद॥१७॥ अथ प्रातः। आग्नेयः पुरोडाशो भवति मैत्रावरुणी पयस्या नेद्यज्ञादुयानीति न्वेवाऽऽग्नेयः पुरोडाशोऽथैतावेवाऽर्द्धमासौ

मित्रावरुणौ य ऽएवाऽऽपूर्य्यते स वरुणो योऽपक्षीयते स मित्रस्तावेताथ्ठ रात्रिमुभौ समागच्छतस्तदुभावेवैतत्सह सन्तौ प्रीणाति सर्वं ह वा ऽअस्य प्रीतं भवति सर्वमाप्तं य ऽएवमेतद्वेद ॥ १८ ॥ तद्वा ऽएताथ्ठ रात्रिम् । मित्रो वरुणे रेतः सिञ्चति तदेतेन रेतसा प्रजायते यदापूर्य्यते तद्यदेषाऽत्र मैत्रावरुणी पयस्याऽवक्लृप्ततमा भवति ॥ १९ ॥ सान्नाय्यभाजना वा ऽअमावास्या । तद्दस्तत्पौर्णमास्यां क्रियते स यद्वाऽत्राऽपि सन्नयेज्जामि कुर्य्यात्समदं कुर्य्यात्तदेनमन्नय ऽओषधिभ्यः सम्भृत्याहुतिभ्योऽधिजनयति स ऽएष ऽआहुतिभ्यो जातः पश्चाद्ददृशे ॥ २० ॥ मिथुनाद्विवा ऽएनमेतत्प्रजनयति । योषा पयस्या रेतो वाजिनं तद्वा ऽअनुष्ठ्या यन्मिथुनाज्जायते तदेनमेतस्मान्मिथुनात्प्रजननात्प्रजनयति तस्मादेषाऽत्र पयस्या भवति ॥ २१ ॥ अथ वाजिभ्यो वाजिनं जुहोति । ऋतवो वै वाजिनो रेतो वाजिनं तदृतुष्वेवैतद्रेतः सिच्यते तदृतवो रेतः सिक्तमिमाः प्रजाः प्रजनयन्ति तस्माद्वाजिभ्यो वाजिनं जुहोति ॥२२॥ स वै पश्चादिव यज्ञस्य जुहोति । पश्चाद्वै परीत्य वृषा योषामधिद्रवति तस्याथ्ठ रेतः सिञ्चति स वै प्रागेवाऽग्ने जुहोत्यग्ने वीहीत्यनुवषट्करोति तत्स्विष्टकृद्भाजनं* स वै प्रागेव जुहोति ॥ २३ ॥ अथ दिशो व्याघारयति । 'दिशः प्रदिश ऽआदिशो विदिश ऽउद्दिशो दिग्भ्यः स्वाहे'ति पञ्च

* 'ख ग च' पुस्तकेषु 'तदृतुष्वेवैतत्' इत्येव लभ्यते ।

(१) शु० स० अ० ६ क० १९ ।

दिशः पञ्चर्त्तवस्तदृतुभिरेवैतद्दिशो मिथुनीकरोति ॥ २४ ॥
तद्वै पञ्चैव भक्षयन्ति । होता चाऽध्वर्य्युश्च ब्रह्मा चाऽग्नीच्च यजमानः पञ्च वा ऽऋतवस्तदृतूनामेवैतद्रूपं क्रियते तदृतुष्वेवैतद्रेतः सिक्तं प्रतिष्ठापयति प्रथमो यजमानो भक्षयति प्रथमो रेतः परिगृह्णानीत्यथो ऽअप्युत्तमो मय्युत्तमे रेतः प्रतितिष्ठादित्युपहूत ऽउपह्वयस्वेति सोममेवैतत्कुर्वन्ति ॥ २५ ॥

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥



प्रजापतिर्ह वा ऽइदमग्र ऽएक ऽएवाऽऽस । स ऽऐक्षत कथं नु प्रजायेयेति सोऽश्राम्यत्स तपोऽतप्यत स प्रजा ऽअसृजत ता ऽअस्य प्रजाः सृष्टाः पराबभूवुस्तानीमानि वयाᳪसि पुरुषो वै प्रजापतेर्नेदिष्ठं द्विपाद्वा ऽअयं पुरुषस्तस्माद् द्विपादो वयाᳪसि ॥ १ ॥ स ऽऐक्षत प्रजापतिः । यथा न्वेव पुरैकोऽभूवमेवमु न्वेवाप्येतर्ह्येक ऽएवाऽस्मीति स द्वितीयाः ससृजे ता ऽअस्य परेव बभूवुस्तदिदं क्षुद्रᳪ सरीसृपं यदन्यत्सर्प्पेभ्यस्तृतीयाः ससृज ऽइत्याहुस्ता ऽअस्य परेव बभूवुस्त ऽइमे सर्प्पा ऽएता ह न्वेव द्वयीर्याज्ञवल्क्य ऽउवाच त्रयीरु तु पुनर्ऋचा ॥ २ ॥ सोऽर्च्चञ्छ्राम्यन्प्रजापतिरीक्षाञ्चक्रे । कथं नु मे प्रजाः सृष्टाः पराभवन्तीति स हैतदेव ददर्शाऽनशनतया वै मे प्रजाः

प्राभवन्तीति स ऽआत्मन ऽएवाऽग्रे स्तनयोः पय ऽआप्याययाञ्चक्रे स प्रजा ऽअसृजत ता ऽअस्य प्रजाः सृष्टा स्तनावेवाऽभिपद्य तास्ततः सम्बभूवुस्ता ऽइमा ऽअपराभूताः ॥ ३ ॥ तस्मादेतदृषिणाऽभ्यनूक्तम् । प्रजा ह तिस्रो ऽअत्यायमीयुरिति तद्याः पराभूतास्ता ऽएवैतदभ्यनूक्तन्न्यन्या ऽअर्कमभितो विविश्र ऽइत्यग्निर्वा ऽअर्कस्तद्या ऽइमाः प्रजा ऽअपराभूतास्ता ऽअग्निमभितो निविष्टास्ताऽएवैतदभ्यनूक्तम् ॥ ४ ॥ महद्ध तस्थौ भुवनेष्वन्तरिति । प्रजापतिमेवैतदभ्यनूक्तं पवमानो हरित ऽआविवेशेति दिशो वै हरितस्ता ऽअयं वायुः पवमान ऽआविष्टस्ता ऽएवैषर्गभ्यनूक्ता ता ऽइमाः प्रजास्तथैव प्रजायन्ते यथैव प्रजापतिः प्रजा ऽअसृजतेदः हि यदेव स्त्रियै स्तनावाप्यायेते ऽऊधः पशूनामथैव यज्जायते तज्जायते तास्तत स्तनावेवाऽभिपद्य सम्भवन्ति ॥ ५ ॥ तद्वै पय ऽएवाऽन्नम् । एतद्ध्यग्रे प्रजापतिरन्नमजनयत तद्वा ऽअन्नमेव प्रजा ऽअन्नाद्धि सम्भवन्तीदः हि यासां पयो भवति स्तनावेवाऽभिपद्य तास्ततः सम्भवन्त्यथ यासां पयो न भवति जातमेव ता ऽअथाऽदयन्ति तदु ता ऽअन्नादेव सम्भवन्ति तस्माद्वन्नमेव प्रजाः ॥ ६ ॥ स यः प्रजाकामः । एतेन हविषा यजतऽआत्मानमेवैतद्यज्ञं विधत्ते प्रजापतिं भूतः ॥ ७ ॥[†] स वा ऽआग्नेयोऽष्टाकपालः पुरोडाशो भवति । अग्निर्वै देवतानां मुखं प्रजनयिता स प्रजापतिस्तस्मादाग्नेयो भवति ॥ ८ ॥

† अत्र शतम् १२०० ।

अथ सौम्यश्चरुर्भवति। रेतो वै सोमस्तदग्नौ प्रजनयितरि सोमः रेतः सिञ्चति तत्पुरस्तान्मिथुनं प्रजननम् ॥ ९ ॥ अथ सावित्रः। द्वादशकपालो वाऽष्टाकपालो वा पुरोडाशो भवति, सविता वै देवानां प्रसविता प्रजापतिर्म्मध्यतः प्रजनयिता तस्मात्सावित्रो भवति ॥ १० ॥ अथ सारस्वतश्चरुर्भवति। पौष्णश्चरुर्य्योषा वै सरस्वती वृषा पूषा तत्पुनर्म्मिथुनं प्रजननमेतस्माद्वा ऽउभयतो मिथुनात्प्रजननात्प्रजापतिः प्रजाः ससृज ऽइतश्चोर्द्ध्वा ऽइतश्चाऽवाचीस्तथो ऽएवैष ऽएतस्मादुभयत ऽएव मिथुनात्प्रजननात्प्रजाः सृजत ऽइतश्चोर्द्ध्वा ऽइतश्चाऽवाचीस्तस्माद्वा ऽएतानि पञ्च हवीꣳषि भवन्ति ॥११॥ अथाऽतः पयस्याया ऽएवाऽऽयतनम्। मारुतस्तु सप्तकपालो विशो वै मरुतो देवविशस्ता हैदमनिपेद्वा ऽइव चेरुस्ताः प्रजापतिं यजमानमुपेत्योचुर्वि वै ते मथिष्यामह ऽइमाः प्रजा या ऽएतेन हविषा सक्ष्यस ऽइति ॥ १२ ॥ स ऽऐक्षत प्रजापतिः। पुरा मे पूर्वाः प्रजा ऽअभूवन्निमा ऽउ चेदिमे विमथ्नते न ततः किञ्चन परिशेक्ष्यत ऽइति तेभ्य ऽएतं भागमकल्पयदेतं मारुतः सप्तकपालं पुरोडाशः स ऽएष मारुतः सप्तकपालस्तद्यत्सप्तकपालो भवति सप्त-सप्त हि मारुतो गणस्तस्मान्मारुतः सप्तकपालः पुरोडाशो भवति ॥ १३ ॥ तं वै स्वतवोभ्य ऽइति कुर्य्यात्। स्वयः हि तु ऽएतं भागमकुर्वतोतो स्वतवोभ्यो याज्यानुवाक्येन विन्दन्ति स ऽउ खलु मारुत ऽएव स्यात्स वा ऽएष प्रजाभ्य-

ऽएवाऽहिᳫंसायै क्रियते तस्मान्मारुतः ॥ १४ ॥ अथाऽतः पयस्यैव । पयसो वै प्रजाः सम्भवन्ति पयसः सम्भूतास्तद्यत ऽएव सम्भूता यतः सम्भवन्ति तद्देवाऽऽभ्य ऽएतत्करोति तथाः पूर्वैर्हविर्भिः प्रजाः सृजते ता ऽएतस्मात्पयसऽएतस्यै पयस्यायै सम्भवन्ति ॥१५॥ तस्यां मिथुनमस्ति । योषा पयस्या रेतो वाजिनं तस्मान्मिथुनाद्विश्वमसंमितमनु प्राऽजायत तद्यदेतस्मान्मिथुनाद्विश्वमसंमितमनु प्राऽजायत तस्माद्वैश्वदेवी भवति ॥१६॥ अथ द्यावापृथिव्य ऽएककपालः पुरोडाशो भवति । एतैर्वै हविर्भिः प्रजापतिः प्रजाः सृष्ट्वा ता द्यावापृथिवीभ्यां पर्य्यगृह्णात्ता ऽइमा द्यावापृथिवीभ्यां परिगृहीतास्तथो ऽएवैष ऽएतद्या ऽएतैर्हविर्भिः प्रजाः सृजते ता द्यावापृथिवीभ्यां परिगृह्णाति तस्माद् द्यावापृथिव्य ऽएककपालः पुरोडाशो भवति ॥ १७ ॥ अथाऽत ऽआवृदेव । नोपकिरन्त्युत्तरवेदिं विसृष्टमसत्सर्वमसद्वैश्वदेवमसदिति त्रेधा वर्हिः सन्नद्धं भवति तत्पुनरेकधैतद्धि प्रजननस्य रूपं प्रजननमु हीदं पिता माता यज्जायते तत्तृतीयं तस्मात्त्रेधा सत्पुनरेकधा प्रस्व ऽउपसन्नद्धा भवन्ति तं प्रस्तरं गृह्णाति प्रजननमु हीदं प्रजननमु हि प्रस्वस्तस्मात्प्रसूः प्रस्तरं गृह्णाति ॥१८॥ आसाद्य हवीᳫंष्यग्निं मन्थति । अग्निः ह वै जायमानमनु प्रजापतेः प्रजा जज्ञिरे तथो ऽएवैतस्याऽग्निमेव जायमानमनु प्रजा जायन्ते तस्मादासाद्य हवीᳫंष्यग्निं मन्थति ॥ १९ ॥ नवप्रयाजं भवति । नवाऽनुयाजं दशाक्षरा वै विराड्‌थैताम्

भयतोऽन्यूनां विराजं करोति प्रजननायैतस्माद्वा ऽउभयतोऽन्यूनात्प्रजननात्प्रजापतिः प्रजाः ससृज ऽइतश्चोर्ध्वा ऽइतश्चाऽवाचीस्तथो ऽएवैष ऽएतस्मादुभयत ऽएव न्यूनात्प्रजननात्प्रजाः सृजत ऽइतश्चोर्ध्वा ऽइतश्चाऽवाचीस्तस्मान्नवप्रयाजं भवति नवाऽनुयाजम् ॥२०॥ त्रीणि समिष्टयजूꣳष्यपि भवन्ति । ज्याय ऽइव हीदꣳ हविर्यज्ञाद्यत्र नवप्रयाजं नवाऽनुयाजमथो ऽअप्येकमेव स्याद्धविर्यज्ञो हि तस्य प्रथमजो गौर्दक्षिणा ॥ २१ ॥ एतेन वै प्रजापतिः यज्ञेनेष्ट्वा । येयं प्रजापतेः प्रजातिर्या श्रीरेतद्बभूवैताꣳ ह वै प्रजातिं प्रजायत ऽएताꣳ श्रियं गच्छति य ऽएवं विद्वानेतेन यज्ञेन यजते तस्माद्वा ऽएतेन यजेत ॥ २२ ॥

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

†वैश्वदेवेन वै प्रजापतिः । प्रजाः ससृजे ता ऽअस्य प्रजाः सृष्टा वरुणस्य यवाञ्जक्षुर्वरुण्यो ह वा ऽअग्रे यवस्तद्यन्वेव वरुणस्य यवान्प्राऽदꣳस्तस्माद्वरुणप्रघासा नाम ॥१॥ ता वरुणो जग्राह । ता वरुणगृहीताः परिदीर्णा ऽअनन्त्यश्च प्राणन्त्यश्च शिश्यिरे च निषेदुश्च प्राणोदानौ हैवाऽऽभ्यो नाऽपचक्रमतुरथाऽन्याः सर्वा देवता ऽअपचक्रमुस्तयोर्है-

† चातुर्मास्यशब्देन इत प्रभृति विधास्यमानानि वैश्वदेव-वरुणप्रघास साकमेध शुनासीरीयाख्यानि चत्वारि पर्वाण्यभिधीयन्ते । तत्र "वसन्ते वैश्वदेवेन यजेत । प्रावृषि वरुणप्रघासैः । शरदि साकमेधैः" इति । ( आप० श्रौ० ८ ४ १३ )। का० श्रौ० ५. १ १ सूत्रे चेह विवेचनीये ।

वाऽस्य हेतोः प्रजा न पराबभूवुः ॥ २ ॥ ता ऽएतेन हविषा प्रजापतिरभिषज्यत् । तद्याश्चैवाऽस्य प्रजा जाता ऽआसन्याश्चाऽजातास्ता ऽउभयीर्वरुणपाशात्प्रा-ऽमुञ्चत्ता ऽअस्याऽनमीवा ऽअकिल्विषाः प्रजाः *प्राऽजायन्त ॥ ३ ॥ अथ यदेष ऽएतैश्चतुर्थे मासि यजते । तन्नाऽऽह न्वेवैतस्य तथा प्रजा वरुणो गृह्णातीति देवा ऽअकुर्वन्निति †न्वेवैष ऽएतत्करोति याश्च ‡न्वेवाऽस्य प्रजा जाता याश्चाऽजातास्ता ऽउभयीर्वरुणपाशात्प्रमुञ्चति ता ऽअस्या-ऽनमीवा ऽअकिल्विषाः प्रजाः ‡‡प्रजायन्ते तस्माद्वा ऽएष ऽएतैश्चतुर्थे मासि यजते ॥ ४ ॥ तद्वै द्वे वेदी द्वावग्नी भवतः । तद्यद् द्वे वेदी द्वावग्नी भवतस्तदुभयत ऽएवैतद्वरुण-पाशात्प्रजाः प्रमुञ्चतीतश्चोर्ध्वा ऽइतश्चाऽवाचीस्त-स्माद् द्वे वेदी द्वावग्नी भवतः ॥ ५ ॥ स ऽउत्तरस्यामेव वेदौ । उत्तरवेदिमुपकिरति न दक्षिणस्यां क्षत्रं वै वरुणो विशो मरुतः क्षत्रमेवैतद्विश ऽउत्तरं करोति तस्मादुपर्या-सीनं क्षत्रियमधस्तादिमाः प्रजा ऽउपाऽऽसते तस्मादुत्तर-स्यामेव वेदा ऽउत्तरवेदिमुपकिरति न दक्षिणस्याम् ॥ ६ ॥ अथैतान्येव पञ्च हवीꣳष्यपि भवन्ति । एतैर्वै हविर्भिः प्रजापतिः प्रजा ऽअसृजतैतैरुभयतो वरुण-

* 'ग' पुस्तके 'प्राजायत' इति ।

† 'ग-च' पुस्तकयो 'न्वेवैष' इति ।

‡ 'न्वेवाऽस्य' इत्युक्त पुस्तकयोरेव लभ्यते ।

‡‡ 'प्रजायते' इत्यपि 'ग च' पुस्तकयोरेव ।

पाशात्प्रजाः प्प्राऽमुञ्चदितश्चोदृर्ध्वा ऽइतश्चाऽवाचीस्त-
स्माद्वा ऽएतानि पञ्च हवीꣳष्यपि भवन्ति ॥ ७ ॥ अथैन्द्राग्नो
द्वादशकपालः पुरोडाशो भवति । प्प्राणोदानौ वा ऽइन्द्राग्नी
तद्यथा पुण्ण्यं चक्षुषे पुण्ण्यं कुर्य्यादेवं तत्तयोर्हैवाऽस्य हेतोः
प्प्रजा न प्पराबभूवुस्तत्प्राणोदानाभ्यामेवैतत्प्रजा भिष-
ज्यति प्प्राणोदानौ प्प्रजासु दधाति तस्मादैन्द्राग्नो द्वादश-
कपालः पुरोडाशो भवति ॥ ८ ॥ उभयत्र पयस्ये भवतः ।
पयसो वै प्प्रजाः सम्भवन्ति पयसः सम्भूतास्तद्यत
ऽएव सम्भूता यतः सम्भवन्ति तत ऽएवैतदुभयतो
व्वरुणपाशात्प्रजाः प्प्रमुञ्चतीतश्चोर्द्ध्वा ऽइतश्चाऽवा-
चीस्तस्मादुभयत्र पयस्ये भवतः ॥ ९ ॥ व्वारुण्युत्तरा
भवति । व्वरुणो ह वा ऽअस्य प्प्रजा ऽअगृह्णात्तत्प्रत्यक्षं
व्वरुणपाशात्प्रजाः प्प्रमुञ्चति मारुती दक्षिणाऽजामितायै
ग्न्वेव मारुती भवति जामि ह कुर्य्याद्यदुभे वारुण्यौ
स्यातामतो ह वा ऽअस्य दक्षिणतो मरुतः प्प्रजा ऽअजि-
घाꣳसꣳस्तानेतेन भागेनाऽशमयत्तस्मान्मारुती दक्षिणा
॥ १० ॥ तयोरुभयोरेव करीराण्ण्यावपति । कं वै प्प्रजापतिः
प्प्रजाभ्यः करीरैरकुरुत कम्वेवैष ऽएतत्प्रजाभ्यः कुरुते
॥ ११ ॥ तयोरुभयोरेव शमीपलाशान्न्यावपति । शं वै
प्प्रजापतिः प्प्रजाभ्यः शमीपलाशैरकुरुत शम्वेवैष ऽएत-
त्प्रजाभ्यः कुरुते ॥ १२ ॥ अथ काय ऽएककपालः पुरा-
डाशो भवति । कं वै प्प्रजापतिः प्प्रजाभ्यः कायेनैककपालेन
पुरोडाशेनाऽकुरुत कम्वेवैष ऽएतत्प्रजाभ्यः कायेनैकक-

पालेन पुरोडाशेन कुरुते तस्मात्काय ऽएककपालः पुरोडाशो भवति ॥ १३ ॥ अथ पूर्वेद्युः । अन्वाहार्य्यपचनेऽतुषानिव यवान्कृत्वा तानीषदिवोपतप्य तेषां *करम्भपात्राणि कुर्वन्ति यावन्तो गृह्याः स्युस्तावन्त्येकेनाऽतिरिक्तानि ॥ १४ ॥ तत्राऽपि मेषं च मेषीं च कुर्वन्ति । तयोर्म्मेषे च मेष्यां च यद्यनैडकीरूर्णा विन्देत्ताः प्रणिज्य निश्लेपयेद्यद्यु ऽअनैडकीर्न्न विन्देदुथो ऽअपि कुशोर्णा ऽएव स्युः ॥ १५ ॥ तद्यन्मेषश्च मेषी च भवतः । एष वै प्रत्यक्षं वरुणस्य पशुर्य्यन्मेषस्तत्प्रत्यक्षं वरुणपाशात्प्रजाः प्रमुञ्चति यवमयौ भवतो यवान्हि जक्षुषीर्वरुणोऽगृह्णान्मिथुनौ भवतो मिथुनादेवैतद्वरुणपाशात्प्रजाः प्रमुञ्चति ॥ १६ ॥ स ऽउत्तरस्यामेव पयस्यायां मेषीमवदधाति । दक्षिणस्यां मेषमेवमिव हि मिथुनं क्लृप्तमुत्तरतो हि स्त्री पुमांसमुपशेते ॥ १७ ॥ स सर्वाण्येव हवीꣳष्यध्वर्य्युः । उत्तरस्यां वेदावासादयत्यथैतामेव पयस्यां प्रतिप्रस्थाता दक्षिणस्यां वेदावासादयति ॥ १८ ॥ आसाद्य हवीꣳष्यग्निं मन्थति । अग्निं †मन्थित्वाऽनुप्रहृत्याऽभिजुहोत्यथाऽध्वर्य्युरेवाऽऽहाऽग्नये समिध्यमानायाऽनुब्रूहीति ता ऽउभावेवेध्मावभ्याधत्त ऽउभौ समिधौ परिशिꣳष्ट ऽउभौ पूर्वावाघारावाघारयतो ऽथाध्वर्य्युरेवाहाऽग्निमग्नीत्संमृड्ढीत्यसम्मृष्टमेव भवति सम्प्रेषितम् ॥१९॥ अथ प्रतिप्रस्थाता प्रतिपरैति ।

* दीपपात्रसदृशानि यवपिष्टनिर्मितानि करम्भपात्राणि भवन्ति ।

† 'क' पुस्तके 'मथित्वा' इति पाठः । स एव भाष्यकारसम्मतः ।

स पत्नीमुदानेष्यन्पृच्छति केन चरसीति वरुण्यं वा एत-त्स्त्री करोति यदन्यस्य सत्यन्येन चरत्यथो नेन्मेऽन्तः शल्या जुहवदिति तस्मात्पृच्छति निरुक्तं वा एनः कनीयो भवति सत्यं हि भवति तस्माद्वेव पृच्छति सा यन्न प्रतिजानीत ज्ञातिभ्यो हाऽस्यै तदहितं स्यात् ॥ २० ॥ तां वाचयति । '[1]प्रघासिनो हवामहे मरुतश्च रिशादसः । करम्भेण सजोषस' इति यथा पुरोऽनुवाक्यैवमेषैतयैवै-नानेतेभ्यः पात्रेभ्यो ह्वयति ॥ २१ ॥ तानि वै प्रति पुरुषम् । यावन्तो गृह्याः स्युस्तावन्त्येकेनाऽतिरिक्तानि भवन्ति तत्प्रतिपुरुषमेवैतदेकैकेन या अस्य प्रजा जातास्ता वरुणपाशात्प्रमुञ्चत्येकेनाऽतिरिक्तानि भवन्ति तद्या एवाऽस्य प्रजा अजातास्ता वरुणपाशात्प्रमुञ्चति तस्मादेकेनाऽतिरिक्तानि भवन्ति ॥ २२ ॥ पात्राणि भवन्ति पात्रेषु ह्यशनमश्यते यवमयानि भवन्ति यवाह्नि जक्षु-षीर्वरुणोऽगृह्णाच्छूर्पेण जुहोति शूर्पेण ह्यशनं क्रियते पत्नी जुहोति मिथुनादेवैतद्वरुणपाशात्प्रजाः प्रमुञ्चति ॥ २३ ॥ पुरा यज्ञात्पुराऽऽहुतिभ्यो जुहोति । आहुतादो वै विशो विशो वै मरुतो यत्र वै प्रजापतेः प्रजा वरुणगृहीताः परिदीर्ण्णा अनत्यश्च प्राणत्यश्च शिश्यिरे च निषेदुश्च तद्धाऽऽसां मरुतः पाप्मानं विमेथिरे तथो एवैतस्य प्रजानां मरुतः पाप्मानं विमथ्नते तस्मात्पुरा यज्ञात्पुरा-

---

* 'ऽन्त शल्या' इति 'ग-च' पुस्तकयो ।

(१) शु० सं० अ० ३ क० ४४ ।

ऽऽहुतिभ्यो जुहोति ॥ २४ ॥ स वै दक्षिणेऽग्नौ जुहोति । 'यद्ग्रामे यदरण्य' ऽइति ग्रामे वा ह्यरण्ये वैनः क्रियते 'यत्सभायां यदिन्द्रिय' ऽइति यत्सभायामिति यन्मानुष-ऽइति तदाह यदिन्द्रिय ऽइति यद्देवत्रेति तदाह 'यदेनश्च-कृमा वयमिदं तदवयजामहे स्वाहे'ति यत्किं च वयमेन-श्चकृमेदं वयं तस्मात्सर्वस्मात्प्रमुच्यामह ऽइत्येवैतदाह ॥ २५ ॥ अथैन्द्रीं मरुत्वतीं जपति । यत्र वै प्रजापतेः प्रजानां मरुतः पाप्मानं विमेथिरे तद्धेक्षाञ्चक्र ऽइमे ह मे प्रजा न विमथ्नीरन्निति ॥ २६ ॥ स ऽएतामैन्द्रीं मरुत्वतीमजयत् । क्षत्रं वा ऽइन्द्रो विशो मरुतः क्षत्रं वै विशो निषेद्धा निषिद्धा ऽअसन्निति तस्मादैन्द्री ॥ २७ ॥ 'मो षू णः । इन्द्राऽत्र पृत्सु देवैरस्ति हि ष्मा ते शुष्मि-न्नवयाः । महश्चिद्यस्य मीढुषो यव्या हविष्मतो मरुतो वन्दते गीरि'ति ॥ २८ ॥ अथैनां वाचयति । 'अक्रन्कर्म्म कर्मकृत' ऽइत्यकर्हि कर्म्म कर्म्म कृतः 'सह वाचा मयोभुवे'ति सह हि वाचाऽक्रन् 'देवेभ्यः कर्म्मकृत्वे'ति देवेभ्यो हि कर्म्मकृत्वा 'ऽस्तं प्रेत सचाभुव' ऽइत्यन्यतो ह्योढया सह *भवन्ति तस्मादाह सचाभुव ऽइत्यस्तं प्रेतेति जघनार्द्धो वा ऽएष यज्ञस्य यत्पत्नी तामेतत्प्राचीं यज्ञं

(१) शु० सं० अ० ३ क० ४५ । (२) शु० सं० अ० ३ क० ४५ । (३) शु० सं० अ० ३ क० ४५ । (४) शु० सं० अ० ३ क० ४६ । (५) शु० सं० अ० ३ क० ४७ । (६) शु० सं० अ० ३ क० ४७ । (७) शु० सं० अ० ३ क० ४७ । (८) शु० सं० अ० ३ क० ४७ ।

* 'भवति' इति 'क' पुस्तके पाठः ।

प्रासीपदद् गृहा वा ऽअस्तं गृहाः प्रतिष्ठा तद् गृहेष्वेवैना-मेतत्प्रतिष्ठायां प्रतिष्ठापयति ॥ २९ ॥ प्रतिपराणीयोदैति प्रतिप्रस्थाता । सम्मृजन्त्यग्नीः सम्मृष्टेऽग्नौ ता ऽउभा-वेवोत्तरावाघारावाघारयतोऽथाऽद्धर्य्युरेवाऽऽश्राव्य होतारं प्रवृणीते प्रवृतो होतोत्तरस्यै वेदेहोंतृषदन ऽउपविशत्युपविश्य प्रसौति ता ऽउभावेव प्रसूतौ स्रुच ऽआदायाऽतिक्रामतो-ऽतिक्रम्म्याऽऽश्राव्याऽद्धर्य्युरेवाऽऽह समिधो यजेति यज-यजेति चतुर्थे–चतुर्थे प्रयाजे समानयमानौ नवभिः प्रयाजैश्चरतः ॥३०॥ अथाऽद्धर्य्युरेवाऽऽहाऽग्नयेऽनुब्रूहीति। आग्नेयमाज्यभागं ता ऽउभावेव चतुराज्यस्याऽवदायाऽति-क्रामतोऽतिक्रम्म्याऽऽश्राव्याऽद्धर्य्युरेवाऽऽहाऽग्निं यजेति ता ऽउभावेव वषट्कृते जुहुतः ॥ ३१ ॥ अथाऽद्ध्वर्य्युरेवाऽऽह सोमायाऽनुब्रूहीति । सौम्म्यमाज्यभागं ता ऽउभावेव चतुराज्यस्याऽवदायाऽतिक्रामतोऽतिक्रम्म्याऽऽश्राव्याऽद्ध-र्य्युरेवाऽऽह सोमं यजेति ता ऽउभावेव वषट्कृते जुहुतः ॥ ३२ ॥ तद्यत्किञ्च वाचा कर्त्तव्यम् । अद्ध्वर्य्युरेव तत्करोति न प्रतिप्रस्थाता तद्यदद्ध्वर्य्युरेवाऽऽश्रावयतीहैव यत्र वषट् क्रियते ॥ ३३ ॥ कृतानुकर ऽएव प्रतिप्रस्थाता । क्षत्रं वै वरुणो विशो मरुतस्तत् क्षत्रायैवैतद्विशं कृतानुकरा-मनुवर्त्मानं करोति प्रत्युद्यामिनीं ह क्षत्राय विशं कुर्य्याय-दपि प्रतिप्रस्थाताऽऽश्रावयेत्तस्मान्न प्रतिप्रस्थाताऽऽश्राव-यति ॥ ३४ ॥ पाणावेव प्रतिप्रस्थाता । स्रुचौ कृत्वो-पाऽऽस्तेऽथाऽद्धर्य्युरेवैतैर्हविर्भिः प्रचरत्याग्नेयेनाऽष्टाकपा-

लेन पुरोडाशेन सौम्येन चरुणा सावित्रेण द्वादशकपालेन वाऽष्टाकपालेन वा पुरोडाशेन सारस्वतेन चरुणा पौष्णेन चरुणैन्द्राग्नेन द्वादशकपालेन पुरोडाशेन ॥ ३५ ॥ अथैताभ्यां पयस्याभ्यां प्रचरिष्यन्तौ विपरिहरतः । स यो मेषो भवति मारुत्यां तं वारुण्यामवदधाति या मेषी भवति वारुण्यां तां मारुत्यामवदधाति तद्यदेवं विपरिहरतः क्षत्रं वै वरुणो वीर्यंपुमान्वीर्य्यमेवैतत्क्षत्रे धत्तोऽवीर्य्या वै स्त्री विशो मरुतस्तदवीर्य्यामेवैतद्विशं कुरुतस्तस्मादेवं विपरिहरतः ॥ ३६ ॥ अथाऽऽध्वर्य्युरेवाऽऽह वरुणायाऽनुब्रूहीति । स उपस्तृणीत आज्यमथाऽस्यै वारुण्यै पयस्यायै द्विरवद्यति सोऽन्यतरेणाऽवदानेन सह मेषमवदधात्यथोपरिष्टादाज्यस्याऽभिघारयति प्रत्यनक्त्यवदाने अतिक्रामत्यतिक्रम्याऽऽश्राव्याह वरुणं यजेति वषट्कृते जुहोति ॥३७॥ सव्ये पाणावध्वर्य्युः । स्रुचौ कृत्वा दक्षिणेन प्रतिप्रस्थातुर्वा सोऽन्वारभ्याऽऽह मरुद्भ्योऽनुब्रूहीत्युपस्तृणीत आज्यं प्रतिप्रस्थाताऽथाऽस्यै मारुत्यै पयस्यायै द्विरवद्यति सोऽन्यतरेणाऽवदानेन सह मेषीमवदधात्यथोपरिष्टादाज्यस्याऽभिघारयति प्रत्यनक्त्यवदाने अतिक्रामत्यथाऽध्वर्य्युरेवाऽऽश्राव्याऽऽह मरुतो यजेति वषट्कृते जुहोति ॥ ३८ ॥ अथाऽध्वर्य्युरेव कायेन । एककपालेन पुरोडाशेन प्रचरति कायेनैककपालेन पुरोडाशेन प्रचर्य्याऽध्वर्य्युरेवाऽऽहाऽग्नये स्विष्टकृतेऽनुब्रूहीति स सर्वेषामेव हविषामध्वर्य्युः सकृत्सकृदवद्यत्यथैतस्या एव पयस्यायै प्रतिप्रस्थाता सकृदवद्य-

त्युपथोपरिष्टाद् द्विराज्यस्याऽभिघारयतस्ता ऽउभावेवाऽतिकामतोऽतिक्रम्याऽऽश्राव्याऽद्ध्वर्य्युरेवाऽऽहाऽग्निं स्विष्टकृतं यजेति ता ऽउभावेव वषट्कृते जुहुतः ॥ ३९ ॥ अथाऽद्ध्वर्य्युरेव प्राशित्रमवद्यति। इडाथ समवदाय प्रतिप्रस्थात्रेऽतिप्रजिहीते तत्राऽपि प्रतिप्रस्थाता मारुत्यै पयस्यायै द्विरभ्युपवद्यत्युपथोपरिष्टाद् द्विराज्यस्याऽभिघारयत्युपहूय मार्जयन्ते ॥ ४० ॥ अथाऽद्ध्वर्य्युरेवाऽऽह ब्रह्मन्प्रस्थास्यामि। समिधमाधायाऽग्निमग्नीत्संमृड्ढीति स स्रुचोरेवाऽद्ध्वर्य्युः पृषदाज्यं व्यानयतेऽथ यदि प्रतिप्रस्थातुः पृषदाज्यं भवति तत्स द्वेधा व्यानयत ऽउतो तत्र पृषदाज्यं न भवति स यदेवोपभृत्याज्यं तत्स द्वेधा व्यानयते ता ऽउभावेवाऽतिक्रम्याऽऽश्राव्याऽद्ध्वर्य्युरेवाऽऽह देवान्यजेति यज—यजेति चतुर्थे—चतुर्थेऽनुयाजे समानयमानौ नवभिरनुयाजैश्चरतस्तद्यन्नवप्रयाजं भवति नवाऽनुयाजं तदुभयत ऽएवैतद्वरुणपाशात्प्रजाः प्रमुञ्चतीतश्चोर्द्ध्वा ऽइतश्चाऽवाचीस्तस्मान्नवप्रयाजं भवति नवाऽनुयाजम् ॥ ४१ ॥ ता ऽउभावेव सादयित्वा स्रुचौ व्यूहतः । स्रुचौ व्यूह्य परिधीन्त्समज्य परिधिमभिपद्याऽऽश्राव्याऽद्ध्वर्य्युरेवाऽऽहे'षिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाये'ति सूक्तवाकः होता प्रतिपद्यतेऽथैता ऽउभावेव प्रस्तरौ समुल्लुम्पत ऽउभावनुप्रहरत ऽउभौ तृणे ऽअपसलोपाऽऽसाते यदा होता सूक्तवाकमाह ॥ ४२ ॥

(१) का० श्रौ० सू० ३ ६ २।

अथाऽग्नीदाह 'ऽनुप्रहरे'ति । ता ऽउभावेवाऽनुप्रहरत ऽउभावारभमाणा ऽउपस्पृशेते ॥ ४३ ॥ अथाऽऽह 'संवदस्वे'ति । 'अगानग्नीदगञ्छ्रावय श्रौषट् स्वगा दैव्या होतृभ्यः स्वस्तिर्म्मानुषेभ्यः शंय्योर्ब्रूही'त्यद्ध्वर्युरेवैतदाह ता ऽउभावेव परिधीननुप्रहरत ऽउभौ स्रुचः सम्प्रगृह्य स्स्ये सादयतः ॥ ४४ ॥ अथाऽद्ध्वर्युरेव प्प्रतिपरेत्य । पत्नीः संय्याजयत्युपास्त ऽएव प्प्रतिप्प्रस्थाता पत्नीः संय्याज्योदैत्यद्ध्वर्युः* ॥ ४५ ॥ त्रीणि समिष्टयजूꣳष्यपि जुहोति । तूष्णीमेव प्प्रतिप्प्रस्थाता स्रुचं प्रगृह्णाति तद्ये वैश्वदेवेन यजमानयोर्व्वाससी परिहिते स्यातां ते ऽएवाऽत्राऽपि स्यातामथाऽस्यै व्वारुण्यै पयस्यायै †क्षामकर्षमिश्रमादायाऽवभृथं यन्ति व्वरुण्यं व्वा ऽएतन्निर्व्वरुणतायै तत्र न साम गीयते न ह्यत्र साम्ना किं चन क्रियते तूष्णीमेवेत्त्याऽभ्यवेत्योपमारयति ॥ ४६ ॥ 'अवभृथ निचुम्पुण । निचेरुरसि निचुम्पुणः । अव देवैर्द्देवकृतमेनोऽयासिषमव मर्त्यैर्म्मर्त्यकृतं पुरुराव्णो देव रिषस्पाही'ति कामꣳ हैते यस्म्मै कामयेत तस्म्मै दद्यान्न हि दीक्षितवसने भवतः स यथाऽहिस्त्वचो निर्म्मुच्च्येतैवꣳ सर्व्वस्मात्पाप्म्मनो निर्म्मुच्च्यते॥४७॥ ५अथ केशश्मश्रूप्प्वा । समारोह्याऽग्नी ऽउदवसायेव होतेन

* 'उदेत्यद्ध्वर्युः' इति पाठः 'क' पुस्तके ।

† 'क्षामकर्षमिश्रम्' क्षामोऽग्निदाहेन दग्ध पात्रे सक्तु, इत्यन्ते इति कर्षे (इत्र विवेरणे) क्षामधाऽसौ कर्षश्चेति क्षामकर्षं तेन मिश्र हविरित्यर्थः ।

(१) का० श्रौ० सू० ५.६ १२। (२) का० श्रौ० सू० ५ ६.१५ (३) का० श्रौ० सू० ५ ६.१५। (४) शु० सं० अ० ३ क० ४८।

यजते न हि तदवक्लृप्तते यदुत्तरवेदावग्निहोत्रं जुहुयात्तस्मादुदवस्यति गृहानित्वा निर्म्मथ्याऽग्नी पौर्णमासेन यजत ऽउत्सन्नयज्ञ ऽइव वा ऽएष यच्चातुर्म्मास्यान्यथैष क्लृप्तः प्प्रतिष्ठितो यज्ञो यत्पौर्णमासं तत्क्लृप्तेनैवैतद्यज्ञेनाऽन्ततः प्प्रतितिष्ठति तस्मादुदवस्यति ॥ ४८ ॥

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



वरुणप्प्रघासैर्व्वै प्प्रजापतिः। प्प्रजा वरुणपाशात्प्राऽमुञ्चत्ता ऽअस्याऽनमीवा ऽअकिल्बिषाः प्प्रजाः प्प्राऽजायन्ताऽथैतैः साकमेधैरेतैर्व्वै देवा व्वृत्रमघ्नन्नेतैर्व्वेव व्व्यजयन्त येयमेषां विजितिस्तां तथो ऽएवैष ऽएतैः पाप्प्मानं द्विषन्तं भ्रातृव्व्यः हन्ति तथो ऽएव विजयते तस्माद्वा ऽएष ऽएतैश्चतुर्थे मासि यजते स वै द्व्यहमनूचीनाऽहं यजते ॥ १ ॥ स पूर्व्वेद्युः। अग्नयेऽनीकवतेऽष्टाकपालं पुरोडाशं निर्व्वपत्यग्निर्ह वै देवा ऽअनीकं कृत्वोपप्प्रेयुर्व्वृत्रः हनिष्प्यन्तः स तेजोऽग्निर्नाऽव्व्यथत तथो ऽएवैष ऽएतत्पाप्प्मानं द्विषन्तं भ्रातृव्व्यः हनिष्यन्नग्निमेवाऽनीकं कृत्वोपप्प्रैति स तेजोऽग्निर्न्न व्व्यथते तस्मादग्नयेऽनीकवते ॥ २ ॥ अथ मरुद्भ्यः सान्तनपनेभ्यः। मध्यन्दिने चरुं निर्व्वपति मरुतो ह वै सान्तपना मध्यन्दिने व्वृत्रः सन्तेपुः स सन्तप्तोऽनन्नेव प्प्राणन्प्परिदीर्ण्णः शिश्ये तथो ऽएवैतस्य पाप्प्मानं द्विषन्तं भ्रातृव्व्यं मरुतः सान्तपनाः सन्तपन्ति तस्मान्मरुद्भ्यः सान्तपनेभ्यः ॥ ३ ॥ अथ मरुद्भ्यो गृहमेधिभ्यः।

शाखया वत्सानपाकृत्य पवित्रवति सन्दोह्य तं चरुᳰ श्रपयति चरुर्ह्येव स यत्र क्व च तण्डुलानावपन्ति तन्मेधो देवा दधिरे प्रातर्वृत्रᳰ हनिष्यन्तस्तथो ऽएवैष ऽएतत्पाप्मानं द्विषन्तं भ्रातृव्यᳰ हनिष्यन्मेधो धत्ते तद्यत्क्षीरौदनो भवति मेधो वै पयो मेधस्तण्डुलास्तदुभयं मेधमात्मन्धत्ते तस्मात्क्षीरौदनो भवति ॥ ४ ॥ तस्याऽऽवृत् । सैव स्तीर्णा वेदिर्भवति या मरुद्भ्यः सान्तपनेभ्यस्तस्यामेव स्तीर्णायां वेदौ परिधीँश्च शकलाँश्चोपनिदधति तथा सन्दोह्य चरुᳰ श्रपयति श्रपयित्वाऽभिघार्य्योद्वासयति ॥५॥ अथ द्वे पिशीले वा पात्र्यौ वा निर्णेनिजति। तयोरेनं द्वेधोद्धरन्ति तयोर्मध्ये सर्प्पिरासेचने कृत्वा सर्प्पिरासिञ्चति स्रुवं च स्रुचं च संमार्ष्ट्यथैता ऽओदनावादायोदैति स्रुवं च स्रुचं चाऽऽदायोदैति स ऽइमामेव स्तीर्णां वेदिमभिमृश्य परिधीन्परिधाय यावतः शकलान् कामयते तावतोऽभ्याद्धात्यथैता ऽओदनावासादयति स्रुवं च स्रुचं चाऽऽसादयत्युपविशति होता होतृषदने स्रुवं च स्रुचं चाऽऽददान ऽआह ॥ ६ ॥ अग्नयेऽनुब्रूहीति । आग्नेयमाज्यभागᳰ स दक्षिणस्यौदनस्य सर्प्पिरासेचनाच्चतुराज्यस्याऽवदायाऽतिक्रामत्यतिक्रम्याऽऽश्राव्याऽऽहाऽग्निं यजेति वषट्कृते जुहोति ॥ ७ ॥ अथाऽऽह सोमायाऽनुब्रूहीति। सौम्यमाज्यभागᳰ स ऽउत्तरस्यौदनस्य सर्प्पिरासेचनाच्चतुराज्यस्याऽवदायाऽतिक्रामत्यतिक्रम्याऽऽश्राव्याऽऽह सोमं यजेति वषट्कृते जुहोति ॥ ८ ॥ अथाऽऽह मरुद्भ्यो गृहमेधिभ्योऽनु-

ब्रूहीति । स दक्षिणस्यौदनस्य सर्पिरासेचनात्तत ऽआज्य-मुपस्तृणीते तस्य द्विरवद्यत्यथोपरिष्टादाज्यस्याऽभिघार-यत्यतिक्रामत्यतिक्रम्याऽऽश्राव्याऽऽह मरुतो गृहमेधिनो यजेति वषट्कृते जुहोति ॥ ९ ॥ अथाऽऽहाऽग्नये स्विष्ट-कृतेऽनुब्रूहीति । स ऽउत्तरस्यौदनस्य सर्पिरासेचनात्तत ऽआज्यमुपस्तृणीते तस्य द्विरवद्यत्यथोपरिष्टादाज्यस्या-ऽभिघारयत्यतिक्रामत्यतिक्रम्याऽऽश्राव्याऽऽहाऽग्निꣳ स्वि-ष्टकृतं यजेति वषट्कृते जुहोत्यथेडामेवाऽवद्यति न प्राशित्र-मुपहूय मार्जयन्त ऽएतन्न्वेकमयनम् ॥ १० ॥ अथेदं द्वितीयः । सैव स्तीर्णा वेदिर्भवति या मरुद्भ्यः सान्तपनेभ्यस्तस्यामेव स्तीर्णायां वेदौ परिधीꣳश्च शकलाँ-श्चोपनिदधाति तथा सन्दोह्य चरुꣳ श्रपयति [†]नेदेव प्रति-वेशमाज्यमधिश्रयति श्रपयित्वाऽभिघार्योद्वास्याऽनक्ति स्था-ल्यामाज्यमुद्वासयति स्रुवं च स्रुचं च संमार्ष्टयथैतः सोखमेव चरुमादायोदैति स्थाल्यामाज्यमादायोदैति स्रुवं च स्रुचं चाऽऽदायोदैति स ऽइमामेव स्तीर्णां वेदिमभिमृश्य परि-धीन्परिधाय यावतः शकलान्कामयते तावतोऽभ्याद-धात्यथैतः सोखमेव चरुमासादयति स्थाल्यामाज्यमा-सादयति स्रुवं च स्रुचं चाऽऽसादयत्युपविशति होता होतृ-षदने स्रुवं च स्रुचं चाऽऽददान ऽआह ॥ ११ ॥ अग्नये ऽनुब्रूहीति । आग्नेयमाज्यभागः स स्थाल्यै चतुराज्य-स्याऽवदायाऽतिक्रामत्यतिक्रम्याऽऽश्राव्याऽऽहाऽग्निं यजेति

† 'क' पुस्तके 'तदेव' इति पठो दृश्यते ।

महाहविषा ह वै देवा व्वृत्रं जघ्नुः । तेनो ऽएव व्व्यजयन्त येयमेषां विजितिस्तां तथो ऽएवैष ऽएतेन पाप्मानं द्विषन्तं भ्रातृव्व्यꣳ हन्ति तथो ऽएव विजयते तस्माद्वा ऽएष ऽएतेन यजते ॥ १ ॥ तस्याऽऽवृत् । उप किरन्त्युत्तरवेदिं गृह्णन्ति पृषदाज्यं मन्थन्त्यग्निं नवप्रयाजं भवति नवाऽनुयाजं त्रीणि समिष्टयजूꣳष्यपि भवन्त्यथैतान्येव पञ्च हवीꣳष्यपि भवन्ति ॥ २ ॥ स यदाग्नेयोऽष्टाकपालः पुरोडाशो भवति । अग्निना ह वा ऽएनं तेजसाऽघ्नन्त्स तेजोऽग्निर्व्वाऽव्व्यथत तस्मादाग्नेयो भवति ॥३॥ अथ यत्सौम्म्यश्चरुर्भवति । सोमेन ह वा ऽएनꣳ राज्ञाऽघ्नन्त्सोमराजान ऽएव तस्मात्सौम्म्यश्चरुर्भवति ॥ ४ ॥ अथ यत्सावित्रः । द्वादशकपालो वाऽष्टाकपालो वा पुरोडाशो भवति सविता वै देवानां प्रसविता सवितृप्रसूता हैवैनमघ्नꣳस्तस्मात्सावित्रो भवति ॥ ५ ॥ अथ यत्सारस्वतश्चरुर्भवति । वाग्वै सरस्वती वागु हैवाऽनुममाद प्रहर जहीति तस्मात्सारस्वतश्चरुर्भवति ॥ ६ ॥ अथ यत्पौष्णश्चरुर्भवति । इयं वै पृथिवी पूषेयꣳ हैवैनं वधाय प्रतिप्रददावनया हैवेनं प्रतिप्रत्तं जघ्नुस्तस्मात्पौष्णश्चरुर्भवति ॥ ७ ॥ अथैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति । एतेन हैवैनमघ्नꣳस्तेजो वा ऽअग्निरिन्द्रियं व्वीर्य्यमिन्द्र ऽएताभ्यामेनमुभाभ्यां व्वीर्य्याभ्यामघ्नन् ब्रह्म वा ऽअग्निः क्षत्रमिन्द्रस्ते ऽउभे सꣳरभ्य ब्रह्म च क्षत्रं च सयुजौ कृत्वा ताभ्यामेनमुभाभ्यां व्वीर्य्याभ्यामघ्नꣳ-

स्तस्मादैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति ॥ ८ ॥ अथ माहेन्द्रश्चरुर्भवति । इन्द्रो वा ऽएष पुरा वृत्रस्य वधादथ वृत्रꣳ हत्वा यथा महाराजो विजिग्यान ऽएवं महेन्द्रोऽभवत्तस्मान्माहेन्द्रश्चरुर्भवति महान्तमु चैवैन-मेतत्खलु करोति वृत्रस्य वधाय तस्माद्वेव माहेन्द्रश्च-रुर्भवति ॥ ९ ॥ अथ वैश्वकर्म्मण ऽएककपालः पुरोडाशो भवति । विश्वं वा ऽएतत्कर्म्म कृतꣳ सर्वं जितं देवाना-मासीत्साकमेधैरीजानानां विजिग्यानानां विश्वस्वैवैतस्यै-तत्कर्म्म कृतꣳ सर्वं जितं भवति साकमेधैरीजानस्य विजिग्यानस्य तस्माद्वैश्वकर्म्मण ऽएककपालः पुरोडाशो भवति ॥ १० ॥ एतेन वै देवाः । यज्ञेनेष्ट्वा येयं देवानां प्रजातिर्य्या श्रीरेतद् बभूवुरेताꣳ ह वै प्रजातिं प्रजायत ऽएताꣳ श्रियं गच्छति य ऽएवं विद्वानेतेन यज्ञेन यजते तस्माद्वा ऽएतेन यजेत ॥ ११ ॥

पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति पञ्चमोऽध्यायः ॥ ५ ॥



महाहविषा ह वै देवा वृत्रं जघ्नुः । तेनो ऽएव व्यजयन्त येयमेषां विजितिस्तामथ यानेवैषां तस्मिन्त्सं-ग्रामेऽघ्नꣳस्तान्पितृयज्ञेन समैरयन्त पितरो वै त ऽआसꣳस्त-स्मात्पितृयज्ञो नाम ॥ १ ॥ तद्वसन्तो ग्रीष्मो वर्षाः । एते ते ये व्यजयन्त शरद्धेमन्तः शिशिरस्त ऽउ ते याꣳपुनः

वषट्कृते जुहोति ॥ १२ ॥ अथाऽऽह सोमायाऽनुब्रूहीति । सौम्म्यमाज्यभागꣳ स स्तथाऽग्ना ऽएव चतुराज्यस्याऽवदायाऽतिक्रामत्यतिक्रम्म्याऽऽश्राव्याऽऽह सोमं यजेति वषट्कृते जुहोति ॥ १३ ॥ अथाऽऽह मरुद्भ्यो गृहमेधिभ्योऽनुब्रूहीति । स ऽउपस्तृणीत ऽआज्यमथाऽस्य चरोर्द्विरवद्यत्यथोपरिष्टादाज्यस्याऽभिघारयति प्प्रत्यनक्त्यवदाने ऽअतिक्रामत्यतिक्रम्म्याऽऽश्राव्याऽऽह मरुतो गृहमेधिनो यजेति वषट्कृते जुहोति ॥ १४ ॥ अथाऽऽहाऽग्नये स्विष्टकृतेऽनुब्रूहीति । स ऽउपस्तृणीत ऽआज्यमथाऽस्य चरोः सकृदवद्यत्यथोपरिष्टाद् द्विराज्यस्याऽभिघारयति न प्प्रत्यनक्त्यवदानमतिक्रामत्यतिक्रम्म्याऽऽश्राव्याऽऽहाऽग्निꣳ स्विष्टकृतं यजेति वषट्कृते जुहोति ॥ १५ ॥ अथेडामेवाऽवद्यति न प्प्राशित्रम् । उपहूय प्प्राऽश्नन्ति यावन्तो गृह्या हविरुच्छिष्टाशाः स्युस्तावन्तः प्प्राऽश्नीयुरथो ऽअप्यृत्विजः प्प्राऽश्नीयुरथो ऽअप्यन्न्ये ब्राह्मणाः प्प्राऽश्नीयुर्य्यदि बहुरोदनः स्यादुथैतामनिराशितां* कुम्भीमपिधाय निदधति पूर्ण्णदर्व्याय मातृभिर्व्वत्सान्त्समवार्ज्जन्ति तदु पशवो मेधमात्मन्दधते †यवाग्वैताꣳ रात्रिमग्निहोत्रं जुहोति ‡निवान्न्यां प्रातर्दुहन्ति पितृयज्ञाय ॥ १६ ॥ अथ प्प्रातर्हुते वाऽहुते वा । यतरथा कामयेत सोऽस्या ऽअनिराशितायै कुम्भ्यै

---

* अनिराशिता शेषरहिता कुम्भीं पात्रान्तरेणाऽपिधाय, हविषा पूर्णा दर्वी यस्मिन्कर्मणि तत् पूर्णदर्वम् तस्मै 'पूर्णदर्वाय' कर्मणे तदर्थं स्थापयेत् ( सा० भा० ) ।

† तण्डुलाना शिथिल पाको यवागू ।

‡ स्वय नष्टवत्सा अन्यदीयेन वत्सेन या गौर्दुह्यते सा निवान्येत्युच्यते ।

दर्व्यौपहन्ति 'पूर्णा दर्वि परापत सुपूर्णा पुनरापत। वस्नेव विक्रीणावहा ऽइषमूर्ज्जᳬ शतक्रतवि'ति यथा पुरोऽनुवाक्यैवमेषैतयैवैनमेतस्मै भागाय ह्वयति ॥ १७ ॥ अथर्षभमाह्वयितवै ब्रूयात्। स यदि रुयात्स वषट्कार ऽइत्यु हैक ऽआहुस्तस्मिन्वषट्कारे जुहुयादितियथो ऽइन्द्रमेवैतत्स्वेन रूपेण ह्वयति व्वृत्रस्य वधायैतद्वा ऽइन्द्रस्य रूपं यदृषभस्तत्स्वेनैवैनमेतद्रूपेण ह्वयति व्वृत्रस्य वधाय स यदि रुयाद्वा म ऽइन्द्रो यज्ञमगन्त्सेन्द्रो मे यज्ञ ऽइति ह विद्याद्यद्यु न रुयाद्ब्राह्मण ऽएव दक्षिणत ऽआसीनो ब्रूयाज्जुहुधीति सैवैन्द्री वाक् ॥ १८ ॥ स जुहोति। 'देहि मे ददामि ते नि मे धेहि नि ते दधे। निहारं च हरासि मे निहारं निहराणि ते स्वाहे'ति ॥ १९ ॥ अथ मरुद्भ्यᳬ क्रीडिभ्यᳬ। सप्तकपालं पुरोडाशं निर्वपति मरुतो ह वै क्रीडिनो व्वृत्रᳬ हनिष्यन्तमिन्द्रमागतं तमभितᳬ परिचिक्रीडुर्म्महयन्तस्तथो ऽएवैतं पाप्मानं द्विषन्तं भ्रातृव्यᳬ हनिष्यन्तमभितᳬ परिक्रीडन्ते महयन्तस्तस्मान्मरुद्भ्यᳬ क्रीडिभ्योऽथाऽतो महाहविष ऽएव तद्यथा महाहविषस्तथो तस्य ॥ २० ॥

पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥ ४ ॥

*कण्डिका संख्या ॥ ११५ ॥

---

(१) शु० य० अ० ३ क० ४९। (२) शु० य० अ० ३ क० ५०।

* 'ग च' पुस्तकयो कण्डिकासंख्या १०५।

समैरयन्त ॥ २ ॥ अथ यदेष ऽएतेन यजते । तन्नाऽऽह *त्वेवैतस्य तथा कश्चन घ्नन्तीति देवा ऽअकुर्वन्निति त्वेवैष ऽएतत्करोति यमु चैवैभ्यो देवा भागमकल्पयँस्तमु चैवैभ्य ऽएष ऽएतद्भागं करोति यानु चैव देवाः समैरयन्त तानु चैवैतदवति स्वानु चैवैतत्पितृञ्छ्रेयाꣳसं लोकमुपोन्नयति यदु चैवाऽस्याऽत्राऽऽत्मनोऽचरणेन हन्यते वा मीयते वा तदु चैवाऽस्यैतेन पुनराप्यायते तस्माद्वा ऽएष ऽएतेन यजते ॥ ३ ॥ स पितृभ्यः सोमवद्भ्यः । षट्कपालं पुरोडाशं निर्वपति सोमाय वा पितृमते षड् वा ऽऋतव ऽऋतवः पितरस्तस्मात्षट्कपालो भवति ॥ ४ ॥ अथ पितृभ्यो बर्हिषद्भ्यः । अन्वाहार्य्यपचने धानाः कुर्वन्ति ततोऽर्द्धाः पिꣳषन्त्यर्द्धा ऽइत्येव धाना ऽअपिष्टा भवन्ति ता धानाः पितृभ्यो बर्हिषद्भ्यः ॥ ५ ॥ अथ पितृभ्योऽग्निष्वात्तेभ्यः । निवान्यायै दुग्धे सकृदुपमथित ऽएकशलाकया मन्थो भवति सकृदु ह्येव पराञ्चः पितरस्तस्मात्सकृदुपमथितो भवत्येतानि हवीꣳषि भवन्ति ॥ ६ ॥ †तद्ये सोमेनेजानाः । ते पितरः सोमवन्तोऽथ ये दत्तेन पक्वेन लोकं जयन्ति ते पितरो बर्हिषदोऽथ ये ततो नाऽन्यतरच्चन यानग्निरेव दहन्त्स्वदयति ते पितरोऽग्निष्वात्ता ऽएत ऽउ ते ये पितरः ॥ ७ ॥ स जघनेन गार्हपत्यम् । प्राचीनावीती भूत्वा दक्षिणासीन ऽएतꣳ षट्क-

* 'त्वेवैष' इति 'क' पुस्तके ।

† अत्र शतम् १३०० ॥

पालं पुरोडाशं गृह्णाति स तत एवोपोत्थायोत्तरेणाऽन्वाहार्य्यपचनं दक्षिणा तिष्ठन्नवहन्ति सकृत्फलीकरोति सकृदु ह्येव पराञ्चः पितरस्तस्मात्सकृत्फलीकरोति ॥ ८ ॥ स दक्षिणेव दृषदुपले ऽउपदधाति । दक्षिणार्द्धे गार्हपत्यस्य षट्कपालान्युपदधाति तद्यदेतां दक्षिणां दिशः सचन्त ऽएषा हि दिक् पितॄणां तस्मादेतां दक्षिणां दिशः सचन्ते ॥ ९ ॥ अथ दक्षिणेनाऽन्वाहार्य्यपचनम् । चतुःस्रक्तिं वेदिं करोत्यवान्तरदिशोऽनुस्रक्तीः करोति चतस्रो वा ऽअवान्तरदिशोऽवान्तरदिशो वै पितरस्तस्मादवान्तरदिशोऽनुस्रक्तीः करोति ॥ १० ॥ तन्मध्येऽग्निः समादधाति । पुरस्ताद्वै देवाः प्रत्यञ्चो मनुष्यानभ्युपाऽऽवृत्तास्तस्मात्तेभ्यः प्राङ् तिष्ठञ्जुहोति सर्वतः पितरोऽवान्तरदिशो वै पितरः सर्वत ऽइव हीमा ऽअवान्तरदिशस्तस्मान्मध्येऽग्निः समादधाति ॥ ११ ॥ स तत ऽएव प्राक् स्तम्बयजुर्हरति । स्तम्बयजुर्हृत्वाऽथेत्येवाऽग्रे परिग्रहात्यथेत्यथेति पूर्वेण परिग्रहेण परिगृह्य लिखति हरति यज्ञाग्र्यं भवति स तथैवोत्तरेण परिग्रहेण परिगृह्णात्युत्तरेण परिग्रहेण परिगृह्य प्रतिमृज्याऽऽह 'प्रोक्षणीरासादये'त्यासादयन्ति प्रोक्षणीरिध्मं बर्हिरुपसादयन्ति स्रुचः संमाष्ट्र्याज्येनोदैति स यज्ञोपवीती भूत्वाऽऽज्यानि गृह्णाति ॥ १२ ॥ तदाहुः । द्विरुपभृति गृह्णीयाद्द्वौ ह्यत्राऽनुयाजौ भवत ऽइति

* दर्शपूर्णमासादौ यजुर्मन्त्रेण छिन्नो दर्भ 'स्तम्बयजु' इति कातीयभूमिकायामाचार्यपादाः ।
( १ ) शु० य० अ० १ क० २८ ।

तद्यष्टावेव कृत्व ऽउपभृति गृह्णीयान्नेयन्नस्य विधाया ऽअयानीति तस्मादष्टावेव कृत्व ऽउपभृति गृह्णीयादाज्यानि गृहीत्वा स पुनः प्राचीनावीती भूत्वा ॥ १३ ॥ प्रोक्षणीरध्वर्युरादत्ते। स ऽइध्ममेवाऽग्रे प्रोक्षत्यथ वेदिमथाऽस्मै बर्हिः प्रयच्छन्ति तत्पुरस्ताद्ग्रन्थ्यासादयति तत्प्रोक्ष्योपनिनीय विस्रᳪस्य ग्रन्थिं न प्रस्तरं गृह्णाति सकृदु ह्येव पराञ्चः पितरस्तस्मान्न प्रस्तरं गृह्णाति ॥ १४ ॥ अथ सन्नहनमनुविस्रᳪस्य। अपसलवि त्रिः परिस्तृणन्पर्य्येति सोऽपसलवि त्रिः परिस्तीर्य्य यावत्प्रस्तरभाजनं तावत्परिशिनष्ट्यथ पुनः प्रसलवि त्रिः पर्य्येति यत्पुनः प्रसलवि त्रिः पर्य्येति तद्यानेवाऽमूँस्त्रयाग्निपितॄनन्ववाऽगात्तेभ्य ऽएवैतत्पुनरपोदेतीमᳪ स्वं लोकमभि तस्मात्पुनः प्रसलवि त्रिः पर्य्येति ॥ १५ ॥ स दक्षिणैव परिधीन्परिदधाति। दक्षिणा प्रस्तरᳪ स्तृणाति नाऽन्तर्द्दधाति विधृती सकृदु ह्येव पराञ्चः पितरस्तस्मान्नाऽन्तर्द्दधाति विधृती ॥ १६ ॥ स तत्र जुहूमासादयति। अथ पूर्वामुपभृतमथ ध्रुवामथ पुरोडाशमथ धाना ऽअथ मन्थमासाद्य हवीᳪषि संमृशति ॥ १७ ॥ ते सर्व्व ऽएव यज्ञोपवीतिनो भूत्वा। इत्थाऽद्यजमानश्च ब्रह्मा च पश्चात्परीतः पुरस्तादग्नीत् ॥ १८ ॥ तेनोपाᳪशु चरन्ति। तिर ऽइव वै पितरस्तिर ऽइवैतद्यदुपाᳪशु तस्मादुपाᳪशु चरन्ति ॥ १९ ॥ परिवृते चरन्ति। तिर ऽइव वै पितरस्तिर ऽइवैतद्यत्परिवृतं तस्मात्परिवृते चरन्ति ॥ २० ॥ अथेध्ममभ्यादधदाह। अग्नये समिध्य-

मानायाऽनु ब्रूहीति स ऽएकामेव होता सामिधेनीं त्रिरन्वाह सकृदु ह्येव पराञ्चः पितरस्तस्मादेकार्थं होता सामिधेनीं त्रिरन्वाह ॥ २१ ॥ सोऽन्वाह । 'उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि । उशन्नुशत ऽआवह पितॄन्हविषे ऽअत्तवे' ऽइत्यथाऽग्निमावह सोममावह पितॄन्सोमवत ऽआवह पितॄन्बर्हिषद ऽआवह पितॄनग्निष्वात्तानावह देवाँ३ ऽआज्यपाँ३ ऽआवहाऽग्निं होत्रायाऽऽवह स्वं महिमानमावहेत्यावाह्योपविशति ॥२२॥ अथाऽऽश्राव्य न होतारं प्रवृणीते । पितृयज्ञो वा ऽअयं नेद्धोतारं पितृषु दधानीति तस्मान्न होतारं प्रवृणीते सीद होतरित्येवाऽऽह्योपविशति होता होतृषदन ऽउपविश्य प्रसौति प्रसूतोऽध्वर्युः स्रुचावादाय प्रत्यङ्ङतिक्रामन्नत्यतिक्रम्याऽऽश्राव्याऽऽह समिधो यजेति सोऽपबर्हिषश्चतुरः प्रयाजान्यजति प्रजा वै बर्हिर्नेत्प्रजाः पितृषु दधानीति तस्मादुपबर्हिषश्चतुरः प्रयाजान्यजत्यथाऽऽज्यभागाभ्यां चरन्त्याज्यभागाभ्यां चरित्वा ॥ २३ ॥ ते सर्वे ऽएव प्राचीनावीतिनो भूत्वा । *एतैर्हविर्भिः प्रचरिष्यन्त ऽइत्यथाऽयजमानश्च ब्रह्मा च पुरस्तात्परीतः पश्चादग्नीत्तदुताऽऽश्रावय†न्त्यो३ँ स्वधेत्यस्तु स्वधेति प्रत्याश्रावणं स्वधा नम ऽइति वषट्कारः ॥ २४॥

(१) शु० सं० अ० २० कं० ७० । ऋ० सं० १० १६ १२ ।

* 'ख ग च' पुस्तकेषु 'एतैर्वै हविर्भि' इति पाठ ।

† ॐ स्वधा, इत्यादिषु स्थानापत्त्या प्लुत स्यादेवेति । 'नित्या प्लुतय' इत्याश्वलायन श्रौतसूत्रनियमात् । तेन ॐ स्वधेत्यत्र ओ स्वशब्दगतोऽकारश्च प्लुतौ 'ओ३ँ स्वा३धा, स्वा३धा नम, अस्तु स्वा३धा' इति । एव 'ये यजामहे' इत्यत्र 'ये३ स्वधामहे' इत्यपि ध्येयम् ।

तदुहोवाचाऽऽसुरिः । आश्रावयेयुरेव प्रत्याश्रावयेयुर्वषट्कुर्युर्न्नेवञ्जस्य विधाया ऽअयामेति ॥ २५ ॥ अथाऽऽह पितृभ्यः सोमवद्भ्योऽनुब्रूहीति । सोमाय वा पितृमते स द्वे पुरोऽनुवाक्ये ऽअन्वाहैकया वै देवान्प्रच्यावयन्ति द्वाभ्यां पितॄन्त्सकृदु ह्येव पराञ्चः पितरस्तस्माद् द्वे पुरोऽनुवाक्ये ऽअन्वाह ॥ २६ ॥ स ऽउपस्तृणीत ऽआज्यम् । अथाऽस्य पुरोडाशस्याऽवद्यति स तेनैव सह धानानां तेन सह मन्थस्य तत्सकृदुवदधात्यथोपरिष्टाद् द्विराज्यस्याऽभिघारयति प्रत्यनक्त्यवदानानि नाऽतिक्रामतीत ऽएवोपोत्थायाऽऽश्राव्याऽऽह पितॄन्त्सोमवतो यजेति वषट्कृते जुहोति ॥ २७ ॥ अथाऽऽह पितृभ्यो बर्हिषद्भ्योऽनुब्रूहीति । स ऽउपस्तृणीत ऽआज्यमथाऽऽसां धानानामवद्यति स तेनैव सह मन्थस्य तेन सह पुरोडाशस्य तत्सकृदुवदधात्यथोपरिष्टाद् द्विराज्यस्याऽभिघारयति प्रत्यनक्त्यवदानानि नाऽतिक्रामतीत ऽएवोपोत्थायाऽऽश्राव्याऽऽह पितॄन्बर्हिषदो यजेति वषट्कृते जुहोति ॥ २८ ॥ अथाऽऽह पितृभ्योऽग्निष्वात्तेभ्योऽनुब्रूहीति । स ऽउपस्तृणीत ऽआज्यमथाऽस्य मन्थस्याऽवद्यति स तेनैव सह पुरोडाशस्य तेन सह धानानां तत्सकृदुवदधात्यथोपरिष्टाद् द्विराज्यस्याऽभिघारयति प्रत्यनक्त्यवदानानि नाऽतिक्रामतीत ऽएवोपोत्थायाऽऽश्राव्याऽऽह पितॄनग्निष्वात्तान्यजेति वषट्कृते जुहोति ॥ २९ ॥ अथाऽऽहाऽग्नये कव्यवाहनायाऽनुब्रूहीति । तत्स्विष्टकृते हव्यवाहनो वै

देवानां कव्यवाहनः पितॄणां तस्मादाहाऽग्नये कव्यवाहनायाऽनुब्रूहीति ॥ ३० ॥ स ऽउपस्तृणीत ऽआज्यम् । अथाऽस्य पुरोडाशस्याऽवद्यति स तेनैव सह धानानां तेन सह मन्थस्य तत्सकृदुवदधात्यथोपरिष्टाद् द्विराज्यस्याऽभिघारयति न प्रत्यनक्त्यवदानानि नाऽतिक्रामतीत ऽएवोपोत्थायाऽऽश्राव्याऽऽहाऽग्निं कव्यवाहनं यजेति वषट्कृते जुहोति ॥ ३१ ॥ स यन्नाऽतिक्रामति । इत ऽएवोपोत्थायं जुहोति सकृदु ह्येव पराञ्चः पितरोऽथ यत्सकृत्सकृत्सर्वेषाथं हविषाथं समवद्यति सकृदु ह्येव पराञ्चः पितरोऽथ यद्द्वयतिषङ्गमवदानान्यवद्यत्यृतवो वै पितर ऽऋतूनेवैतद्व्यतिषजत्यृतून्त्सन्दधाति तस्माद्व्यतिषङ्गमवदानान्यवद्यति ॥ ३२ ॥ तद्धैके । एतमेव होत्रे मन्थमादधति तꣳ होतोपहूयाऽवैव जिघ्रति तं ब्रह्मणे प्रयच्छति तं ब्रह्माऽवैव जिघ्रति तमग्नीधे प्रयच्छति तमग्नीदवैव जिघ्रत्येतन्न्वेवोत कुर्वन्ति यथा त्वेवेतरस्य यजुस्येडाप्राशित्रꣳ समवद्यन्त्येवमेवैतस्याऽपि समवद्येयुस्तामुपहूयाऽवैव जिघ्रन्ति न प्राऽश्नन्ति प्राऽशितव्यं त्वेव वयं मन्यामह ऽइति ह स्माऽऽहाऽऽसुरिर्य्यस्य कस्य चाऽग्नौ जुह्वतीति ॥ ३३ ॥ अथ यतरो दास्यन्भवति । यद्यध्वर्य्युर्वा यजमानो वा स ऽउदपात्रमादायाऽपसलवि त्रिः परिषिञ्चन्पर्य्येति स यजमानस्य पितरमवनेजयत्यसाववनेनिक्ष्वेत्यसाववनेनिक्ष्वेति पितामहमसाववनेनिक्ष्वेति प्रपितामहं तद्यथाऽऽशिष्यते-

* 'ख ग घ' पुस्तकेषु 'न्वेवैतत्' इति ।

ऽभिपिञ्चेदेवं तत् ॥ ३४ ॥ अथाऽस्य पुरोडाशस्याऽवदाय । सव्ये पाणौ कुरुते धानानामवदाय सव्ये पाणौ कुरुते मन्थस्याऽवदाय सव्ये पाणौ कुरुते ॥ ३५ ॥ स ये मामवान्तरदिशमनु स्त्रक्तिः । तस्यां यजमानस्य पित्रे ददात्यसावेतत्त ऽइत्यथ ये मामवान्तरदिशमनु स्त्रक्तिस्तस्यां यजमानस्य पितामहाय ददात्यसावेतत्त ऽइत्यथ ये मामवान्तरदिशमनु स्त्रक्तिस्तस्यां यजमानस्य प्रपितामहाय ददात्यसावेतत्त ऽइत्यथ ये मामवान्तरदिशमनु स्त्रक्तिस्तस्यां निमृष्टे-'ऽत्र पितरो मादयध्वं यथाभागमावृषायध्वमि'ति यथाभागमश्नीतेत्येवैतदाह तद्यदेवं पितृभ्यो ददाति तेनो स्वान्पितृनेतस्माद्यज्ञान्नाऽन्तरेति ॥३६॥ ते सर्वे ऽएव यज्ञोपवीतिनो भूत्वा। उदञ्च ऽउपनिष्क्रम्याऽऽहवनीयमुपतिष्ठन्ते देवान्वा ऽएष ऽउपाऽऽवर्त्तते य ऽआहिताग्निर्भवति यो दर्शपूर्णमासाभ्यां यजतेऽथैतत्पितृयज्ञेनेवाऽचारिपुस्तद्दु देवेभ्यो निन्हुवते ॥३७॥ ऐन्द्रीभ्यामाहवनीयमुपतिष्ठन्ते। इन्द्रो ह्याहवनीयो 'ऽक्षन्नमीमदन्त ह्यव प्रिया ऽअधूषत । अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजान्विन्द्र ते हरी॥ सुसन्दृशं त्वा वयं मघवन्वन्दिषीमहि । प्र नूनं पूर्णवन्धुरस्तुतो यासि वशाँ ३ ॥ ऽअनु योजाऽन्विन्द्र ते हरी' ऽइति ॥३८॥ अथ प्रतिपरेत्य गार्हपत्यमुपतिष्ठन्ते । 'मनो न्वाह्वामहे नाराशंसेन स्तोमेन । पितॄणां च मन्मभिः ॥ आ न

(१) शु० स० अ० २ क० ३१। (२) शु० स० अ० ३ क० ५१, ५२। (३) शु० स० अ० ३ क० ५३–५४।

ऽएतु मनः पुनः क्रत्वे दक्षाय जीवसे। ज्योक्च सूर्य्यं दृशे॥ पुनर्न्नः पितरो मनो ददातु दैव्यो जनः। जीवं व्व्रातः सचेमही'ति पितृयज्ञेनेव वा ऽएतदचारिपुरुतदु खलु पुनर्ज्जीवानपि पद्यन्ते तस्मादाह जीवं व्व्रातः सचेमहीति ॥३९॥ अथ यतरो ददाति। स पुनः प्राचीनावीती भूत्वाऽभिप्रपद्य जप'त्यमीमदन्त पितरो यथाभागमावृषायिषते'ति यथाभागमाशिषुरित्येवैतदाह ॥४०॥ अथोदपात्रमादाय। पुनः प्रसलवि त्रिः परिषिञ्चन्पर्य्येति स यजमानस्य पितरमवनेजयत्यसाववनेनिक्ष्वेत्यसाववनेनिक्ष्वेति पितामहमसाववनेनिक्ष्वेति प्रपितामहन्तद्यथा जक्षुषेऽभिषिञ्चेदेवं तत्तत्पुनः प्रसलवि त्रिः परिषिञ्चन्पर्य्येति प्रसलवि न ऽइदं कर्म्माऽनुसन्तिष्ठाता ऽइति तस्मात्पुनः प्रसलवि त्रिः परिषिञ्चन्पर्य्येति ॥ ४१ ॥ अथ नीविमुद्वृह्य नमस्करोति । पितृदेवत्या वै नीविः स्तस्मान्नीविमुद्वृह्य नमस्करोति यज्ञो वै नमो यज्ञियानेवैनानेतत्करोति षट्कृत्वो नमस्करोति षड्वा ऽऋतव ऽऋतवः पितरस्तदृतुष्वेवैतद्यज्ञं प्रतिष्ठापयति तस्मात्षट्कृत्वो नमस्करोति 'गृहान्नः पितरो दत्ते'ति गृहाणाᳫं ह पितर ऽईशत ऽएषो ऽएतस्याऽऽशीः कर्म्मणः ॥४२॥ ते सर्व्व ऽएव यज्ञोपवीतिनो भूत्वा। अनुयाजाभ्यां प्रचरिष्यन्त ऽइत्याग्यजमानश्च ब्रह्मा च पश्चात्परीतः पुरस्तादग्नीदुपविशति होता होतृषदने ॥ ४३ ॥ अथाऽऽह ब्रह्मन्प्र-

( १ ) शु० सं० अ० २ क० ३१। ( २ ) शु० सं० अ० २ क० ३२।

स्त्थास्यामि । समिधमाधायाऽग्निमग्नीत्सम्मृड्ढीति स्रुचावादाय प्प्रत्यङ्ङतिक्रामत्यतिक्रम्म्याऽऽश्राव्व्याऽऽह देवान्व्यजेति सोऽपबर्हिषौ द्वावनुयाजौ यजति प्प्रजा वै बर्हिर्न्नेत्प्रजाः पितृषु दधानीति तस्मादुपबर्हिषौ द्वावनुयाजौ यजति ॥ ४४ ॥ अथ सादयित्त्वा स्रुचौ व्व्यूहति । स्रुचौ व्व्युह्य परिधीन्त्समज्य परिधिमभिपद्याऽऽश्राव्व्याऽऽहे'षिता दैव्व्या होतारो भद्रवाच्च्याय प्प्रेषितो मानुषः सूक्तवाकाये'ति सूक्तवाकः होता प्प्रतिपद्यते नाऽध्वर्य्युः प्प्रस्तरः संमुल्लुम्पतीत्त्येवोपाऽऽस्ते यदा होता सूक्तवाकमाह ॥ ४५ ॥ अथाऽग्नीदाहाऽनुप्प्रहरेति । स न किञ्चनाऽनुप्प्रहरति तूष्णीमेवाऽऽत्मानमुपस्पृशति ॥ ४६ ॥ अथाऽऽह 'संव्वदस्वे'ति । 'अगानग्नीदगन्श्रावय श्रौषट् स्वगा दैव्व्या होतृभ्व्यः स्वस्तिर्म्मानुषेभ्व्यः शंय्योर्ब्रूही'त्युपस्पृशत्येव परिधीन्नाऽनुप्प्रहरत्यथैतद्बर्हिरनुसमस्यति परिधीँश्च ॥ ४७ ॥ तद्धैके । हविरुच्छिष्टमनु समस्यन्ति तदु तथा न कुर्य्याद्धुतोच्छिष्टं वा ऽएतन्नेद्धुतोच्छिष्टमग्नौ जुहवामेति तस्मादपो वैवाऽभ्व्यवहरेयुः प्प्राऽश्नीयुर्व्वा ॥ ४८ ॥

षष्ठाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



महाहविषा ह वै देवा व्वृत्रं जघ्नुः । तेनो ऽएव व्व्यजयन्त येयमेषां व्विजितिस्तामथ यानेवैषां तस्मिन्त्सङ्ग्रामे ऽइषव ऽआर्च्छँस्तानेतैरेव शल्यान्निरहरन्त तान्व्यवृहन्त

( १ ) का० श्रौ० सू० ३ ६. १५। ( २ ) का० श्रौ० सू० ३ ६. १५।

यत् त्र्यम्बकैर्यजन्त ॥ १ ॥ अथ यदेष ऽएतैर्यजते । तन्नाऽऽह स्वेनैवैतस्य तथा कश्चनेपुत्रऽच्छतीति देवा ऽअकुर्वन्निति स्वेनैव ऽएतत्करोति याश्च स्वेवाऽस्य प्रजा जाता याश्चाऽजातास्ता ऽउभयी रुद्रियात्प्रमुञ्चति ता ऽअस्याऽनमीवा ऽअकिल्विषाः प्रजाः प्रजायन्ते तस्माद्वा ऽएष ऽएतैर्यजते ॥ २ ॥ ते वै रौद्रा भवन्ति । रुद्रस्य हीपुस्तस्माद्रौद्रा भवन्त्येककपाला भवन्त्येकदेवत्या ऽअसन्निति तस्मादेककपाला भवन्ति ॥ ३ ॥ ते वै प्रतिपुरुषम् । यावन्तो गृह्याः स्युस्तावन्त ऽएकेनाऽतिरिक्ता भवन्ति तत्प्रतिपुरुषमेवैतदेकैकेन या ऽअस्य प्रजा जातास्ता रुद्रियात्प्रमुञ्चत्येकेनाऽतिरिक्ता भवन्ति तद्या ऽएवाऽस्य प्रजा ऽअजातास्ता रुद्रियात्प्रमुञ्चति तस्मादेकेनाऽतिरिक्ता भवन्ति ॥ ४ ॥ स जघनेन गार्हपत्यम् । यज्ञोपवीती भूत्वोदङ्ङासीन ऽएतान् गृह्णाति स तत ऽएवोपोत्थायोदङ् तिष्ठन्नवहन्त्युदीच्च्यौ दृषदुपले ऽउपदधात्युत्तरार्द्धे गार्हपत्यस्य कपालान्युपदधाति तद्यदेव तामुत्तरां दिशः सचन्त ऽएषा ह्येतस्य देवस्य दिक्तस्मादेतामुत्तरां दिशः सचन्ते ॥ ५ ॥ ते वा ऽअक्ताः स्युः । अक्तः हि हविस्त ऽउ वा ऽअनक्ता ऽएव स्युरभिमानुको ह रुद्रः पशूनस्याद्यदञ्ज्यात्तस्मादनक्ता ऽएव स्युः ॥ ६ ॥ तान्त्सार्द्धं पात्र्यां समुद्वास्य । अन्वाहार्यपचनादुल्मुकमादायोदङ् परेत्य जुहोत्येषा ह्येतस्य देवस्य दिक् पथि जुहोति पथा हि स देवश्चरति चतुष्पथे जुहोत्येतद्ध वा ऽअस्य जान्धितं प्रज्ञातमवसानं

यच्चतुष्पथं तस्माच्चतुष्पथे जुहोति ॥ ७ ॥ पलाशस्य पलाशेन मध्यमेन जुहोति । ब्रह्म वै पलाशस्य पलाशं ब्रह्मणैवैतज्जुहोति स सर्वेषामेवाऽवद्यत्येकस्यैव नाऽवद्यति य एषोऽतिरिक्तो भवति ॥ ८ ॥ स जुहोति । 'एष ते रुद्र भागः सह स्वस्राऽम्बिकया तं जुषस्व स्वाहे' त्यम्बिका ह वै नामाऽस्य स्वसा तयाऽस्यैष सह भागस्तद्यदस्यैष स्त्रिया सह भागस्तस्मात्त्र्यम्बका नाम तया ऽअस्य प्रजा जातास्ता रुद्रियात्प्रमुञ्चति ॥ ९ ॥ अथ य ऽएष ऽएकोऽतिरिक्तो भवति । तमाखूत्करं ऽउपकिर' त्येष ते रुद्र भाग ऽआखुस्ते पशु' रिति तदस्मा ऽआखुमेव पशूनामनुदिशति तेनो ऽइतरान्पशून्न हिनस्ति तद्यदुपकिरति तिर ऽइव वै गर्भास्तिर ऽइवैतद्यदुपकीर्णं तस्माद्वा ऽउपकिरति - तया ऽएवाऽस्य प्रजा ऽअजातास्ता रुद्रियात्प्रमुञ्चति ॥ १० ॥ अथ पुनरेत्य जपन्ति । 'अव रुद्रमदीमह्यव देवन्त्र्यम्बकम् । यथा नो वस्यसस्करद्यथा नः श्रेयसस्करद्यथा नो व्यवसाययात् ॥ भेषजमसि भेषजं गवेऽश्वाय पुरुषाय भेषजम् । सुखम्मेषाय मेष्या' ऽइत्याशीरेवैषैतस्य कर्म्मणः ॥ ११ ॥ अथाऽपसलवि त्रिः परियन्ति । सव्यानूरूननुपाऽऽघ्नाना'स्त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतादि' त्याशीरेवैषैतस्य कर्म्मण ऽआशिषमेवैतदाशासते तद्व यथैव शमिव यो मृत्योर्मु-

(१) शु० य० अ० ३ क० ५७ । (२) शु० य० अ० ३ क० ५७ । (३) शु० य० अ० ३ क० ५८, ५९ । (४) शु० य० अ० ३ क० ६० ।

च्च्यातै नाऽमृतात्तस्मादाह मृत्योर्म्मुक्षीय माऽमृतादिति ॥ १२ ॥ तदु हाऽपि कुमार्य्यः परीयुः । भगस्य भजामहा ऽइति या ह वै सा रुद्रस्य स्वसाऽम्बिका नाम सा ह वै भगस्येष्टे तस्मादु हाऽपि कुमार्य्यः परीयुर्भगस्य भजामहा-ऽइति ॥ १३ ॥ तासामुताऽऽसां मन्त्रोऽस्ति । 'त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम् । उर्वारुकमिव बन्धनादितो मुक्षीय माऽमुत' ऽइति सा यदित ऽइत्याह ज्ञातिभ्यस्तदाह माऽमुत ऽइति पतिभ्यस्तदाह पतयो ह्येव स्त्रियै प्रतिष्ठा तस्मादाह माऽमुत ऽइति ॥ १४ ॥ अथ पुनः प्रसलवि त्रिः परियन्ति । दक्षिणानूरूनुपाऽऽघ्नाना ऽएतेनैव मन्त्रेण तद्यत्पुनः प्रसलवि त्रिः परियन्ति प्रसलवि न ऽइदं कर्म्माऽनुसन्तिष्ठाता ऽइति तस्मात्पुनः प्रसलवि त्रिः परियन्ति ॥ १५ ॥ अथैतान्यजमानोऽञ्जलौ समोप्य । ऊर्ध्वा-नुदस्यति यथा गौर्न्नोदाप्नुयात्तदात्मभ्य ऽएवैतच्छलपा-न्निर्म्मिमते तान्निलिप्सन्त ऽउपस्पृशन्ति भेषजमेवैतत्कु-र्वते तस्मान्निलिप्सन्त ऽउपस्पृशन्ति ॥ १६ ॥ तान्द्वयोर्म्मू-तकयोरुपनह्य । वेणुयष्ट्यां वा कुपे वोभयत ऽआबद्ध्योदङ् परेत्य यदि वृक्षं वा स्थाणुं वा वेणुं वा वल्मीकं वा विन्देत्तस्मिन्नासज'स्यैतत्ते रुद्राऽवसं तेन परो मूजवतो-ऽतीही'त्यवसेन वा ऽअध्वानं यन्ति तदेनध साऽवसमेवा-ऽध्ववाऽर्जति यत्र—यत्राऽस्य चरणं तदत्त्वत्र ह वा ऽअस्य परो मूजवद्भ्यश्चरणं तस्मादाह तेन परो मूजवतोऽतीही-

(१) शु० सं० अ० ३ क० ६० । (२) शु० सं० अ० ३ क० ६१ ।

'त्र्यवततधन्वा पिनाकावस' ऽइत्यहिꣳ सन्नꣳ शिवोऽती-
हीत्स्येवैतदाह 'कृत्तिवासा' ऽइति निष्वापयत्येवैनमेतत्स्वपन्नु
हि न कञ्चन हिनस्ति तस्मादाह कृत्तिवासा ऽइति ॥१७॥
अथ दक्षिणान्न्वाहूनन्न्वावर्त्तन्ते । ते प्रतीक्षं पुनरायन्ति
पुनरेत्याऽप ऽउपस्पृशन्ति रुद्रियेणेव वा ऽएतदचारिषुः
शान्तिरापस्तदद्भिः शान्त्या शमयन्ते ॥ १८ ॥ अथ केश-
श्मश्रू वपते । समारोह्याऽग्नी ऽउदवसायेव ह्येतेन यजते न हि
तदवकल्पते यदुत्तरवेदावग्निहोत्रं जुहुयात्तस्मादुदवस्यति
गृहानित्वा निर्मथ्याऽग्नी पौर्णमासेन यजत ऽउत्सन्नयज्ञ-
ऽइव वा ऽएष यच्चातुर्म्मास्यान्न्यथैष क्लृप्तः प्रतिष्ठितो
यज्ञो यत्पौर्णमासं तत्क्लृप्तेनैवैतद्यज्ञेनाऽन्ततः प्रतितिष्ठति
तस्मादुदवस्यति ॥ १९ ॥

पष्ठाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



अक्षय्यꣳ ह वै सुकृतं चातुर्म्मास्ययाजिनो भवति ।
संवत्सरꣳ हि जयति तेनाऽस्याऽक्षय्यं भवति तं वै त्रेधा
विभज्य यजति त्रेधा विभज्य प्रजयति सर्वं वै संवत्सरः
सर्वं वा ऽअक्षय्यमेतेनो हाऽस्याऽक्षय्यꣳ सुकृतं भवत्यृतुरु
हैवैतद् भूत्वा देवानप्येत्यक्षय्यमु वै देवानामेतेनो हैवा
ऽस्याऽक्षय्यꣳ सुकृतं भवत्येतन्नु तद्यस्माच्चातुर्म्मास्यैर्य-
जते ॥ १ ॥ अथ यस्माच्छुनासीर्य्येण यजेत । या वै
देवानाꣳ श्रीरासीत्साकमेधैरीजानानां विजिग्यानानां तच्छु-

(१) शु० सं० अ० ३ क० ६१ । (२) शु० सं० अ० ३ क० ६१ ।

नमथ यः संवत्सरस्य प्रजितस्य रस ऽआसीत्तत्सीरः सा या चैव देवानाᳩ श्रीरासीत्साकमेधैरीजानानां विजिग्यानानां य ऽउ च संवत्सरस्य प्रजितस्य रस ऽआसीत्तमेवैतदुभयं परिगृह्याऽत्मन्स्कुरुते तस्माच्छुनासीर्य्येण यजते ॥ २ ॥ तस्याऽऽवृत् । नोपकिरन्त्युत्तरवेदिं न गृह्णन्ति पृषदाज्यं न मन्थन्त्यग्निं पञ्च प्रयाजा भवन्ति त्रयोऽनुयाजा ऽएकः समिष्टयजुः ॥ ३ ॥ अथैतान्येव पञ्च हवीᳩषि भवन्ति । एतैर्वै हविर्भिः प्रजापतिः प्रजा ऽअसृजतैतैरुभयतो वरुणपाशात्प्रजाः प्रा्ऽमुञ्चदेतैर्वै देवा वृत्रमघ्नन्नेतैर्वेव व्यजयन्त येयमेषां विजितिस्तां तथो ऽएवैष ऽएतैर्य्यां चैव देवानाᳩ श्रीरासीत्साकमेधैरीजानानां विजिग्यानानां य ऽउ च संवत्सरस्य प्रजितस्य रस ऽआसीत्तमेवैतदुभयं परिगृह्याऽऽत्मन्स्कुरुते तस्माद्वा ऽएतानि पञ्च हवीᳩषि भवन्ति ॥ ४ ॥ अथ शुनासीर्य्यो द्वादशकपालः पुरोडाशो भवति । स बन्धुः शुनासीर्य्यस्य यं पूर्वमवोचाम ॥ ५ ॥ अथ वायव्यं पयो भवति । पयो ह वै प्रजा जाता ऽअभिसञ्जानते विजिग्यानं मा प्रजाः श्रियै यशसेऽन्नाद्यायाऽभिसञ्जानान्ता ऽइति तस्मात्पयो भवति ॥ ६ ॥ तद्यद्वायव्यं भवति । अयं वै वायुर्योऽयं पवत ऽएष वा ऽइदᳩ सर्वं प्रप्याययति यदिदं किञ्च वर्षति वृष्टाद्योषधयो जायन्त ऽओषधीर्जग्ध्वाऽपः पीत्वा तत ऽएतदद्भ्योऽधि पयः सम्भवत्येष हि वा ऽएतज्जनयति तस्माद्वायव्यं भवति ॥ ७ ॥ अथ सौर्य्यं ऽएक-

कपालः पुरोडाशो भवति । एष वै सूर्य्यो य ऽएष तपत्येष वा ऽइदꣳ सर्वमभिगोपायति साऽधुना त्वदसाऽधुना त्वदेष ऽइदꣳ सर्वं विदधाति साधौ त्वदसाधौ त्वदेष मा विजिग्यानं प्रीतः साऽधुना त्वदभिगोपायत्साधौ त्वद्विदधदिति तस्मात्सौर्य्य ऽएककपालः पुरोडाशो भवति ॥ ८ ॥ तस्याऽश्वः श्वेतो दक्षिणा । तदेतस्य रूपं क्रियते य ऽएष तपति यद्यश्वꣳ श्वेतं न विन्देदपि गौरेव श्वेतः स्यात्तदेतस्य रूपं क्रियते य ऽएष तपति ॥ ९ ॥ स यत्रैव साकमेधैर्य्यजते । तच्छुनासीर्य्येण यजेत यद्वै त्रिः संवत्सरस्य यजते तेनैव संवत्सरमाप्नोति तस्माद्यदैव कदा चैतेन यजेत ॥ १० ॥ तद्धैके । रात्रीरापिपयिषन्ति स यदि रात्रीरापिपयिषेद्यदहः पुरस्तात्फाल्गुन्यै पौर्णमास्या ऽउद्दृष्टं तच्छुनासीर्य्येण यजेत ॥ ११ ॥ अथ दीक्षेत । तं नाऽनीजानं पुनः फाल्गुनी पौर्णमास्यभिपर्य्येयात्पुनः प्रयोगरूप ऽइव ह स यदेनमनीजानं पुनः फाल्गुनी पौर्णमास्यभिपर्य्येयात्तस्मादेनं नाऽनीजानं पुनः फाल्गुनी पौर्णमास्यभिपर्य्येयादिति नूत्स्नजमानस्य ॥ १२ ॥ अथ पुनः प्रयुञ्जानस्य । पूर्वेद्युः फाल्गुन्यै पौर्णमास्यै शुनासीर्य्येण यजेताऽथ प्रातर्वैश्वदेवेनाऽथ पौर्णमासेनैतदु पुनः प्रयुञ्जानस्य ॥ १३ ॥ अथाऽतः । परिवर्त्तनस्यैव सर्वतोमुखो वा ऽअसावादित्य ऽएष वा ऽइदꣳ सर्वं निर्द्धयति यदिदं किं च शुष्यति तेनैष सर्वतोमुखस्तेनाऽन्नादः ॥ १४ ॥ सर्वतोमुखोऽयमग्निः । यतो ह्येव कुतश्चाऽन्नमभ्यादधति तत

ऽएव प्रदहति तेनैष सर्वतोमुखस्तेनाऽन्नादः ॥ १५ ॥ अथाऽयमन्यतोमुखः पुरुषः । स ऽएतत्सर्वतोमुखो भवति यत्परिवर्त्तयते स ऽएवमेवाऽन्नादो भवति यथैतावेतद्य ऽएवं विद्वान्परिवर्त्तयते तस्माद्वै परिवर्त्तयेत ॥ १६ ॥ तदुहोवाचाऽऽसुरिः । किन्नु तत्र मुखस्य यदपि सर्वाण्येव लोमानि वपेत यद्वै त्रिः संवत्सरस्य यजते तेनैव सर्वतोमुखस्तेनाऽन्नादस्तस्मान्नाऽद्रियेत परिवर्त्तयितुमिति ॥ १७ ॥

॥ षष्ठाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



तद्यदाहुः । साकमेधैर्वै देवा वृत्रमघ्नँस्तैर्वेव व्यजयन्त येयमेषां विजितिस्तामिति सर्वैर्हु त्वेव देवाश्चातुर्मास्यैर्वृत्रमघ्नन्सर्वैर्वेव व्यजयन्त येयमेषां विजितिस्ताम् ॥१॥ ते होचुः । केन राज्ञा केनाऽनीकेन योत्स्याम ऽइति स हाऽग्निरुवाच मया राज्ञा मयाऽनीकेनेति तेऽग्निना राज्ञाऽग्निनाऽनीकेन चतुरो मासः प्राऽजयँस्तान्ब्रह्मणा च त्रय्या च विद्यया पर्य्यगृह्णन् ॥ २ ॥ ते होचुः । केनैव राज्ञा केनाऽनीकेन योत्स्याम ऽइति स ह वरुण ऽउवाच मया राज्ञा मयाऽनीकेनेति ते वरुणेनैव राज्ञा वरुणेनाऽनीकेनाऽपराँश्चतुरो मासः प्राऽजयँस्तान्ब्रह्मणा चैव त्रय्या च विद्यया पर्य्यगृह्णन् ॥ ३ ॥ ते होचुः । केनैव राज्ञा केनाऽनीकेन योत्स्याम ऽइति स हेन्द्र ऽउवाच मया राज्ञा मयाऽनीकेनेति त ऽइन्द्रेणैव राज्ञेन्द्रेणाऽनीकेनाऽपराँश्चतुरो

मासः प्प्राऽजयँस्तान्ब्रह्मणा चैव त्रय्या च विद्यया पर्य्यगृह्णन् ॥ ४ ॥ स यद्वैश्वदेवेन यजते । अग्निनैवैतद्राज्ञाऽग्निनाऽनीकेन चतुरो मासः प्प्रजयति *तत्त्र्येनी शलली भवति लोहः क्षुरः सा या त्र्येनी शलली सा त्रय्यै विद्यायै रूपं लोहः क्षुरो ब्रह्मणो रूपमग्निर्हि ब्रह्म लोहित ऽइव ह्यग्निस्तस्माल्लोहः क्षुरो भवति तेन परिवर्त्तयते तद् ब्रह्मणा चैवैनमेतत्त्रय्या च विद्यया परिगृह्णाति ॥ ५ ॥ अथ यद्वरुणप्प्रघासैर्य्यजते । वरुणेनैवैतद्राज्ञा वरुणेनाऽनीकेनाऽपराँश्चतुरो मासः प्प्रजयति तत्त्र्येनी शलली भवति लोहः क्षुरस्तेन परिवर्त्तयते तद् ब्रह्मणा चैवैनमेतत्त्रय्या च विद्यया परिगृह्णाति ॥ ६ ॥ अथ यत्साकमेधैर्य्यजते । इन्द्रेणैवैतद्राज्ञेन्द्रेणाऽनीकेनाऽपराँश्चतुरो मासः प्प्रजयति तत्त्र्येनी शलली भवति लोहः क्षुरस्तेन परिवर्त्तयते तद् ब्रह्मणा चैवैनमेतत्त्रय्या च विद्यया परिगृह्णाति ॥ ७ ॥ स यद्वैश्वदेवेन यजते । अग्निरेव तर्हि भवत्यग्नेरेव सायुज्यः सलोकतां जयत्यथ यद्वरुणप्प्रघासैर्य्यजते वरुण ऽएव तर्हि भवति वरुणस्यैव सायुज्यः सलोकतां जयत्यथ यत्साकमेधैर्य्यजत ऽइन्द्र ऽएव तर्हि भवतीन्द्रस्यैव सायुज्यः सलोकतां जयति ॥ ८ ॥ स यस्मिन्नहर्त्तावमुं लोकमेति । स ऽएनमृतुः परस्मा

---

* त्रिषु स्थानेषु एत –श्वेतवर्ण –यस्याः सा त्र्येनी शलली सेधाशलाकेत्यर्थः । एतशब्दात् 'वर्णादनुदात्तात्तोपधात्तो नः' ( पा० सू० ४ १ ३९ ) इति ङीप् तकारस्य नादेशे एनीति । 'त्र्येन्या शलल्येक्षुकाण्डेनेक्षुशलाकया वा लौहेन च क्षुरेणौदुम्बरेण निकेशान् वर्त्तयते वापयते सश्मश्रूणि' आप० श्रौ० सू० ( ८ ४ १ ) ।

ऽऋतवे प्प्रयच्छति पुर ऽउ पुरस्मा ऽऋतवे प्प्रयच्छति स परममेव स्थानं परमां गतिं गच्छति चातुर्म्मास्ययाजी तदाहुर्न चातुर्म्मास्ययाजिनमनु विन्दन्ति परमꣳ ह्येव खलु स स्थानं परमां गतिं गच्छतीति ॥ ९ ॥

षष्ठाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे पञ्चमप्रपाठकः ॥५॥ कण्डिकासंख्या १०४ ॥

इति षष्ठोऽध्यायः ॥ ६ ॥

इति एकपादिकानाम द्वितीयं* काण्ड समाप्तम् ॥ २ ॥



* अस्मिन्काण्डे कण्डिकासंख्या ॥ ५४९ ॥

# अथाध्वरनाम तृतीयं काण्डम्

अस्मिन् काण्डे प्रतिपाद्यो विषयः—*सोमयागो दीक्षाभिषवान्तः।

॥ ॐ ॥ देवयजनं जोषयन्ते स यदेव वर्षिष्ठꣳ स्यात्तज्जोषयेरन् यदन्यद्भूमेर्नाभिशयीताऽतो वै देवा दिवमुपोदक्रामन्देवान्वा ऽएष ऽउपोत्क्रामति यो दीक्षते स सदेवे देवयजने यजते स यद्धाऽन्यद्भूमेरभिशयीताऽवरतर ऽइवेष्ट्वा स्यात्तस्माद्यदेव वर्षिष्ठꣳ स्यात्तज्जोषयेरन् ॥ १ ॥ तद्वर्ष्म सत्समꣳ स्यात्। समꣳ सद्विभ्रꣳशि स्यादविभ्रꣳशि सत्प्राक्प्रवणꣳ स्यात्प्राची हि देवानां दिगथो ऽउदक्प्रवणमुदीची हि मनुष्याणां दिग्दक्षिणतः प्रत्युच्छ्रितमिव स्यादेषा वै दिक् पितॄणाꣳ स यद्दक्षिणाप्रवणꣳ स्यात्क्षिप्रे ह यजमानोऽमुं लोकमियात्तथो ह यजमानो ज्योग्जीवति तस्माद्दक्षिणतः प्रत्युच्छ्रितमिव स्यात् ॥ २ ॥ न पुरस्ताद्देवयजनमात्रमतिरिच्येत। द्विषन्तꣳ हाऽस्य तद्भ्रातृव्यमभ्यतिरिच्यते कामꣳ ह दक्षिणतः स्यादेवमुत्तरत ऽएतद्ध त्वेव समृद्धं देवयजनं यस्य देवयजनमात्रं

---

* सोमशब्दोऽत्र लताविशेषपरः न तु चन्द्रादिदेवतापरः, तस्य प्रकृते उपयोगाभावात्। तत्स्वरूपञ्चेत्थम्—

"श्यामलाऽम्ला च निष्पत्रा क्षीरिणी त्वचि मांसला।
श्लेष्मला वमनी वल्ली सोमाख्या छागभोजनम्" इत्यायुर्वेदे।

पश्चात्परिशिष्यते क्षिप्रे हैवैनमुत्तरा देवयज्योपनमतीति नु देवयजनस्य ॥ ३ ॥ तदु होवाच याज्ञवल्क्यः । वार्ष्णाय देवयजनं जोषयितुमैम तत्सात्ययज्ञोऽब्रवीत्सर्वा वा ऽइयं पृथिवी देवी देवयजनं यत्र वा ऽअस्यै क्व च यजुषैव परिगृह्य याजयेदिति ॥ ४ ॥ ऋत्विजो हैव देवयजनम् । ये ब्राह्मणाः शुश्रुवाꣳसोऽनूचाना विद्वाꣳसो याजयन्ति सैवाऽह्वलैतन्नेदिष्ठतमामिव मन्यामह ऽइति ॥५॥ *तच्छालां वा विमितं वा †प्राचीनवꣳशं मिन्वन्ति । प्राची हि देवानां दिक् पुरस्ताद्वै देवाः प्रत्यञ्चो मनुष्यानुपाऽऽवृत्तास्तस्मात्तेभ्यः प्राङ् तिष्ठन् जुहोति ॥ ६ ॥ तस्मादु ह न प्रतीचीनशिराः शयीत । नेद्देवानभिप्रसार्य्य शया ऽइति या दक्षिणा दिक् सा पितॄणां या प्रतीची सा सर्पाणां यतो देवा ऽउच्चक्रमुः सैषाऽहीना योदीची दिक् सा मनुष्याणां ‑ तस्मान्मानुषे ऽउदीचीनवꣳशामेव ‡शालां वा विमितं वा मिन्वन्त्युदीची हि मनुष्याणां दिग्दीक्षितस्यैव प्राचीनवꣳशा नाऽदीक्षितस्य ॥ ७ ॥ तां वा ऽएतां परिश्रयन्ति । नेदभिवर्षादिति न्वेव वर्षा देवान्वा ऽएष ऽउपाऽऽवर्त्तते यो दीक्षते स देवतानामेको भवति तिर ऽइव वै देवा मनुष्येभ्यस्तिर ऽइवैतद्यत्परिश्रितं तस्मात्परिश्रयन्ति ॥ ८ ॥ तत्र सर्व्व ऽइवाऽभिप्रपद्येत । ब्राह्मणो

---

* 'नेदिष्ठमाम्' इति 'ग च' पुस्तकयोः ।

† 'तच्छालों' इत्युक्तपुस्तकयोरेव ।

‡ 'क' पुस्तके 'प्राचीनवꣳशाम्' इति ।

‡‡ "विशाल्यपरस्त्रि शाला स्यात्तदर्द्धेन तु विस्तृता" ।
"विमितं चतुरस्रं स्याद्द्वारत्रिप्रमाणत" इति कातीयपरिशिष्ट ॥

वव राजन्यो वा वैश्यो वा ते हि यज्ञियाः ॥ ९ ॥ स वै न सर्वेणेव संवदेत । देवान्वा ऽएष ऽउपाऽऽवर्त्तते यो दीक्षते स देवतानामेको भवति न वै देवाः सर्वेणेव संवदन्ते ब्राह्मणेन वैव राजन्येन वा वैश्येन वा ते हि यज्ञियास्तस्माद्ययेनᳪ शूद्रेण संवादो विन्देदेतेषामेवैकं ब्रूयादिममिति विचक्ष्वेममिति विचक्ष्वेत्येष ऽउ तत्र दीक्षितस्योपचारः ॥ १० ॥ अथाऽरणी पाणौ कृत्वा । शालामद्ध्यवस्यति स पूर्वार्द्ध्यᳪ स्थूणाराजमभिपद्यैतद्यजुरा-'हेदमगन्मदेवयजनं पृथिव्या यत्र देवासो ऽअजुषन्त विश्व' ऽइति तदस्य विश्वैश्च देवैर्जुष्टं भवति ये चेमे ब्राह्मणाः शुश्रुवाᳪसोऽनूचाना यद्वाऽस्य तेऽक्षिभ्यामीक्षन्ते ब्राह्मणाः शुश्रुवाᳪसस्तद्वाऽस्य तैर्जुष्टं भवति ॥ ११ ॥ यद्वाऽऽह । यत्र देवासो ऽअजुषन्त विश्व ऽइति तदस्य विश्वैर्देवैर्जुष्टं भव'दृयृक्सामाभ्याᳪ सन्तरन्तो यजुर्भिरि'त्यृक्सामाभ्यां वै यजुर्भिर्यज्ञस्योदृचं गच्छन्ति यज्ञस्योदृचं गच्छानीत्येवैतदाह 'रायस्पोषेण समिषा मदेमे'ति भूमा वै रायस्पोषः श्रीर्वै भूमाऽऽशिषमेवैतदाशास्ते समिषा मदेमेतीषं मदतीति वै तमाहुर्यः श्रियमश्नुते यः परमतां गच्छति तस्मादाह समिषा मदेमेति ॥ १२ ॥

प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

---

(१) शु० सं० अ० ४ क० १। (२) शु० सं० अ० ४ क० १। (३) शु० सं० अ० ४ क० १।

अपराह्णे दीक्षेत॥ पुरा केशश्मश्रोर्वपनाद्यत्कामयेत तदश्नीयाद्यद्वा सम्पद्येत व्रतᳬ ह्येवाऽस्याऽतोऽशनं भवति यद्यु नाऽशिशिषेदपि कामं नाऽश्नीयात् ॥ १ ॥* अथोत्तरेण शालां परिश्रयन्ति। तदुदकुम्भमुपनिदधाति तन्नापित ऽउपतिष्ठते तत्केशश्मश्रु च वपते नखानि च निकृन्तते-ऽस्ति वै पुरुषस्याऽमेध्यं यत्राऽस्याऽपो नोपतिष्ठन्ते केशश्मश्रौ च वा ऽअस्य नखेषु चाऽऽपो नोपतिष्ठन्ते तद्यत्केशश्मश्रु च वपते नखानि च निकृन्तते मेध्यो भूत्वा †दीक्षा ऽइति ॥ २ ॥ तद्धैके। सर्वं ऽएव वपन्ते सर्वं ऽएव मेध्या भूत्वा दीक्षिष्यामह ऽइति तदु तथा न कुर्याद्यद्वै केशश्मश्रु च वपते नखानि च निकृन्तते तदेव मेध्यो भवति तस्मादु केशश्मश्रु चैव वपेत नखानि च निकृन्तेत ॥ ३ ॥ स वै नखान्येवाऽग्रे निकृन्तते। दक्षिणस्येवाऽग्रे सव्व्यस्य वा ऽअग्रे मानुषेऽथैवं देवत्राऽङ्गुष्ठयोरेवाऽग्रे कनिष्ठिकयोर्वा-ऽअग्रे मानुषेऽथैवं देवत्रा ॥ ४ ॥ स दक्षिणमेवाऽग्रे ‡गोदानं वितारयति। सव्व्यं वा ऽअग्रे मानुषेऽथैवं देवत्रा ॥ ५ ॥ स दक्षिणमेवाऽग्रे गोदानमभ्युनत्ति। '(१)इमा ऽआपः शमु मे सन्तु देवीरि'ति स यदाऽऽहेमा ऽआपः शमु मे सन्तु देवीरिति वज्रो वा ऽआपो वज्रो हि वा ऽआपस्तस्माद्येनैता यन्ति

---

* अत्र शतम् १४०० ॥

† सोमयागे प्रवृत्तस्य यजमानस्य यमनियमादिपरिग्रहरूप संस्कारो दीक्षाशब्देनोच्यते। तत्कर्तृसंस्कारार्था इष्टि दीक्षणीया शब्दवाच्येति।

‡ गोदान नाम कर्णस्योपरि प्रदेश, स्वपद्भिर्भुवि पृथिव्या दीयत इति तदर्थं।

(१) शु० स० अ० ४ क० १।

निम्म्नं कुर्वन्ति यत्रोपतिष्ठन्ते निर्दहन्ति तत् तदेतमेवैत द्वज्रꣳ शमयति तथो हैनमेष वज्रः शान्तो न हिनस्ति तस्मादाहेमा ऽआपः शमु मे सन्तु देवीरिति ॥ ६ ॥ अथ दर्भतरुणकमन्तर्दधाति । 'ओषधे त्रायस्वे'ति वज्रो वै क्षुरस्तथो हैनमेष वज्रः क्षुरो न हिनस्त्यथ क्षुरेणाऽभिनिदधाति "स्वधिते मैनꣳ हिꣳसीरि'ति वज्रो वै क्षुरस्तथो हैनमेष वज्रः क्षुरो न हिनस्ति ॥ ७ ॥ प्रछियोदपात्रे प्प्राऽस्यति । तूष्णीमेवोत्तरं गोदानमभ्युनत्ति तूष्णीं दर्भतरुणकमन्तर्दधाति तूष्णीं क्षुरेणाऽभिनिधाय प्रच्छियोदपात्रे प्प्राऽस्यति ॥ ८ ॥ अथ नापिताय क्षुरं प्रयच्छति । स केशश्मश्रु वपति स यदा केशश्मश्रु वपति ॥ ९ ॥ अथ स्नाति । अमेध्यो वै पुरुषो- यदनृतं वदति तेन पूतिरन्तरतो मेध्या वा ऽआपो मेध्यो भूत्वा दीक्षा ऽइति पवित्रं वा ऽआपः पवित्रपूतो दीक्षा ऽइति तस्माद्वै स्नाति ॥ १० ॥ स स्नाति । 'आपो ऽअस्मान्मातरः शुन्धयन्त्वि'त्येतद्ध्याह शुन्धयन्त्विति 'घृतेन नो घृतप्वः पुनन्त्वि'ति तद्वै सुपूतं यं घृतेन पुनँस्तस्मादाह घृतेन नो घृतप्वः पुनन्त्विति 'विश्वꣳ हि रिप्रं प्रवहन्ति देवीरि'ति यद्वै विश्वꣳ सर्वं तद्यदमेध्यꣳ रिप्रं तत्सर्वꣳ ह्यस्मादमेध्यं प्रवहन्ति तस्मादाह विश्वꣳ हि रिप्रं प्रवहन्ति देवीरिति ॥ ११ ॥

---

(१) शु० स० अ० ४ क० १। (२) शु० सं० अ० ४ क० १। (३) शु० सं० अ० ४ क० १। (४) शु० स० अ० ४ क० २। (५) शु० स० अ० ४ क० २। (६) शु० स० अ० ४ क० २।

अथ प्प्राङिवोदङ्ङुत्क्रामति । 'उदिदाभ्यः शुचिरा पूत ऽएमी'त्युद्ध्याभ्यः शुचिः पूत ऽएति ॥ १२ ॥ अथ वासः परिधत्ते । सर्वत्वायैव स्वामेवाऽस्मिन्नेतत्त्वचं दधाति या ह वा ऽइयं गोस्त्वक्पुरुषे हैषाऽग्र ऽआस ॥ १३ ॥ ते देवा ऽअब्रुवन् । गौर्वा ऽइदꣳ सर्वं बिभर्त्ति हन्त येयं पुरुषे त्वग्गव्येतां दधाम तयैषा वर्षन्तं तया हिमं तया घृणिं तितिक्षिष्यत ऽइति ॥ १४ ॥ तेऽवच्छाय पुरुषम् । गव्येतां त्वचमदधुस्तयैषा वर्षन्तं तया हिमं तया घृणिं तितिक्षते ॥ १५ ॥ अवच्छितो हि वै पुरुषः । तस्मादस्य यत्रैव क च कुशो वा यद्वा विकृन्तति तत ऽएव लोहितमुत्पतति तस्मिन्नेतां त्वचमदधुर्वास ऽएव तस्मान्नाऽन्यः पुरुषाद्वासो बिभर्त्येताꣳ ह्यस्मिँस्त्वचमदधुस्तस्माद् सुवासा ऽएव बुभूषेत्स्वया त्वचा समृद्ध्या ऽइति तस्माद्प्यश्लीलꣳ सुवाससं दिदृक्षन्ते स्वया हि त्वचा समृद्धो भवति ॥ १६ ॥ नो हाऽन्ते गोर्नग्नः स्यात् । वेद ह गौरहमस्य त्वचं बिभर्म्मीति सा बिभ्यती त्रसति त्वचं म ऽआदास्यत ऽइति तस्माद् गावः सुवाससमुपैव निश्रयन्ते ॥ १७ ॥ तस्य वा ऽएतस्य वाससः । अग्नेः पर्यासो भवति वायोरनुच्छादो नीविः पितृणाꣳ सर्प्पाणां प्रघातो विश्वेषां देवानां तन्तव ऽआरोका नक्षत्राणामेवꣳ हि वा ऽएतत्सर्वे देवा ऽअन्वायत्तास्तस्माद्दीक्षितवसनं भवति ॥ १८ ॥ तद्वाऽअहतꣳ स्यात् । अयातयामतायै तद्वै निष्पेष्टवै ब्रूयाद्यद्वेवा

(१) शु० य० अ० ४ क० २ ।

ऽस्याऽत्राऽमेध्यया कृणत्ति वा वयति वा तदस्य मेध्यमसदिति यद्यु ऽअहतᳬ स्यादद्भिरभ्युक्षेन्मेध्यमसदित्यथो यदिदᳬ स्नातवस्त्रं निहितमपल्पूलनकृतं भवति तेनो हाऽपि दीक्षेत ॥ १९ ॥ तत्परिधत्ते । 'दीक्षातपसोस्तनूरसीत्यदीक्षितस्य वा ऽअस्यैषाऽग्रे तनूर्भवत्यथाऽत्र दीक्षातपसोस्तस्मादाह दीक्षातपसोस्तनूरसीति 'तां त्वा शिवाᳬ शग्मां परिदध'-ऽइति तां त्वा शिवाᳬ साध्वीं परिदध ऽइत्येवैतदाह 'भद्रं वर्णं पुष्यन्नि'ति पापं वा ऽएषोऽग्रे वर्णं पुष्यति यममुम-दीक्षितोऽथाऽत्र भद्रन्तस्मादाह भद्रं वर्णं पुष्यन्निति ॥२०॥

अथैनᳬ शालां प्रपादयति । स धेन्वै चाऽनडुहश्च नाऽश्नी-याद्धेन्वनडुहौ वा ऽइदᳬ सर्वं बिभृतस्ते देवा ऽअब्रुवन् धेन्वन-डुहौ वा ऽइदᳬ सर्वं बिभृतो हन्त यदन्येषां वयसां वीर्यं तद्धेन्वनडुहयोर्दधामेति स यदन्येषां वयसां वीर्यमासी-त्तद्धेन्वनडुहयोरदधुस्तस्माद्धेनुश्चैवाऽनड्वांश्च भूयिष्ठं *भुङ्क्तस्तद्धैतत्सर्वाश्यमिव यो धेन्वनडुहयोरश्नीयादन्त-गतिरिव तᳬ हाऽद्भुतमभिजनितोर्जायायै गर्भं निरवधी-दिति पापमकदिति पापी कीर्त्तिस्तस्माद्धेन्वनडुहयोर्नाऽश्नी-यात्तदु होवाच याज्ञवल्क्योऽश्नाम्येवाऽहमᳬसलं चेद्भव-तीति ॥ २१ ॥

प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

(१) शु० सं० अ० ४ क० २। (२) शु० सं० अ० ४ क० २ (३) शु० सं० अ० ४ क० २।

* 'ख' पुस्तके 'भुङ्क्तस्तद्' इत्येव पाठो लभ्यते।

अपः प्रणीय । आग्नावैष्णवमेकादशकपालं पुरोडाशं निर्वपत्यग्निर्वै सर्वा देवता ऽअग्नौ हि सर्वाभ्यो देवताभ्यो जुह्वत्यग्निर्वै यज्ञस्याऽवरार्ध्यो विष्णुः परार्ध्यस्तत्सर्वाश्चैवैत-द्देवताः परिगृह्य सर्वं च यज्ञं परिगृह्य दीक्षा ऽइति तस्मा-दाग्नावैष्णव ऽएकादशकपालः पुरोडाशो भवति ॥१॥ तद्धैके । आदित्येभ्यश्चरुं निर्वपन्ति तदस्ति पर्युदितमिवाष्टौ पुत्रासो ऽअदितेर्ये जातास्तन्वस्परि । देवां २ ॥ ऽउप प्रैत्सप्तभिः परा मार्त्ताण्डमास्यदि'ति ॥ २ ॥ अष्टौह वै पुत्रा ऽअदितेः । यांस्त्वेतद्देवा ऽआदित्या ऽइत्याचक्षते सप्त हैव तेऽविकृतः हाऽष्टमं जनयाञ्चकार मार्त्ताण्डः सन्देघो हैवाऽऽस यावानेवोर्ध्वस्तावाँस्तिर्य्यङ् पुरुषसम्मित ऽइत्यु हैक ऽआहुः ॥ ३ ॥ त ऽउ हैत ऽऊचुः । देवा ऽआदित्या यदस्मानन्वजनिमा तदमुयेव भूद्धन्तेमं विक-रवामेति तं विचक्रुर्य्यथाऽयं पुरुषो विकृतस्तस्य यानि माᳪं-सानि सङ्कृत्य सन्न्यासुस्ततो हस्ती समभवत्तस्मादाहुर्न्न हस्तिनं प्रतिगृह्णीयात्पुरुषाजानो हि हस्तीति यमु ह तद्वि-चक्रुः स विवस्वानादित्यस्तस्येमाः प्रजाः ॥ ४ ॥ स होवाच । राध्नवान्मे स प्रजायां य ऽएतमादित्येभ्यश्चरुं निर्वपादिति राध्नोति हैव य ऽएतमादित्येभ्यश्चरुं निर्व-पत्ययं त्वेवाऽग्नावैष्णवः प्रज्ञातः ॥ ५ ॥ तस्य सप्तदश सामिधेन्यो भवन्ति । उपाᳪंशु देवते यजति पञ्च प्रयाजा भवन्ति त्रयोऽनुयाजाः संय्याजयन्ति पत्नीः सर्वत्त्वायैव

( १ ) ऋ० सं० ( १०।७२।८ )

समिष्टयजुरेव न जुहोति नेदिदं दीक्षितवसनं परिधाय पुरा यज्ञस्य सꣳस्थाया ऽअन्तं गच्छानीत्यन्तो हि यज्ञस्य समिष्टयजुः ॥ ६ ॥ अथाऽग्रेण शालां तिष्ठन्नभ्यङ्क्ते । अरुवै पुरुषोऽवच्छितोऽनरुरेवैतद्भवति यदभ्यङ्क्ते गवि वै पुरुषस्य त्वग्गोर्वा ऽएतन्नवनीतं भवति स्वयैवैनमेतत्त्वचा समर्द्धयति तस्माद्वा ऽअभ्यङ्क्ते ॥ ७ ॥ तद्वै नवनीतं भवति । घृतं वै देवानां फाण्टं मनुष्याणामथैतन्नाऽऽहैव घृतं नो फाण्टꣳ स्यादेव घृतꣳ स्यात्फाण्टमयातयामतायै तदेनमयातयाम्नैवाऽयातयामानं करोति ॥ ८ ॥ तमभ्यनक्ति । शीर्षतोऽग्र ऽआपादाभ्यामनुलोमं 'महीनां पयोऽसी'ति मह्य ऽइति ह वा ऽएतासामेकं नाम यद्गवां तासां वा ऽएतत्पयो भवति तस्मादाह महीनां पयोऽसीति 'वर्चोदा ऽअसि वर्चो मे देही'ति नाऽत्र तिरोहितमिवाऽस्ति ॥ ९ ॥ अथाऽक्ष्यावाऽनक्ति । अरुवै पुरुषस्याऽक्षि प्रशाक्ष्ममेति ह स्माऽऽह याज्ञवल्क्यो दुरक्ष ऽइव हाऽऽस पूयो हैवाऽस्य दूषीका ते ऽएवैतदनरुष्करोति यदक्ष्यावाऽनक्ति ॥ १० ॥ यत्र वै देवाः । असुररक्षसानि जघ्नुस्तच्छुष्णो दानवः प्रत्यङ् पतित्वा मनुष्याणामक्षीणि प्रविवेश स ऽएष कनीनकः कुमारक ऽइव परिभासते तस्मा ऽएवैतद्यज्ञमुपप्रयन्त्सर्वतोऽश्मपुरां परिदधात्यश्मा ह्याञ्जनम् ॥ ११ ॥ त्रैककुदं भवति । यत्र वा ऽइन्द्रो वृत्रमहँस्तस्य यदक्ष्यासीत्तं गिरिं त्रिककुदमकरोत्तद्यत्त्रैककुदं भवति चक्षुष्येवैतच्च-

(१) शु० स० अ० ४ कं० ३ । (२) शु० स० अ० ४ कं० ३ ।

क्षुर्दधाति तस्मात्त्रैककुदं भवति यदि त्रैककुदं न विन्दे-द्प्प्यत्रैककुदमेव स्यात्समानी ह्येवाऽञ्जनस्य बन्धुता ॥१२॥ शरेषीकयाऽनक्ति । वज्रो वै शरो विरक्षस्तायै सतूला भवत्यमूलं वा ऽइदमुभयतः परिच्छिन्नꣳ रक्षो ऽन्तरिक्षमनु-चरति यथाऽयं पुरुषोऽमूल ऽउभयतः परिच्छिन्नोऽन्तरिक्ष-मनुचरति तद्यत्सतूला भवति विरक्षस्तायै ॥ १३ ॥ स दक्षिणमेवाऽग्र ऽआनक्ति । सव्व्यं वा ऽअग्रे मानुषेऽथैवं देवत्रा ॥ १४ ॥ स ऽआनक्ति । 'व्वृत्रस्याऽसि कनीनक'-ऽइति व्वृत्रस्य ह्येप कनीनकश्चक्षुर्द्दा ऽअसि चक्षुर्म्मे देही'ति नाऽत्र तिरोहितमिवाऽस्ति ॥ १५ ॥ स दक्षिणꣳ सकृद्यजुषाऽनक्ति । सकृत्तूष्णीमथोत्तरꣳ सकृद्यजुषाऽनक्ति द्विस्तूष्णीं तदुत्तरमेवैतदुत्तरावत्करोति ॥ १६ ॥ तद्यत्पञ्च कृत्व ऽआनक्ति । संवत्सरसंम्मितो वै यज्ञः पञ्च वा ऽऋतवः संवत्सरस्य तं पञ्चभिराप्नोति तस्मात्पञ्च कृत्व-ऽआनक्ति ॥१७॥ अथैनं दर्भपवित्रेण पावयति । अमेद्ध्यो वै पुरुषो यदनृतं वदति तेन पूतिरन्तरतो मेद्ध्या वै दर्भा मेद्ध्यो भूत्वा दीक्षा ऽइति पवित्रं वै दर्भाः पवित्रपूतो दीक्षा ऽइति तस्मादेनं दर्भपवित्रेण पावयति ॥ १८ ॥ तद्वा ऽएकꣳ स्यात् । एको ह्येवाऽयं पवते तदेतस्यैव रूपेण तस्मादेकꣳ स्यात् ॥ १९ ॥ अथो ऽअपि त्रीणि स्युः । एको ह्येवाऽयं पवते सोऽयं पुरुषेऽन्तः प्रविष्टस्त्रेधा विहितः प्राण ऽउदानो व्व्यान ऽइति तदेतस्यैवाऽनुमात्रां

(१) शु० सं० अ० ४ क० ३ । (२) शु० सं अ० ४ क० ३ ।

तस्मात्त्रीणि स्युः ॥ २० ॥ अथो ऽअपि सप्त स्युः । सप्त वा ऽइमे शीर्षन्प्राणास्तस्मात्सप्त स्युस्त्रिः सप्तान्येव स्युरेकविंशः शतिरेपेव सम्पत् ॥ २१ ॥ तं सप्तभिः सप्तभिः पावयति । 'चित्पतिर्म्मा पुनात्वि'ति प्रजापतिर्वै चित्पतिः प्रजापतिर्म्मा पुनात्वित्येवैतदाह 'वाक्पतिर्म्मा पुनात्वि'ति प्रजापतिर्वै वाक्पतिः प्रजापतिर्म्मा पुनात्वित्येवैतदाह 'देवो मा सविता पुनात्वि'ति तद्वै सुपूतं यं देवः सविता पुनात्तस्मादाह देवो मा सविता पुनात्वि'त्यच्छिद्रेण पवित्रेणे'ति यो वा ऽअयं पवत ऽएषोऽच्छिद्रं पवित्रमेतेनैतदाह 'सूर्य्यस्य रश्मिभिरि'त्येते वै पवितारो यत्सूर्य्यस्य रश्मयस्तस्मादाह सूर्य्यस्य रश्मिभिरिति ॥ २२ ॥ 'तस्य ते पवित्रपत' ऽइति । पवित्रपतिर्हि भवति 'पवित्रपूतस्ये'ति पवित्रपूतो हि भवति 'यत्कामः पुने तच्छकेयमि'ति यज्ञस्योदृचं गच्छानीत्येवैतदाह ॥ २३ ॥ अथाऽऽशिषामारम्भं वाचयति । 'आ वो देवास ऽईमहे वामं प्रयत्यध्वरे । आ वो देवास ऽआशिषो यज्ञियासो हवामह' ऽइति तदस्मै स्वाः सतीर्ऋत्विज ऽआशिष ऽआशासते ॥ २४ ॥ अथाऽङ्गुलीर्न्यचति । 'स्वाहा यज्ञं मनस' ऽइति द्वे 'स्वाहोरोरन्तरिक्षादि'ति द्वे 'स्वाहा द्यावापृथिवीभ्यामि'ति द्वे 'स्वाहा वातादारभ' ऽइति मुष्टीकरोति न वै यज्ञः

(१) शु० सं० अ० ४ क० ४। (२) शु० सं० अ० ४ क० ४। (३) शु० सं० अ० ४ क० ४। (४) शु० सं० अ० ४ क० ४। (५) शु० सं० अ० ४ क० ४। (६) शु० सं० अ० ४ क० ४। (७) शु० सं० अ० ४ क० ४। (८) शु० सं० अ० ४ क० ५। (९) शु० सं० अ० ४ क० ६। (१०) शु० सं० अ० ४ क० ६। (११) शु० सं० अ० ४ क० ६। (१२) शु० सं० अ० ४ क० ६।

प्रत्यक्षमिवाऽऽरभे यथाऽयं दण्डो वा वासो वा परोऽक्षं वै देवाः परोऽक्षं यज्ञः ॥ २५ ॥ स यदाह । स्वाहा यज्ञं मनस ऽइति तन्मनस ऽआरभते स्वाहोरोरन्तरिक्षादिति तदन्तरिक्षादारभते स्वाहा द्यावापृथिवीभ्यामिति तदाभ्यां द्यावापृथिवीभ्यामारभते ययोरिदꣳ सर्वमधि स्वाहा वाता-दारभ ऽइति वातो वै यज्ञस्तद्यज्ञं प्रत्यक्षमारभते ॥ २६ ॥ अथ यत्स्वाहा—स्वाहेति करोति। यज्ञो वै स्वाहाकारो यज्ञमेवैतदात्मन्धत्तेऽत्रो ऽएव वाचं यच्छति वाग्वै यज्ञो यज्ञमेवैतदात्मन्धत्ते ॥ २७ ॥ अथैनꣳ शालां प्रपादयति। स जघनेनाऽऽहवनीयमेत्यग्रेण गार्हपत्यꣳ सोऽस्य सञ्चरो भवत्या सुत्यायै तद्यदस्यैष सञ्चरो भवत्या सुत्याया-ऽअग्निर्वै योनिर्यज्ञस्य गर्भो दीक्षितोऽन्तरेण वै योनिं गर्भः सञ्चरति स यत्स तत्रैजति त्वत्परि त्वदावर्त्तते तस्मादिमे गर्भा ऽएजन्ति त्वत्परि त्वदावर्त्तन्ते तस्मादस्यैष सञ्चरो भवत्या सुत्यायै ॥ २८ ॥

प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



सर्वाणि ह वै दीक्षाया यजूꣳष्यौद्ग्रभणानि। उद्-गृभ्णीते वा ऽएषोऽस्माल्लोकाद्देवलोकमभि यो दीक्षत ऽएतैरेव तद्यजुर्भिरुद्गृभ्णीते तस्मादाहुः सर्वाणि दीक्षाया यजूꣳष्यौद्ग्रभणानीति तत ऽएतान्यवाऽन्तरा माऽऽचक्षत-ऽऔद्ग्रभणानीत्याहुतयो ह्येता ऽआहुतिर्हि यज्ञः परोऽक्षं

वै यजुर्जपत्यथैष प्रत्यक्षं यज्ञो यदाहुतिस्तदेतेन यज्ञेनोद्गृभ्णीतेऽस्माल्लोकाद्देवलोकमभि ॥ १ ॥ ततो यानि त्रीणि स्रुवेण जुहोति । तान्याधीतयजूꣳषीत्याचक्षते सम्पद एव कामाय चतुर्थꣳ हूयतेऽथ यत्पञ्चमꣳ स्रुचा जुहोति तदेव प्रत्यक्षमौद्ग्रभणमनुष्टुभा हि तज्जुहोति वागनुष्टुब्वाग्घि यज्ञः ॥ २ ॥ यज्ञेन वै देवाः । इमां जितिं जिग्युर्यैषामियं जितिस्ते होचुः कथं न इदं मनुष्यैरनभ्यारोह्यꣳ स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्नथ यदेनेनायोपयꣳस्तस्माद्यूपो नाम ॥ ३ ॥ तद्वाऽऋषीणामनुश्रुतमास । ते यज्ञꣳ समभरन्यथाऽयं यज्ञः सम्भृत एवं वा एष यज्ञꣳ सम्भरति यदेतानि जुहोति ॥ ४ ॥ तानि वै पञ्च जुहोति । संवत्सरसम्मितो वै यज्ञः पञ्च वा ऋतवः संवत्सरस्य तं पञ्चभिराप्नोति तस्मात्पञ्च जुहोति ॥ ५ ॥ अथातो होमस्यैव । 'आकूत्यै प्रयुजेऽग्नये स्वाहे'त्या वा अग्ने कुवते यजेयेति तद्यदेवाऽत्र यज्ञस्य तदेवैतत्संभृत्यात्मन्कुरुते ॥ ६ ॥ 'मेधायै मनसेऽग्नये स्वाहे'ति । मेधया वै मनसाऽभिगच्छति यजेयेति तद्यदेवाऽत्र यज्ञस्य तदेवैतत्संभृत्यात्मन्कुरुते ॥ ७ ॥ 'दीक्षायै तपसेऽग्नये स्वाहे'ति । अन्वेवैतदुच्यते नेत्तु हूयते ॥ ८ ॥ 'सरस्वत्यै पूष्णेऽग्नये स्वाहे'ति । वाग्वै सर-

(१) शु॰ स॰ अ॰ ४ क॰ ७ । (२) शु॰ स॰ अ॰ ४ क॰ ७ । (३) शु॰ स॰ अ॰ ४ क॰ ७ । (४) शु॰ स॰ अ॰ ४ क॰ ७ ।

स्वती वाग्यजुः पशवो वै पूषा पुष्टिर्वै पूषा पुष्टिः पशवः पशवो हि यज्ञस्तद्यद्देवाऽत्र यज्ञस्य तदेवैतत्सम्भृत्याऽऽत्मन्कुरुते ॥ ९ ॥ तदाहुः । अनद्धेवैता ऽआहुतयो हूयन्तेऽप्रतिष्ठिता ऽअदेवकास्तत्र नेन्द्रो न सोमो नाऽग्निरिति ॥ १० ॥ आकूत्यै प्रयुजेऽग्नये स्वाहेति । नाऽत ऽएकञ्चनाऽग्निर्वा ऽअद्धेवाऽग्निः प्रतिष्ठितः स यदग्नौ जुहोति तेनैवैता ऽअद्धेव तेन प्रतिष्ठितास्तस्माद् सर्वास्वेवाऽग्नये स्वाहेति जुहोति तत ऽएतान्याधीतयजूᳩषीत्याचक्षते ॥ ११ ॥ आकूत्यै प्रयुजेऽग्नये स्वाहेति । आत्मना वाऽग्र ऽआकुवते यजेयेति तमात्मन ऽएव प्रयुङ्क्ते यत्तनुते ते ऽअस्यैते ऽआत्मन्देवते ऽआधीते भवत ऽआकूतिश्च प्रयुक् च ॥ १२ ॥ मेधायै मनसेऽग्नये स्वाहेति । मेधया वै मनसाऽभिगच्छति यजेयेति ते ऽअस्यैते ऽआत्मन्देवते ऽआधीते भवतो मेधा च मनश्च ॥ १३ ॥ सरस्वत्यै पूष्णेऽग्नये स्वाहेति । वाग्वै सरस्वती वाग्यजुः साऽस्यैषाऽऽत्मन्देवताऽऽधीता भवति वाक्पशवो वै पूषा पुष्टिर्वै पूषा पुष्टिः पशवः पशवो हि यज्ञस्तेऽस्यैत ऽआत्मन्पशवऽआधीता भवन्ति तद्यदस्यैता ऽआत्मन्देवता ऽआधीता भवन्ति तस्मादाधीतयजूᳩषि नाम ॥ १४ ॥ अथ चतुर्थीं जुहोति । 'ओपो देवीर्बृहतीर्विश्वशम्भुवो द्यावापृथिवी ऽउरोऽअन्तरिक्ष। बृहस्पतये हविषा विधेम स्वाहे'त्येषा ह नेदीयो यज्ञस्याऽपाᳩ हि कीर्तयत्यापो हि यज्ञो द्यावापृथिवी ऽउरो-

(१) शु० सं० अ० ४ कं० ७।

ऽअन्तरिक्षेति लोकानाथं हि कीर्त्तयति बृहस्पतये हविषा विधेम स्वाहेति ब्रह्म वै बृहस्पतिर्ब्रह्म यज्ञ ऽएतेनो हैषा नेदीयो यज्ञस्य ॥१५॥ अथ यां पञ्चमीᳯ स्रुचा जुहोति । सा हैव प्रत्यक्षं यज्ञोऽनुष्टुभा हि तां जुहोति वाग्घ्यनुष्टुब्वाग्घि यज्ञः ॥ १६ ॥ अथ यद् ध्रुवायामाज्यं परिशिष्टं भवति । तज्जुह्वामानयति त्रिः स्रुवेणाऽज्यविलापन्या ऽअधि जुह्वां गृह्णाति यत्तृतीयं गृह्णाति तत्स्रुवमभिपूरयति ॥ १७ ॥ स जुहोति । 'विश्वो देवस्य नेतुर्मर्त्तो व्वुरीत सख्यम् । विश्वो राय ऽइषुध्यति द्युम्नं व्वृणीत पुष्यसे स्वाहे'ति ॥ १८ ॥ सैषा देवताभिः पङ्क्तिर्भवति । विश्वो देवस्येति वैश्वदेवं नेतुरिति सावित्रं मर्त्तो व्वुरीतेति मैत्रं द्युम्नं व्वृणीतेति बार्हस्पत्यं द्युम्नः हि बृहस्पतिः पुष्यस ऽइति पौष्णः ॥ १९ ॥ सैषा देवताभिः पङ्क्तिर्भवति । पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चर्त्तवः संवत्सरस्यैतमेवैतया-ऽऽप्नोति यद्देवताभिः पङ्क्तिर्भवति ॥ २० ॥ तां वा-ऽअनुष्टुभा जुहोति । वाग्वा ऽअनुष्टुब्वाग्यज्ञस्तद्यज्ञं प्रत्यक्ष-माप्नोति ॥ २१ ॥ तदाहुः । एतामेवैकां जुहुयाद्यस्मै कामा-येतरा हूयन्त ऽएतयैव तं काममाप्नोतीति तां वै यद्येकां जुहुयात्पूर्णां जुहुयात्सर्वं वै पूर्णᳯ सर्वमेवैनयैतदाप्नोत्यथ यत्स्रुवमभिपूरयति स्रुचं तदभिपूरयति तां पूर्णां जुहोत्यन्वै-वैतदुच्यते सर्वास्त्वेव हूयन्ते ॥ २२ ॥ तां वा ऽअनुष्टुभा जुहोति । सैषाऽनुष्टुप्सत्येकत्रिᳯशदक्षरा भवति दश

(१) शु० सं० अ० ४ क० ८ ।

पाण्ण्या ऽअङ्गुलयो दश पाद्या दश प्राणा ऽआत्मैकत्रिंशो यस्मिन्नेते प्राणाः प्रतिष्ठिता ऽएतावान्वै पुरुषः पुरुषो यज्ञः पुरुषसम्मितो यज्ञः स यावानेव यज्ञो यावत्यस्य मात्रा तावन्तमेवैनमेतदाप्नोति यदनुष्टुभैकत्रिंशदक्षरया जुहोति ॥ २३ ॥

प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति प्रथमोऽध्यायः ॥ १ ॥



दक्षिणेनाऽऽहवनीयं प्राचीनग्रीवे कृष्णाजिने ऽउपस्तृणाति। तयोरेनमधि दीक्षयति यदि द्वे भवस्तदनयोर्लोकयोरूपं तदेनमनयोर्लोकयोरधि दीक्षयति ॥ १ ॥ सम्बद्धान्ते भवतः। सम्बद्धाविव हीमौ लोकौ तद्यसमुते पश्चाद्भवतस्तदिमावेव लोकौ मिथुनीकृत्य तयोरेनमधि दीक्षयति ॥२॥ यद्यु ऽएकं भवति। तदेषां लोकानाꣳ रूपं तदेनमेषु लोकेष्वधि दीक्षयति यानि शुक्लानि तानि दिवो रूपं यानि कृष्णानि तान्यस्यै यदि वेतरथा यान्येव कृष्णानि तानि दिवो रूपं यानि शुक्लानि तान्यस्यै यान्येव बभ्रूणीव हरीणि तान्यन्तरिक्षस्य रूपं तदेनमेषु लोकेष्वधि दीक्षयति ॥ ३ ॥ अन्तकमु तर्हि पश्चात्प्रत्यस्येत्। तदिमानेव लोकान्मिथुनीकृत्य तेष्वेनमधि दीक्षयति ॥४॥ अथ जघनेन कृष्णाजिने पश्चात् प्राङ् *जाक्वाक्न ऽउपविशति। स यत्र शुक्लानां च

* जान्वाक्न सङ्कुचितजानुक इत्यर्थः ।

कृष्णानां च सन्धिर्भवति तदेवमभिमृश्य जप'त्यृक्सामयोः शिल्पे स्थ, इति यद्वै प्रतिरूपं तच्छिल्पमृचां च साम्नां च प्रतिरूपे स्थ इत्येवैतदाह ॥५॥ 'ते वामारभ' इति। गर्भो वा एष भवति यो दीक्षते स छन्दांसि प्रविशति तस्मान्न्यक्नाङ्गुलिरिव भवति न्यक्नाङ्गुलय इव हि गर्भाः ॥ ६ ॥ स यदाह । ते वामारभ इति ते वाम्प्रविशामीत्येवैतदाह 'ते मा पातमास्य यज्ञस्योदृच' इति ते मा गोपायतमास्य यज्ञस्य संस्थाया इत्येवैतदाह ॥ ७ ॥ अथ दक्षिणेन जानुनाऽऽरोहति । 'शर्म्मासि शर्म्म मे यच्छे'ति चर्म्म वा एतत्कृष्णस्य तदस्य तन्मानुषं शर्म्म देवत्रा तस्मादाह शर्म्मासि शर्म्म मे यच्छेति 'नमस्ते अस्तु मा मा हिंसीरि'ति श्रेयांसं वा एष उपाधिरोहति यो यज्ञं यज्ञो हि कृष्णाजिनं तस्मा एवैतद्यज्ञाय निह्नुते तथो हैनमेष यज्ञो न हिनस्ति तस्मादाह नमस्ते अस्तु मा मा हिंसीरिति ॥ ८ ॥ स वै जघनार्द्ध इवैवाग्र आसीत। अथ यदग्र एव मद्ध्य उपविशेद्य एनं तत्रानुव्याहरेद्रेक्ष्यति वा प्र वा पतिष्यतीति तथा हैव स्यात्तस्माज्जघनार्द्ध इवैवाग्र आसीत ॥ ९ ॥ अथ मेखलां परिहरते । अङ्गिरसो ह वै दीक्षितानवल्यमविन्दन्ते नाऽन्यद्व्रतादशनमवाऽकल्पयँस्त एतामूर्जमपश्यन्त्समातिं तां मद्ध्यत आत्मन ऊर्जमदधत समातिं तया समाप्नु-

(१) शु० सं० अ० ४ क० १। (२) शु० सं० अ० ४ क० १। (३) शु० सं० अ० ४ क० १। (४) शु० सं० अ० ४ क० १। (५) शु० सं० अ० ४ क० १।

वँस्तथो ऽएवैष ऽएतां मद्धयत ऽआत्मन ऽऊर्ज्जं धत्ते समाप्तिं तया समाप्नोति ॥ १० ॥ सा वै शाणी भवति । मृद्वय-सदिति न्वेव शाणी यत्र वै प्रजापतिर्जायत गर्ब्भो भूत्वैतस्माद्यज्ञात्तस्य यन्नेदिष्ठमुल्वमासीत्ते शणास्तस्मात्ते पूतयो वान्ति यद्वस्य जराय्वासीत्तद्दीक्षितवसनमन्तरं वा ऽउल्वं जरायुणो भवति तस्मादेषाऽन्तरा वाससो भवति यथैवाऽतः प्रजापतिर्जायत गर्ब्भो भूत्वैतस्माद्यज्ञादेवमेवै-षोऽतो जायते गर्ब्भो भूत्वैतस्माद्यज्ञात् ॥ ११ ॥ सा वै त्रिवृद्भवति । त्रिवृद्ध्यन्नं पशवो ह्यन्नं पिता माता यज्जायते तत्तृतीयं तस्मात्त्रिवृद्भवति ॥ १२॥ मुञ्जवल्शेनाऽन्वस्ता भवति । वज्रो वै शरो विरक्षस्तायै स्तुकासर्गंथं सृष्टा भवति सा यत्प्रसलवि सृष्टा स्याद्यथेदमन्न्या रज्जवो मानुषी स्याद्यदपसलवि सृष्टा स्यात्पितृदेवत्या स्यात्तस्मा-त्स्तुकासर्गंथं सृष्टा भवति ॥ १३ ॥ तां परिहरते । 'ऊर्ग-स्याङ्गिरसी'त्यङ्गिरसो ह्येतामूर्ज्जमपश्य'न्नूर्णम्म्रदा ऽऊर्ज्जं मयि धेही'ति नाऽत्र तिरोहितमिवाऽस्ति ॥ १४ ॥ अथ-नीविमुद्गूहते । 'सोमस्य नीविरसी'त्यदीक्षितस्य वा ऽअस्यैषाऽग्रे नीविर्ब्भवत्यथाऽत्र दीक्षितस्य सोमस्य तस्मा-दाह सोमस्य नीविरसीति ॥ १५ ॥ अथ प्रोर्णुते । गर्ब्भो वा ऽएष भवति यो दीक्षते प्राऽऽवृत्ता वै गर्ब्भा ऽउल्वेनेव जरायुणेव तस्माद्वै प्रोर्णुते ॥ १६ ॥ स प्रोर्णुते । 'विष्णोः

(१) शु० सं० अ० ४ क० १० । (२) शु० सं० अ० ४ क० १० । (३) शु० सं० अ० ४ क० १० । (४) शु० सं० अ० ४ क० १० ।

शर्म्मासि शर्म्म यजमानस्येत्युभयं वा ऽएषोऽत्र भवति यो दीक्षते विष्णुश्च यजमानश्च यदह दीक्षते तद्विष्णुर्भवति यद्यजते तद्यजमानस्तस्मादाह विष्णोः शर्म्मासि शर्म्म यजमानस्येति ॥ १७ ॥ अथ कृष्णविषाणाᳩ सिचि बध्नीते। देवाश्च वा ऽअसुराश्चोभये प्राजापत्याः प्रजापतेः पितुर्दायमुपेयुर्म्मन ऽएव देवा ऽउपायन्वाचमसुरा यज्ञमेव तद्देवा ऽउपायन्वाचमसुरा ऽअमूमेव देवा ऽउपायन्निमामसुराः ॥ १८ ॥ ते देवा यज्ञमब्रुवन्। योषा वा ऽइयं वागुपमन्त्रयस्व ह्वयिष्यते वै त्वेति स्वयं वा हैवैक्षत योषा वा ऽइयं वागुपमन्त्रयै ह्वयिष्यते वै मेति तामुपाऽऽमन्त्रयत सा हाऽस्मा ऽआरकादिवैवाऽग्र ऽआसूयत्तस्मादु स्त्री पुᳪसोपमन्त्रिताऽऽरकादिवैवाऽग्रेऽसूयति स होवाचाऽऽरकादिव वै म ऽआसूयीदिति ॥ १९ ॥ ते होचुः। उपैव भगवो मन्त्रयस्व ह्वयिष्यते वै त्वेति तामुपाऽऽमन्त्रयत सा हाऽस्मै निपलाशमिवोवाद तस्मादु स्त्री पुᳪसोपमन्त्रिता निपलाशमिवैव वदति स होवाच निपलाशमिव वै मेऽवादीदिति ॥ २० ॥ ते होचुः। उपैव भगवो मन्त्रयस्व ह्वयिष्यते वै त्वेति तामुपाऽऽमन्त्रयत सा हैनं जुहुवे तस्मादु स्त्री पुमाᳪसᳩ ह्वयन्त ऽएवोत्तमᳪ स होवाचाऽऽह्वत वै मेति ॥ २१ ॥ ते देवा ऽईक्षाञ्चक्रिरे। योषा वा ऽइयं वाग्यदेनं न युवितेहैव मा तिष्ठन्तमभ्येहीति ब्रूहि तां तु न ऽआगतां प्रति प्रब्रूतादिति सा हैनं तदेव तिष्ठन्तमभ्येयाय तस्मादु स्त्री पुमाᳪसᳪ सᳪस्कृते

तिष्ठन्तमभ्यैति ताॅ हैभ्य ऽआगतां प्रति प्रोवाचेयं वा-ऽआगादिति ॥ २२ ॥ तां देवाः । असुरेभ्योऽन्तरायँस्ताॅ स्वीकृत्याऽग्नावेव परिगृह्य सर्वहुतमजुहवुराहुतिर्हि देवानाॅ स यामेवाऽमूमनुष्टुभा जुहवुस्तदेवैनां तद्देवाः स्व्यकुर्वत तेऽसुरा ऽआत्तवचसो हेऽलवो हेऽलव ऽइति वदन्तः परावभूवुः ॥ २३ ॥ तत्रैतामपि वाचमूदुः । उपजिज्ञास्याॅ स म्लेच्छस्तस्मान्न ब्राह्मणो म्लेच्छेदसुर्य्या हैषा वा वागेव-मेवैष द्विषताॅ सपत्नानामादत्ते वाचन्तेऽस्याऽऽत्तवचसः पराभवन्ति य ऽएवमेतद्वेद ॥ २४ ॥ सोऽयं यज्ञो वाचम-भिदध्यौ । मिथुन्न्येनया स्यामिति ताॅ सम्बभूव ॥ २५ ॥ इन्द्रो ह वा ऽईक्षाञ्चक्रे । महद्वा ऽइतोऽभ्वं जनिष्यते यज्ञस्य च मिथुनाद्वाचश्च यन्मा तन्नाऽभिभवेदिति स-ऽइन्द्र ऽएव गर्ब्भो भूत्वैतन्मिथुनं प्रविवेश ॥ २६ ॥ स ह संवत्सरे जायमान ऽईक्षाञ्चक्रे । महावीर्य्या वा ऽइयं योनिर्य्या मामदीधरत यद्वै मेतो महदेवाऽभ्वं नाऽनुप्रजा-येत यन्मा तन्नाऽभिभवेदिति ॥ २७ ॥ तां प्रतिपरामृश्या-ऽऽवेष्ट्याऽच्छिनत् । तां यज्ञस्य शीर्षन्प्रत्यदधाद्यज्ञो हि कृष्णः स यः स यज्ञस्तत्कृष्णाजिनं यो सा योनिः सा कृष्णविषाणाऽथ यदेनामिन्द्र ऽआवेष्ट्याऽऽच्छिनत्तस्मादा-वेष्टितेव स यथैवाऽत ऽइन्द्रोऽजायत गर्ब्भो भूत्वैतस्मा-न्मिथुनादेवमेवैषोऽतो जायते गर्ब्भो भूत्वैतस्मान्मिथु-नात् ॥ २८ ॥ तां वा ऽउत्तानामिव बध्नाति । उत्तानेव वै योनिर्गर्ब्भं बिभर्त्यथ दक्षिणां भ्रुवमुपर्य्युपरि ललाट-

मुपस्पृश'तीन्द्रस्य योनिरसी'तीन्द्रस्य ह्येषा योनिरतो वा ह्येनां प्रविशन्प्रविशत्यतो वा जायमानो जायते तस्मादाहेन्द्रस्य योनिरसीति ॥ २९ ॥* अथोल्लिखति । 'सुसस्याः कृषीस्कृधी'ति यज्ञमेवैतज्जनयति यदा वै सुषमं भवत्यथाऽलं यज्ञाय भवति यदो दुःषमं भवति न तह्यात्मने च नाऽलं भवति तद्यज्ञमेवैतज्जनयति ॥ ३० ॥ अथ न दीक्षितः । काष्ठेन वा नखेन वा कण्डूयेत गर्भो वा ऽएष भवति यो दीक्षते यो वै गर्भस्य काष्ठेन वा नखेन वा कण्डूयेदपास्यन्म्रियेतत्तो दीक्षितः पामनो भवितोर्दीक्षितं वा ऽअनु रेताᳬसि ततो रेताᳬसि पामनानि जनितोः स्वा वै योनी रेतो न हिनस्त्येषा वा ऽएतस्य स्वा योनिर्भवति यत्कृष्णविषाणा तथो हैनमेषा न हिनस्ति तस्माद्दीक्षितः कृष्णविषाणयैव कण्डूयेत नाऽन्येन कृष्णविषाणायाः ॥३१॥ अथाऽस्मै दण्डं प्रयच्छति । वज्रो वै दण्डो विरक्षस्तायै ॥३२॥ औदुम्बरो भवति। अन्नं वा ऽऊर्गुदुम्बर ऽऊर्ज्जोऽन्नाद्यस्याऽवरुद्धयै तस्मादौदुम्बरो भवति ॥३३॥ मुखसम्मितो भवति । एतावद्वै वीर्य्यᳬ स यावदेव वीर्य्यं तावाँस्तद्भवति यन्मुखसम्मितः ॥ ३४ ॥ तमुच्छ्रयति । 'उच्छ्रयस्व वनस्पत ऽऊर्द्धो मा पाह्यᳬ हस ऽआस्य यज्ञस्योदृच' ऽइत्यूर्द्धो मा गोपायाऽस्य यज्ञस्य सᳬस्थाया ऽइत्येवैतदाह ॥ ३५ ॥ अत्र हैके । अङ्गुलीश्च न्यचन्ति वाचं च यच्छन्त्यतो हि

* अत्र शतम् १७०० ॥

( १ ) शु० सं० अ० ४ क० १० । ( २ ) शु० स० अ० ४ क० १० । ( ३ ) शु० स० अ० ४ क० १० ।

किंश्च न जपिष्यन्भवतीति ब्रुदन्तस्तदु तथा न कुर्य्याद्यथा पुराश्वं धावन्तमनुलिप्सेत तं नाऽनुलभेतैवङ्ह स यज्ञं नाऽनुलभते तस्मादमुत्रैवाऽङ्गुलीर्न्यचेदमुत्र वाचं यच्छेत् ॥ ३६ ॥ अथ यद्दीक्षितः । ऋचं वा यजुर्वा साम वाऽभिव्याहरत्यभिस्थिरसमभिस्थिरमेवैतद्यज्ञमारभते तस्मादमुत्रैवाऽङ्गुलीर्न्यचेदमुत्र वाचं यच्छेत् ॥ ३७ ॥ अथ यद्वाचं यच्छति । वाग्वै यज्ञो यज्ञमेवैतदात्मन्धत्तेऽथ यद्वाचंयमो व्याहरति तस्मादु हैष विसृष्टो यज्ञः पराङ्डावर्त्तते तत्रो वैष्णवीमृचं वा यजुर्वा जपेद्यज्ञो वै विष्णुस्तद्यज्ञं पुनरारभते तस्यो हैषा प्रायश्चित्तिः ॥ ३८ ॥ अथैकऽउद्वदति । दीक्षितोऽयं ब्राह्मणो दीक्षितोऽयं ब्राह्मणऽइति निवेदितमेवैनमेतत्सन्तं देवेभ्यो निवेदयत्ययं महावीर्य्यो यो यज्ञं प्रापदित्ययं युष्माकैकोऽभूत्तं गोपायतेत्येवैतदाह त्रिष्कृत्व ऽआह त्रिवृद्धि यज्ञः ॥ ३९ ॥ अथ यद् ब्राह्मण ऽइत्याह । अनद्धेव वा ऽअस्याऽतः पुरा ज्ञातं भवतीदु ह्याहू रक्षाᳫंसि योषितमनु सचन्ते तदुत रक्षाᳫंस्येव रेत ऽआदधतीत्यथाऽत्राऽद्धा जायते यो ब्रह्मणो यो यज्ञाज्जायते तस्मादपि राजन्यं वा वैश्यं वा ब्राह्मणऽइत्येव ब्रूयाद् ब्रह्मणो हि जायते यो यज्ञाज्जायते तस्मादाहुर्न्न सवनकृतः हन्यादेनस्वी हैव सवनकृतेति ॥ ४० ॥

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथम प्रपाठकः ॥ १ ॥

कण्डिकासंख्या ॥ १२४ ॥

वाचं यच्छति । स वाचंयम ऽआस्त ऽआस्तमयात्तद्यद्वाचं यच्छति ॥ १ ॥ यज्ञेन वै देवाः । इमां जितिं जिग्युर्यैषामियं जितिस्ते होचुः कथं न ऽइदं मनुष्यैरनभ्यारोह्यꣳ स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्नथ यदेनेनाऽयोपयँस्तस्माद्यूपो नाम ॥ २ ॥ तद्वाऽऋषीणामनुश्रुतमास । ते यज्ञꣳ समभरन्यथाऽयं यज्ञः सम्भृत ऽएवं वा ऽएष यज्ञꣳ सम्भरति यो दीक्षते वाग्वै यज्ञः ॥ ३ ॥ तामस्तमिते वाचं विसृजते । संवत्सरो वै प्रजापतिः प्रजापतिर्यज्ञोऽहोरात्रे वै संवत्सर ऽएते ह्येनं परिप्लवमाने कुरुतः सोऽहं न दीक्षिष्ट स रात्रिं प्रापत्स यावानेव यज्ञो यावत्यस्य मात्रा तावन्तमेवैतदाप्त्वा वाचं विसृजते ॥ ४ ॥ तद्धैके । नक्षत्रं दृष्ट्वा वाचं विसर्जयन्त्यत्राऽनुष्ट्याऽस्तमितो भवतीति वदन्तस्तदु तथा न कुर्याद्यत्क ते स्युर्यन्मेघः स्यात्तस्माद्यत्रैवाऽनुष्ट्याऽस्तमितं मन्येत तदेव वाचं विसर्जयेत् ॥ ५ ॥ अनेनो हैके वाचं विसर्जयन्ति । 'भूर्भुवः स्वरि'ति यज्ञमाप्यायय्याऽमो यज्ञꣳ सन्दध्मऽइति वदन्तस्तदु तथा न कुर्यान्न ह स यज्ञमाप्याययति न सन्दधाति य ऽएतेन वाचं विसर्जयति ॥ ६ ॥ अनेनैव वाचं विसर्जयेत् । 'व्रतं कृणुत व्रतं कृणुताऽग्निर्ब्रह्माऽग्निर्यज्ञो वनस्पतिर्यज्ञिय' ऽइत्येष ह्यस्याऽत्र यज्ञो भवत्येतद्धविर्यथा पुराऽग्निहोत्रं तद्यज्ञेनैवैतद्यज्ञꣳ सम्भृत्य यज्ञे

(१) शु० सं० अ० ३६ क० १। (२) शु० सं० अ० ४ क० ११।

यज्ञं प्रतिष्ठापयति यज्ञेन यज्ञः सन्तनोति सन्ततः ह्येवा-ऽस्यैतद्व्रतं भवत्या सुत्यायै त्रिष्कृत्व ऽआह त्रिवृद्धि यज्ञः ॥ ७ ॥ अथाऽग्निमभ्यावृत्य वाचं विसृजते। न ह स यज्ञमाप्याययति न सन्दधाति योऽतोऽन्येन वाचं विसृजते स प्रथमं व्याहरन्सत्यं वाचोऽभिव्याहरति ॥ ८ ॥ अग्निर्ब्रह्मेति। अग्निर्हि ब्रह्माऽग्निर्यज्ञ ऽइत्यग्निर्हि यज्ञो वनस्पतिर्यज्ञिय ऽइति वनस्पतयो हि यज्ञिया न हि मनुष्या यजेरन्यद्वनस्पतयो न स्युस्तस्मादाह वनस्पतिर्यज्ञिय ऽइति ॥ ९ ॥ अथाऽस्मै व्रतः श्रपयन्ति। देवान्वा ऽएष उपाऽऽवर्तते यो दीक्षते स देवतानामेको भवति शृतं वै देवानाः हविर्नाऽशृतं तस्माच्छ्रपयन्ति तदेष ऽएव व्रतयति नाऽग्नौ जुहोति तद्यदेष ऽएव व्रतयति नाऽग्नौ जुहोति ॥१०॥ यज्ञेन वै देवाः। इमां जितिं जिग्युर्यैषामियं जितिस्ते होचुः कथं न ऽइदं मनुष्यैरनभ्यारोह्यः स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्नथ यदेनेनाऽयोपयँस्तस्माद्यूपो नाम ॥ ११ ॥ तद्वा ऽऋषीणामनुश्रुतमास। ते यज्ञः समभर-न्यथाऽयं यज्ञः सम्भृत ऽएष वा ऽअत्र यज्ञो भवति यो दीक्षत ऽएष ह्येनं तनुत ऽएष ऽएनं जनयति तद्यदेवाऽत्र यज्ञस्य निर्धीतं यद्विदुग्धं तदेवैतत्पुनराप्याययति यदेष ऽएव व्रतयति नाऽग्नौ जुहोति न ह्याऽऽप्याययेद्यदग्नौ जुहु-याज्जुहवद्ध हैव मन्येत नाऽजुहवत् ॥ १२ ॥ इमे वै प्राणाः। मनोजाता मनोयुजो दक्षक्रतवो वागेवाऽग्निः प्राणोदानौ

मित्रावरुणौ चक्षुरादित्यः श्रोत्रं विश्वे देवा ऽएतासु हैवा-ऽस्यैतद्देवतासु हुतं भवति ॥ १३ ॥ तद्धैके । प्रथमे व्रत ऽउभौ व्रीहियवावावपन्त्युभाभ्याथं रसाभ्यां यदेवाऽत्र यज्ञस्य निर्धीतं यद्विदुग्धं तत्पुनराप्याययाम ऽइति वदन्तो यद्यु व्रतदुघा न दुहीत यस्यैवाऽतः कामयेत तस्य व्रतं कुर्य्यादेतदु ह्येवाऽस्यैता ऽउभौ व्रीहियवावन्वारब्धौ भवत ऽइति तदु तथा न कुर्य्यान्न ह स यज्ञमाप्याययति न सन्दधाति य ऽउभौ व्रीहियवावावपति तस्मादन्यतरमेवा-ऽऽवपेद्धविर्वा ऽअस्यैता ऽउभौ व्रीहियवौ भवतः स यदेवा-ऽस्यैतौ हविर्भवतस्तदेवाऽस्यैतावान्वारब्धौ भवतो यद्यु व्रतदुघा न दुहीत यस्यैवाऽतः कामयेत तस्य व्रतं कुर्य्यात् ॥ १४ ॥ तद्धैके । प्रथमे व्रते सर्वौषधः सर्वसुरभ्यावपन्ति यदि दीक्षितमार्त्तिर्विन्देद्येनैवाऽतः कामयेत तेन भिषज्येद्यथा व्रतेन भिषज्येदिति तदु तथा न कुर्य्यान्मानुषः ह ते यज्ञे कुर्वन्ति व्यृद्धं वै तद्यज्ञस्य यन्मानुषं नेद्व्यृद्धं यज्ञे करवाणीति यदि दीक्षितमार्त्तिर्विन्देद्येनैवाऽतः कामयेत तेन भिषज्येत्स-मास्तिर्ह्येव पुण्या ॥१५॥ अथाऽस्मै व्रतं प्रयच्छति। अतिनीय मानुषं कालः सायं दुग्धमपररात्रे प्रातर्दुग्धमपराह्ले व्या-कृत्या ऽएव दैवं चैवैतन्मानुषं च व्याकरोति ॥ १६ ॥ अथाऽस्मै व्रतं प्रदास्यन्नप ऽउपस्पर्शयति । 'दैवीं धियं मनामहे सुमृडीकामभिष्टये वर्चोधां यज्ञवाहसः सुतीर्था नो ऽअसद्वश' ऽइति मानुषाय वा ऽएष पुराऽशनायाऽव-

(१) शु० सं० अ० ४ कं० ११ ।

नेनिक्तेऽथाऽत्र दैव्यै धिये तस्मादाह दैवीं धियं मनामहे सुमृडीकामभिष्टये वर्चोधां यज्ञवाहसꣳ सुतीर्था नो ऽअसद्वश ऽइति स यावत्क्रियच्च व्रतं व्रतयिष्यन्नप ऽउपस्पृशेदेतेनैवोपस्पृशेत् ॥ १७ ॥ अथ व्रतं व्रतयति । 'ये देवा मनोजाता मनोयुजो दक्षक्रतवस्ते नोऽवन्तु ते नः पान्तु तेभ्यः स्वाहे'ति तद्यथा वषट्कृतꣳ हुतमेवमस्यैतद्भवति ॥ १८ ॥ अथ व्रतं व्रतयित्वा नाभिमुपस्पृशते । 'श्वात्राः पीता भवत यूयमापो ऽअस्माकमन्तरुदरे सुशेवाः । ता ऽअस्मभ्यमयक्ष्मा ऽअनमीवा ऽअनागसः स्वदन्तु देवीरमृता ऽऋतावृध' ऽइति देवान्वा ऽएष ऽउपाऽऽवर्त्तते यो दीक्षते स देवतानामेको भवत्यनुत्सिक्तं वै देवानाꣳ हविरथैतद्व्रतप्रदो मिथ्याकरोति व्रतमुपोत्सिञ्चन्व्रतं प्रमीणाति तस्यो हैषा प्रायश्चित्तिस्तथो हाऽस्यैतन्न मिथ्याकृतं भवति न व्रतं प्रमीणाति तस्मादाह श्वात्राः पीता भवत यूयमापो ऽअस्माकमन्तरुदरे सुशेवाः । ताऽअस्मभ्यमयक्ष्मा ऽअनमीवा ऽअनागसः स्वदन्तु देवीरमृता ऽऋतावृध ऽइति स यावत्क्रियच्च व्रतं व्रतयित्वा नाभिमुपस्पृशेदेतेनैवोपस्पृशेत्कस्तद्वेद यद्व्रतप्रदो व्रतमुपोत्सिञ्चेत् ॥ १९ ॥ अथ यत्र मेक्ष्यन्भवति । तत्कृष्णविषाणया लोष्टं वा किञ्चिद्वोपहन्तीयं ते यज्ञिया तनूरि'तीयं वै पृथिवी देवी देवयजनी सा दीक्षितेन नाभिमिह्या

(१) शु० सं० अ० ४ क० ११। (२) शु० सं० अ० ४ क० १२। (३) शु० सं० अ० ४ क० १२। (४) शु० सं० अ० ४ क० ११।

तस्या ऽएतदुद्गृह्णैव यज्ञियां तनूमथाऽयज्ञियः शरीरमभि-
मेह'त्यपो'[1] मुञ्चामि न प्रजामि'त्युभयं वा ऽअत ऽएत्याऽऽ-
पश्च रेतश्च स ऽएतदप ऽएव मुञ्चति न प्रजा'मंहः
होमुचः स्वाहा कृता' ऽइत्यंहस ऽइव ह्येता मुञ्चन्ति
यदुदरे शुष्टितं भवति तस्मादाहाऽंहोमुच ऽइति स्वाहा
कृताः 'पृथिवी माऽऽविशतेत्या'हुतयो भूत्वा शान्ताः पृथिवी-
माविशतेत्येवैतदाह ॥ २० ॥ अथ पुनर्लोष्टं न्यस्यति।
'पृथिव्या सम्भवे'तीयं वै पृथिवी देवी देवयजनी सा
दीक्षितेन नाभिमिह्या तस्या ऽएतदुद्गृह्णैव यज्ञियां तनूम
थाऽयज्ञियः शरीरमभ्यमिक्षत्तामेवाऽस्यामेतत्पुनर्यज्ञियां
तनूं दधाति तस्मादाह पृथिव्या सम्भवेति ॥ २१ ॥
अथाऽग्नये परिदाय स्वपिति। देवान्वा ऽएष ऽउपा ऽवर्त्तते
यो दीक्षते स देवतानामेको भवति न वै देवाः स्वपन्त्य-
नवरुद्धो वा ऽएतस्याऽस्वप्नो भवत्यग्निर्वै देवानां व्रतपति-
स्तस्मा ऽएवैतत्परिदाय स्वपि'त्यग्ने त्वं सु जागृहि वयं
सु मन्दिषीमही'त्यग्ने त्वं जागृहि वयं स्वप्स्याम ऽइत्ये-
वैतदाह 'रक्षा णो ऽअप्रयुच्छन्नि'ति गोपाय नोऽप्रमत्त
ऽइत्येवैतदाह 'प्रबुधे नः पुनस्कृधी'ति यथेतः सुप्त्वा स्वस्ति
प्रबुध्यामहा ऽएवं नः कुर्वित्येवैतदाह ॥ २२ ॥ अथ यत्र
सुप्त्वा पुनर्नाऽवद्रास्यन्भवति। तद्वाचयति पुनर्मनः पुनरा-
युर्म्म ऽआगन्पुनः प्राणः पुनरात्मा म ऽआगन्पुनश्चक्षुः

(१) शु० स० अ० ४ क० १३। (२) शु० स० अ० ४ क० १३। (३) शु० स० अ० ४ क० १३। (४) शु० स० अ० ४ क० १३। (५) शु० स० अ० ४ क० १४। (६) शु० स० अ० ४ क० १४। (७) शु० स० अ० ४ क० १४।

पुनः श्रोत्रं म ऽआगन्निति सर्वे ह वा ऽएते स्वपतोऽपक्रामन्ति प्राण ऽएव न तैरेवैतत्सुप्त्वा पुनः सङ्गच्छते तस्मादाह 'पुनर्म्मनः पुनरायुर्म्म ऽआगन्पुनः प्राणः पुनरात्मा म ऽआगन्पुनश्चक्षुः पुनः श्रोत्रं म ऽआगन्। वैश्वानरो ऽअदब्धस्तनूपा ऽअग्निर्न्नः पातु दुरितादवद्यादि'ति तद्य-देवाऽत्र स्वप्नेन वा येन वा मिथ्याकर्म्म तस्मान्नः सर्वस्मा-दग्निर्गोपायत्वित्येवैतदाह तस्मादाह वैश्वानरो ऽअदब्धस्त-नूपा ऽअग्निर्न्नः पातु दुरितादवद्यादिति ॥ २३ ॥ अथ यद्दीक्षितः। अव्रत्यं वा व्याहरति क्रुध्यति वा तन्मिथ्याकरोति व्रतं प्रमीणात्यक्रोधो ह्येव दीक्षितस्याऽग्निर्वै देवानां व्रतपतिस्तमेवैतदुपधावति 'त्वमग्ने व्रतपा ऽअसि देव ऽआ मर्त्येष्वा। त्वं यज्ञेष्वीड्य' ऽइति तस्यो हैषा प्रायश्चित्तिस्तथो हाऽस्यैतन्न मिथ्याकृतं भवति न व्रतं प्रमीणाति तस्मादाह त्वमग्ने व्रतपा ऽअसि देव ऽआ मर्त्येष्वा। त्वं यज्ञेष्वीड्य ऽइति ॥२४॥ अथ यद्दीक्षितायाऽभिहरन्ति। तस्मिन्वाचयति 'रास्वेयत्सोमा भूयो भरे'ति सोमो ह वा ऽअस्मा ऽएतद्युते यद्दीक्षितायाऽभिहरन्ति स यदाह रास्वे-यत्सोमेति रास्व न ऽइयत्सोमेत्येवैतदाहा भूयो भरेत्या नो भूयो हरेत्येवैतदाह 'देवो नः सविता वसोर्द्दाता वस्वदादि'ति तथो हाऽस्मा ऽएतत्सवितृप्रसूतमेव दानाय भवति ॥ २५ ॥ पुराऽस्तमयादाह। दीक्षित वाचं यच्छेति

(१) शु० सं० अ० ४ क० १५। (२) शु० सं० अ० ४ क० १६। (३) शु० सं० अ० ४ क० १६। (४) शु० सं० अ० ४ क० १६।

तामस्तमिते वाचं विसृजते पुरोदयादाह दीक्षित वाचं यच्छेति तामुदिते वाचं विसृजते सन्तत्या ऽएवाऽऽहरेवैत-द्राज्या सन्तनोत्यहा रात्रिम् ॥ २६ ॥ नैनमत्र चरन्तम-भ्युस्तमियात् । न स्वपन्तमभ्युदियात्स यदेनमत्र चरन्तमभ्यस्तमियाद्रात्रेरेनं तदन्तरियाद्यत्स्वपन्तमभ्युदि-यादह्नऽएनं तदन्तरियान्नाऽत्र प्रायश्चित्तिरस्ति प्रतिगु-प्यमेवैतस्मान्न पुराऽवभृथादपोऽभ्यवेयान्नैनमभिवर्षेद-नवक्लृप्तः ह तद्यत्पुराऽवभृथादपोऽभ्यवेयाद्यद्वैनमभिव-र्षेदथ परिह्वालं वाचं वदति न मानुषीं प्रसृतां तद्यत्परिह्वालं वाचं वदति न मानुषीं प्रसृताम् ॥ २७ ॥ यज्ञेन वै देवाः । इमां जितिं जिग्युर्येषामियं जितिस्ते होचुः कथं न ऽइदं मनुष्यैरनभ्यारोह्यः स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरो-ऽभवन्नथयदेनेनाऽयोपयँस्तस्माद्यूपो नाम ॥ २८ ॥ तद्वा-ऽऋषीणामनुश्रुतमास । ते यज्ञः समभरन्यथाऽयं यज्ञः सम्भृत ऽएवं वा ऽएष यज्ञः सम्भरति यो दीक्षते वाग्वै यज्ञस्तद्यदेवाऽत्र यज्ञस्य निर्धीतं यद्विदुग्धं तदेवैतत्पुनरा-प्यायति यत्परिह्वालं वाचं वदति न मानुषीं प्रसृतां न ह्याऽऽप्याययेद्यत्प्रसृतां मानुषीं वाचं वदेत्तस्मात्परिह्वालं वाचं वदति न मानुषीं प्रसृताम् ॥ २९ ॥ स वै धीक्षते । वाचे हि धीक्षते यज्ञाय हि धीक्षते यज्ञो हि वाग्धीक्षितो ह वै नामैतद्यद्दीक्षित ऽइति ॥ ३० ॥

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

आदित्यं चरुं प्रायणीयं निर्वपति । देवा ह वा ऽअस्यां यज्ञं तन्वाना ऽइमां यज्ञादन्तरीयुः सा हैषामियं यज्ञं मोहयाञ्चकार कथं नु मयि यज्ञं तन्वाना मां यज्ञादन्तरीयुरिति तद्ध ह यज्ञं न प्रजज्ञुः ॥ १ ॥ ते होचुः । यज्ञस्यामेव यज्ञमतथंस्महि कथं नु नोऽमुहत्कथं न प्रजानीम ऽइति ॥ २ ॥ ते होचुः । अस्यामेव यज्ञं तन्वाना ऽइमां यज्ञादन्तरगाम सा न ऽइयमेव यज्ञममूमुहदिमामेवोपधावामेति ॥ ३ ॥ ते होचुः । यज्ञं त्वय्येव यज्ञमतथंस्महि कथं नु नोऽमुहत्कथं न प्रजानीम ऽइति ॥ ४ ॥ सा होवाच । मय्येव यज्ञं तन्वाना मां यज्ञादन्तरगात सा वोऽहमेव यज्ञममूमुहं भागं नु मे कल्पयताऽथ यज्ञं द्रक्ष्यथाऽथ प्रज्ञास्यथेति ॥ ५ ॥ तथेति देवा ऽअब्रुवन् । तवैव प्रायणीयस्तवोदयनीय ऽइति तस्मादेष ऽआदित्य ऽएव प्रायणीयो भवत्यादित्य ऽउदयनीय ऽइयं ह्येवाऽदितिस्ततो यज्ञमपश्यँस्तमतन्वत ॥ ६ ॥ स यदादित्यं चरुं प्रायणीयं निर्वपति । यज्ञस्यैव दृष्ट्यै यज्ञं दृष्ट्वा क्रीणानि तं तनवाऽइति तस्मादादित्यं चरुं प्रायणीयं निर्वपति तद्वै निरुप्तः हविरासीदनिष्टा देवता ॥ ७ ॥ अथैभ्यः पथ्या स्वस्तिः प्राऽरोचत । तामयजन्त्वाग्वै पथ्या स्वस्तिर्वाग्यज्ञस्तद्यज्ञमपश्यँस्तमतन्वत ॥ ८ ॥ अथैभ्योऽग्निः प्राऽरोचत । तमयजन्त्स यदाग्नेयं यज्ञस्याऽऽसीत्तदपश्यन्यद्वै शुष्कं यज्ञस्य तदाग्नेयं तदपश्यँस्तदतन्वत ॥ ९ ॥ अथैभ्यः सोमः प्राऽरोचत । तमयजन्त्स यत्सौम्यं यज्ञस्याऽऽसी-

तदपश्यन्यद्वा ऽआहुँ यज्ञस्य तत्सौम्म्यं तदपश्यँस्तदतन्वत ॥ १० ॥ अथैभ्यः सविता प्प्राऽरोचत । तमयजन्पशवो वै सविता पशवो यज्ञस्तद्यज्ञमपश्यँस्तमतन्वताऽथ यस्यै देवतायै हविर्न्निरुतमासीत्तामयजन् ॥ ११ ॥ ता वा ऽएताः। पञ्च देवता यजति यो वै स यज्ञो मुग्ध ऽआसीत्पाङ्क्तो वै स ऽआसीत्तमेताभिः पञ्चभिर्द्देवताभिः प्प्राऽजानन् ॥ १२ ॥ ऋतवो मुग्धा ऽआसन्पञ्च । तानेताभिरेव पञ्चभिर्द्देवताभिः प्प्राऽजानन् ॥ १३ ॥ दिशो मुग्धा ऽआसन्पञ्च । तानेताभिरेव पञ्चभिर्द्देवताभिः प्प्राऽजानन् ॥ १४ ॥ उदीचीमेव दिशम् । पत्थ्यया स्वस्त्या प्प्राऽजानँस्तस्मादत्रोत्तरा हि वाग्वदति कुरुपञ्चालत्रा वाग्घ्येषा निदानेनोदीचीछ्ं ह्येतया दिशं प्राऽजानन्नुदीची ह्येतस्यै दिक् ॥ १५ ॥ प्राचीमेव दिशम् । अग्निना प्प्राऽजानँस्तस्मादग्निं पश्चात्प्राञ्चमुद्धृत्योपाऽऽसते प्प्राचीछ्ं ह्येतेन दिशं प्राऽजानन्प्राची ह्येतस्य दिक् ॥ १६ ॥ दक्षिणामेव दिशछं । सोमेन प्प्राऽजानँस्तस्मात्सोमं क्रीतं दक्षिणा परिवहन्ति तस्मादाहुः पितृदेवत्त्यः सोम ऽइति दक्षिणाछ्ं ह्येतेन दिशं प्प्राऽजानन्दक्षिणा ह्येतस्य दिक् ॥ १७ ॥ प्रतीचीमेव दिशछं । सवित्रा प्प्राऽजानन्नेष वै सविता य ऽएष तपति तस्मादेष प्प्रत्यङ्ङेति प्प्रतीचीछ्ं ह्येतेन दिशं प्प्राऽजानन्प्रतीची ह्येतस्य दिक् ॥ १८ ॥ ऊर्द्ध्वामेव दिशम् । अदित्या प्प्राऽजानन्नियं वा ऽअदितिस्तस्मादस्यामूर्द्ध्वा ऽओषधयो जायन्त ऽऊर्द्ध्वा वनस्पतय ऽऊर्द्ध्वाछ्ं ह्येतया

दिशं प्राऽजानन्नूर्द्ध्वा ह्येतस्यै दिक् ॥ १९ ॥ शिरो वै यज्ञस्याऽऽतिथ्यम् । बाहू प्रायणीयोदयनीयावभितो वै शिरो बाहू भवतस्तस्मादभित ऽआतिथ्यमेते हविषी भवतः प्रायणीयश्चोदयनीयश्च ॥ २० ॥ तदाहुः । यदेव प्रायणीये क्रियेत तदुदयनीये क्रियेत यदेव प्रायणीयस्य बर्हिर्भवति तदुदयनीयस्य बर्हिर्भवतीति तदपोद्धृत्य निदधाति ताꣳ स्थालीꣳ *सक्षामकर्षां प्रमृज्य †मेक्षणं निदधाति य ऽएव प्रायणीयस्यर्त्विजो भवन्ति त ऽउदयनीयस्यर्त्विजो भवन्ति तद्यदेतत्समानं यज्ञे क्रियते तेन बाहू सदृशौ तेन सरूपौ ॥ २१ ॥ तदु तथा न कुर्यात् । काममेवैतद्बर्हिरनुप्रहरेदेवं मेक्षणं निर्णिज्य स्थालीं निदध्याद्य ऽएव प्रायणीयस्यर्त्विजो भवन्ति त ऽउदयनीयस्यर्त्विजो भवन्ति यद्यु ते विप्रेताः स्युरप्यन्य ऽएव स्युः स यद्वै समानीर्देवता यजति समानानि हवीꣳषि भवन्ति तेनैव बाहू सदृशौ तेन सरूपौ ॥ २२ ॥ स वै पथ्यां प्रायणीये देवता यजति । पश्चोदयनीये तस्मात्पश्चेरथादङ्गुलयः पश्चेस्थात्तच्छꣳरुवन्तं भवति न पत्नीः सꣳयाजयन्ति पूर्वार्द्धं वा ऽअन्वारम्भाणो बाहू पूर्वार्द्धमेवैतद्यज्ञस्याऽभिसंस्करोति तस्माच्छꣳरुवन्तं भवति न पत्नीः सꣳयाजयन्ति ॥ २३ ॥

द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



---

* सक्षामकर्षाम् अग्निसंयोगनाऽन्तरीयकृष्णश्च क्षाम तस्य कर्ष लोपस्तत्सहितामित्यर्थः ।

† प्रादेशमात्रं हविरवदानसाधनं चरुनिष्पादनसाधनं च काष्ठदण्डं मेक्षणमित्युच्यते । कर्मप्रदीपे तु—"इध्मजातीयमिध्मार्धप्रमाणं मेक्षणं भवेत् ।
वृत्तं चाङ्गुष्ठपृथ्वग्रमवदानक्रियाक्षमम्" इति । (२ ५. १४)

दिवि वै सोम ऽआसीत्। अथेह देवास्ते देवा ऽअकामयन्ता नः सोमो गच्छेत्तेनाऽऽगतेन यजेमहीति त ऽएते माये ऽअसृजन्त सुपर्णीञ्च कद्रूं च तद्धिरण्यानां ब्राह्मणे व्व्याख्यायते सौपर्णीकाद्रवं यथा तदास ॥ १ ॥ तेभ्यो गायत्री सोममच्छाऽऽपतत्। तस्या ऽआहरन्त्यै गन्धर्वो विश्वावसुः पर्य्यमुष्णात्ते देवा ऽअविदुः प्रच्च्युतो वै परस्तात्सोमोऽथ नो नाऽऽगच्छति गन्धर्वा वै पर्य्यमोपिषुरिति ॥ २ ॥ ते होचुः। योषित्कामा वै गन्धर्वा वाचमेवैभ्यः प्प्रहिणवाम सा नः सह सोमेनाऽऽगमिष्यतीति तेभ्यो वाचं प्राहिण्वंस्तयैनान्त्सह सोमेनाऽऽगच्छत् ॥ ३ ॥ ते गन्धर्वा ऽअन्वागत्याऽब्रुवन्। सोमो युष्माकं वागेवाऽस्माकमिति तथेति देवा ऽअब्रुवन्निहो *चेदागान्मैनामभीषहेव नैष्ट विह्वयामहा ऽइति तां व्व्यह्वयन्त ॥ ४ ॥ तस्यै गन्धर्वाः। वेदानेव प्प्रोचिर ऽइति वै वयं विद्मेति वयं विद्मेति ॥५॥ अथ देवाः। वीणामेव सृष्ट्वा वादयन्तो निगायन्तो निषेदुरिति वै ते वयं गास्याम ऽइति त्वा प्प्रमोदयिष्यामह ऽइति सा देवानुपाऽऽववर्त्त सा वै सा तन्मोघमुपाऽऽववर्त्त या स्तुवद्भ्यः शंसद्भ्यो नृत्तं गीतमुपाऽऽववर्त्त तस्मादप्येतर्हि मोघसंहिता ऽएवं हि वागुपाऽऽवर्त्तत तामु ह्यन्या ऽअनु योषास्तस्माद्य ऽएव नृत्यति यो गायति तस्मिन्नेवैता निमिश्लतमा ऽइव ॥ ६ ॥ तद्वा ऽएतदुभयं देवेष्वासीत्। सोमश्च वाक्च स यत्सोमं क्रीणात्यागत्या

* 'वेदागात्' इति 'ख' पुस्तक पाठ।

ऽएवाऽऽगतेन यजा ऽइत्यनाऽऽगतेन ह वै स सोमेन यजते योऽक्रीतेन यजते ॥ ७ ॥ अथ यद् ध्रुवायामाज्यं परिशिष्टं भवति । तज्जुह्वां चतुष्कृत्वो विगृह्णाति बर्हिषा हिरण्यं प्रबद्ध्याऽवधाय जुहोति कृत्स्नेन पयसा जुहवानीति समानजन्म वै पयश्च हिरण्यं चोभयछ ह्यग्निरेतसछ* ॥८॥ स हिरण्यमवदधाति । 'एषा ते शुक्र तनूरेतद्वर्च' ऽइति वर्चो वा ऽएतद्यद्धिरण्यं 'तया सम्भव भ्राजं गच्छे'ति स यदाह तया सम्भवेति तया सम्पृच्यस्वेत्येवैतदाह भ्राजं गच्छेति सोमो वै भ्राट् सोमं गच्छेत्येवैतदाह ॥ ९ ॥ तां यथैवाऽदो देवाः । प्राऽहिण्वन्त्सोममच्छैवमेवैनामेष ऽएतत्प्रहिणोति सोममच्छ वाग्वै सोमक्रयणी निदानेन तामेतयाऽऽहुत्या प्रीणाति प्रीतया सोमं क्रीणानीति ॥ १० ॥ स जुहोति । 'जूरसीत्ये'तद्ध वा ऽअस्या ऽएकं नाम यज्जूरसीति 'धृता मनसे'ति मनसा वा ऽइयं वाग्धृता मनो वा ऽइदं पुरस्ताद्वाच ऽइत्थं वद मैतद्वादीरित्य†लग्लमिव ह वै वाग्वदेद्यन्मनो न स्यात्तस्मादाह धृता मनसेति ॥ ११ ॥ 'जुष्टा विष्णव' ऽइति । जुष्टा सोमायेत्येवैतदाह यमच्छेम ऽइति 'तस्यास्ते सत्यसवसः प्रसव' ऽइति सत्यप्रसवा न ऽएधि सोमं नोऽच्छेहीत्येवैतदाह

(१) शु० सं० अ० ४ क० १७ । (२) शु० सं० अ० ४ क० १७ । (३) शु० सं० अ० ४ क० १७ । (४) शु० सं० अ० ४ क० १७ । (५) शु० सं० अ० ४ क० १७ । (६) शु० सं० अ० ४ क० १८ ।

* 'रेतसम्' इति 'ख' पुस्तके दृश्यते ।

† 'अलग्लमिव' इत्यत्र 'अलममिव' इति भाष्यकारसम्मतः । मूलपुस्तके तु 'अलग्लमिव' इत्येव लभ्यते ।

'तन्नो यन्त्रमशीय स्वाहे'ति स ह वै तन्नो यन्त्रमश्नुते यो यज्ञस्योदृचं गच्छति यज्ञस्योदृचं गच्छानीत्येवैतदाह ॥ १२ ॥ अथ हिरण्यमपोद्धरति । तन्मनुष्येषु हिरण्यं करोति स यत्सहिरण्यं जुहुयात्पराग्घ हैवैतन्मनुष्येभ्यो हिरण्यं प्रवृञ्ज्यात्तन्न मनुष्येषु हिरण्यमभिगम्येत ॥१३॥ सोऽपोद्धरति । 'शुक्रमसि चन्द्रमस्यमृतमसि वैश्वदेवमसी'ति क्रत्स्नेन पयसा हुत्वा यद्वैतत्तदाह शुक्रमसीति शुक्रᳲ ह्येतच्चन्द्रमसीति चन्द्रᳲ ह्येतदमृतमसीत्यमृतᳲ ह्येतद्वैश्वदेवमसीति वैश्वदेवᳲ ह्येतत्प्रमुच्य तृणं बर्हिष्ष्वपि सृजति सूत्रेण हिरण्यं प्रबध्नीते ॥ १४ ॥ अथाऽपरं चतुर्गृहीतमाज्यं गृहीत्वा । अश्वारभस्व यजमानेत्याहाऽपोर्णुवन्ति शालायै द्वारे दक्षिणतः सोमक्रयण्युपतिष्ठते तत्प्रहितामेवैनामेतत्सतीं प्राऽऽहैपीद्वाग्वै सोमक्रयणी निदानेन तामेतयाऽऽहुत्याऽप्रैपीत्प्रीतया सोमं क्रीणानीति ॥ १५ ॥ अथोपनिष्क्रम्याऽभिमन्त्रयते । 'चिदसि मनासी'ति चित्तं वा इदं मनो वागनुवदति 'धीरसि दक्षिणे'ति धिया धिया ह्येतया मनुष्या जुजूषन्त्यनूक्तेनेव प्रकामोद्येनेव गाथाभिरिव तस्मादाह धीरसीति दक्षिणेति दक्षिणा ह्येषा 'क्षत्रियाऽसि यज्ञियासी'ति क्षत्रिया ह्येषा यज्ञिया ह्येषा'ऽदितिरस्युभयतः शीर्ष्णी'ति स यदेनया समानः सद्विपर्य्यासं वदति यदपरं तत्पूर्वं करोति यत्पूर्वं तदपरं तेनोभयतः शीर्ष्णी तस्मादाहाऽदि-

(१) शु० सं० अ० ४ क० १८। (२) शु० सं० अ० ४ क० १८। (३) शु० सं० अ० ४ क० १९। (४) शु० य० सं० ४ क० १९। (५) शु० य० अ० ४ क० १९। (६) शु० य० अ० ४ क० १९।

तिरस्युभयतः शीर्ष्णीति ॥ १६ ॥ 'सा नः सुप्राची सुप्रतीच्येधी'ति । सुप्राची न ऽएधि सोमं नोऽच्छेहीत्येवैतदाह सुप्रतीची न ऽएधि सोमेन नः सह पुनरेहीत्येवैतदाह तस्मादाह सा नः सुप्राची सुप्रतीच्येधीति ॥१७॥ 'मित्रस्त्वा पदि बध्नीतामि'ति । वरुण्या वा ऽएषा यद्रज्जुः सा यद्रज्ज्वाऽभिहिता स्याद्वरुण्यास्याद्यद्वनभिहिता स्यादयतेव स्यादेतद्वा ऽअवरुण्यं यन्मैत्रः सा यथा रज्ज्वाऽभिहिता यतैवमस्यै तद्भवति यदाह मित्रस्त्वा पदि बध्नीतामिति ॥ १८ ॥ 'पूषाऽध्वनस्पात्वि'ति । इयं वै पृथिवी पूषा यस्य वा ऽइयमध्वन्गोप्त्री भवति तस्य न का चन ह्वला भवति तस्मादाह पूषाध्वनस्पात्विति ॥१९॥ 'इन्द्रायाऽध्यक्षाये'ति । स्वध्यक्षाऽसदित्येवैतदाह यदाहेन्द्रायाऽध्यक्षाये'त्यनु त्वा माता मन्यतामनु पिताऽनु भ्राता सगर्भ्योऽनु सखा सयूथ्य' ऽइति सा यत्ते जन्म तेन नोऽनुमता सोममच्छेहीत्येवैतदाह 'सा देवि देवमच्छेही'ति देवी ह्येषा देवमच्छैति यद्वाक्सोमं तस्मादाह सा देवि देवमच्छेही'ती-न्द्राय सोममि'तीन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्राय सोममिति 'रुद्रस्त्वाऽऽवर्त्तयत्वि'त्यप्रणाशायैतदाह रुद्रः हि नाऽति पशवः 'स्वस्ति सोमसखा पुनरेही'ति स्वस्ति नः सोमेन सह पुनरेहीत्येवैतदाह ॥ २० ॥ तां व्यथेवाऽद्रो

(१) शु० सं० अ० ४ क० १९ । (२) शु० सं० अ० ४ क० १९ । (३) शु० सं० अ० ४ क० १९ । (४) शु० सं० अ० ४ क० १९ । (५) शु० सं० अ० ४ क० २० । (६) शु० सं० अ० ४ क० २० । (७) शु० सं० अ० ४ क० २० । (८) शु० सं० अ० ४ क० २० । (९) शु० सं० अ० ४ क० २० ।

योष्मे'ति तथो हाऽह्वर्य्युं पशुभ्य ऽआत्मानं नाऽन्तरेति ॥ ९ ॥ अथ पत्न्यै पदं प्रतिपराहरन्ति । गृहा वै पत्न्यै प्रतिष्ठा तद् गृहेष्वेवैनामेतत्प्रतिष्ठायां प्रतिष्ठापयति तस्मात्पत्न्यै पदं प्रतिपराहरन्ति ॥ १० ॥ तां नेष्टा वाचयति । 'तोतो राय' ऽइत्यथैनाॅं सोमक्रयण्या संख्यापयति वृषा वै सोमो योषा पत्न्येष वा ऽअत्र सोमो भवति यत्सोमक्रयणी मिथुनमेवैतत्प्रजननं क्रियते तस्मादेनाॅं सोमक्रयण्या संख्यापयति ॥११॥ स संख्यापयति । 'समख्ये देव्या धिया सन्दक्षिणयोरुचक्षसा । माम ऽआयुः प्रमोषीर्म्मो ऽअहं तव वीरं विदेय तव देवि सन्दृशी'त्याशिषमेवैतदाशास्ते पुत्रो वै वीरः पुत्रं विदेय तव सन्दृशीत्येवैतदाह ॥ १२ ॥ सा या बभ्रुः पिङ्गाक्षी । सा सोमक्रयणी यत्र वा ऽइन्द्राविष्णू त्रेधा सहस्रं व्यैरयेतां तदेकाऽत्यरिच्यत तां त्रेधा प्राऽजनयतां तस्माद्योऽप्येतर्हि त्रेधा सहस्रं व्याकुर्य्यादुदेकैवाऽतिरिच्येत ॥ १३ ॥ सा या बभ्रुः पिङ्गाक्षी । सा सोमक्रयण्यथ या रोहिणी सा वार्त्रघ्नी यामिदः राजा सङ्ग्रामं जित्वोदाकुरुतेऽथ या रोहिणी श्येताक्षी सा पितृदेवत्या यामिदं पितृभ्यो घ्नन्ति ॥ १४ ॥* ॥ सा या बभ्रुः पिङ्गाक्षी । सा सोमक्रयणी स्याद्यदि बभ्रुं पिङ्गाक्षीं न विन्देदरुणा स्याद्यदरुणां न विन्देद्रोहिणी वार्त्रघ्नी स्याद्रोहिण्ये ह त्वेव श्येताक्ष्या-

(१) शु० सं० अ० ४ क० २२। (२) शु० सं० अ० ४ क० २३।

* अत्र शतम् १६०० ॥

ऽआग्नेयात् ॥ १५॥ सा स्यादप्रवीता । वाग्वा ऽएषा नि-
दानेन यत्सोमक्रयण्ययातयाम्नी वा ऽइयं वागयातयाम्न्य-
प्रवीता तस्मा*दप्रवीता स्यात्सा †स्यादवण्डाकूटाकाणाक-
र्णालक्षितासप्तशफा सा ‡ ह्येकरूपैकरूपा हीयं वाक् ॥१६॥

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

पदः समुप्य पाणी ऽअवनेनिक्ते । तद्यत्पाणी ऽअव-
नेनिक्ते वज्रो वा ऽआज्यः रेतः सोमो नेद्वज्रेणाऽऽज्येन
रेतः सोमः हिनसानीति तस्मात्पाणी ऽअवनेनिक्ते ॥ १ ॥
अथाऽस्याꣳ हिरण्यं बध्नीते । द्वयं वा ऽइदं न तृतीय-
मस्ति सत्यं चैवाऽनृतं च सत्यमेव देवा ऽअनृतं मनुष्या-
ऽअग्निरेतसं वै हिरण्यः सत्येनाऽꣳशूनुपस्पृशानि सत्येन
सोमं पराहणानीति तस्माद्वा ऽअस्याꣳ हिरण्यं बध्नीते ॥२॥
अथ सम्प्रेष्यति । सोमोपनहनमाहर सोमपर्य्याणहनमाह-
रोष्णीषमाहरेति स यदेव शोभनन्तत्सोमोपनहनꣳ
स्याद्वासो ह्यस्यैतद्भवति शोभनꣳ ह्येतस्य वासः स यो
हैनः शोभनेनोपचरति शोभते हाऽथ य ऽआह यदेव कि-
ञ्चेति यद्धैव किञ्च भवति तस्माद्यदेव शोभनं तत्सोमोपन-
हनः स्याद्यदेव किञ्च सोमपर्य्याणहनम् ॥ ३ ॥ यदु-
ष्णीषं विन्देत् । उष्णीषः स्याद्यद्युष्णीषं न विन्देत्सोम-

* अप्रवीता अगृहीतगर्भेत्यर्थः ।

† अवण्डेति, षण्ढा-वर्द्धिष्णु तद्विपरीता, कूटा-एकशृङ्गी, काणा-प्रसिद्धा, कर्णा-छिन्नकर्णा, लक्षिता-लक्षणाय शलाकया विदितेत्यर्थः ।

‡ एकरूपेति, एकरूपत्वं च उपदोषवर्जितत्वम्, सम्पूर्णत्वमित्यर्थः ।

पर्य्याणहनस्यैव द्व्यङ्गुलं वा त्र्यङ्गुलं वाऽवक्रन्तेदुष्णीषभा-
जनमद्ध्वर्य्युर्वा यजमानो वा *सोमोपनहनमादत्ते य ऽएव
कश्च सोमपर्य्याणहनम् ॥ ४ ॥ अथाऽग्रेण राजानं विचि-
न्वन्ति । तदुदकुम्भ ऽउपनिहितो भवति तद् ब्राह्मण ऽउपा-
ऽऽस्ते तदभ्यायन्ति प्राञ्चः ॥ ५ ॥ तदायत्सु वाचयति ।
'एष ते गायत्रो भाग ऽइति मे सोमाय ब्रूतादेष ते
त्रैष्टुभो भाग ऽइति मे सोमाय ब्रूतादेष ते जागतो भाग-
ऽइति मे सोमाय ब्रूताच्छन्दोनामानाᳬ साम्राज्यं गच्छेति
मे सोमाय ब्रूतादि'त्येकं वा ऽएष क्रीयमाणोऽभिक्रीयते
च्छन्दसामेव राज्याय च्छन्दसाᳬ साम्राज्याय घ्नन्ति वा-
ऽएनमेतद्यदभिषुण्वन्ति तमेतदाह च्छन्दसामेव त्वा राज्याय
क्रीणामि च्छन्दसाᳬ साम्राज्याय न वधायेत्यथेत्य प्राङु-
पविशति ॥ ६ ॥ सोऽभिमृशति । 'अस्माकोऽसी'ति स्व-
ऽइव ह्यस्यैतद्भवति यदागतस्तस्मादाहाऽऽस्माकोऽसीति
'शुक्रस्ते ग्रह' ऽइति शुक्रᳬ ह्यस्माद् ग्रहं ग्रहीष्यन्भवति
'विचितस्त्वा विचिन्वन्त्वि'ति सर्वत्वायैतदाह ॥ ७ ॥ अत्र
हैके । तृणं वा काष्ठं वा विस्त्राऽपास्यन्ति तदु तथा न
कुर्यात्क्षत्रं वै सोमो विडन्न्या ऽओषधयोऽन्नं वै क्षत्रिस्य
विट् स यथा ग्रसितमनुहायाऽऽच्छिद्य परास्येदेवं तत्तस्माद-
भ्येव मृशेद्विचितस्त्वा विचिन्वन्त्विति तद्य ऽएवाऽस्य

* 'ग-च' पुस्तकयो 'सोमोपनहमा' इत्येव पाठो दृश्यते ।

( १ ) शु० स० अ० ४ क०२४ । ( २ ) शु० स० अ० ४ क० २४ । ( ३ ) शु० स०
अ० ४ क० २४ । (४) शु० स० अ० ४ क० २४ ।

विचेतारस्त ऽएनं विचिन्वन्ति ॥ ८ ॥ अथ वासः । द्विगुणं वा चतुर्गुणं वा प्राग्दशं वोदग्दशं वोपस्तृणाति तद्राजानं मिमीते स यद्राजानं मिमीते तस्मान्मात्रा मनुष्येषु *मात्रो यो चाऽप्यन्या मात्रा ॥ ९ ॥ सावित्र्या मिमीते । सविता वै देवानां प्रसविता तथो हाऽस्मा ऽएष सवितृप्रसूत ऽएव क्रयाय भवति ॥ १० ॥ अतिच्छन्दसा मिमीते । एषा वै सर्वाणि च्छन्दाᳯसि यदतिच्छन्दास्तथो हाऽस्यैष सर्वैरेव छन्दोभिर्म्मितो भवति तस्मादतिच्छन्दसा मिमीते ॥ ११ ॥ स मिमीते । 'अभित्यन्देवᳯ सविता-रमोण्योः कविक्रतुमर्चामि सत्यसवᳯ रत्नधामभिप्रियं मतिं कविम् । ऊर्द्ध्वा यस्यामतिर्भा ऽअदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्व'रि'ति ॥ १२ ॥ एतया सर्वाभिः । एतया चतसृभिरेतया तिसृभिरेतया द्वाभ्यामेतयैकयैतयैवैकयैतया द्वाभ्यामेतया तिसृभिरेतया चतसृभिरेतया सर्वाभिः समस्याऽञ्जलिनाऽवधावपति ॥१३॥ स वा ऽउदाचन्न्याचं मिमीते । स यदुदाचन्न्याचं मिमीत-ऽइमा ऽएवैतदङ्गुलीर्व्वानाजानाः करोति तस्मादिमा नाना जायन्तेऽथ यत्सह सर्वाभिर्म्मिमीते सᳯश्लिष्टा ऽइव हैवेमा जायेरँस्तस्माद्वा ऽउदाचन्न्याचं मिमीते ॥ १४ ॥ यद्वेवो-दाचन्न्याचं मिमीते । इमा ऽएवैतन्नाना वीर्य्याः करोति तस्मादिमा नाना वीर्य्यास्तस्माद्वा ऽउदाचन्न्याचं मिमीते

---

* 'क' पुस्तके 'पात्रो' इति पाठः ।

( १ ) शु० सं० अ० ४ क० २५ ।

॥ १५ ॥ यद्वेवोदाचन्न्याचं मिमीते । विराजमेवैतदर्वाचीं च पराचीञ्च युनक्ति पराच्च्यह देवेभ्यो यज्ञं वहत्यर्वाची मनुष्यानवति तस्माद्वा ऽउदाचन्न्याचं मिमीते ॥ १६ ॥ अथ यद्दशकृत्वो मिमीते । दशाक्षरा वै विराड् वैराजꣳ सोमस्तस्माद्दशकृत्वो मिमीते ॥ १७ ॥ अथ सोमोपनहनस्य समुत्पाद्यान्तान् । उष्णीषेण विग्रथ्नाति 'प्रजाभ्यस्त्वे'ति प्रजाभ्यो ह्येनं क्रीणाति स यद्वेवेदꣳ शिरश्छाऽध्ऽसौ चाऽन्तरोपेनितमिव तद्वेवाऽस्यैतत्करोति ॥ १८ ॥ अथ मद्ध्येऽङ्गुल्याकाशं करोति । 'प्रजास्त्वाऽनुप्राणन्त्वि'ति तमपतीव वा ऽएनमेतत्समायच्छन्नप्राणमिव करोति तस्यैतदुत ऽएव मद्ध्यतꣳ प्राणमुत्सृजति तं ततꣳ प्राणन्तं प्रजाऽअनुप्राणन्ति तस्मादाह प्रजास्त्वाऽनुप्राणन्त्विति तꣳ सोमविक्रयिणे प्रयच्छत्यथाऽतꣳ पणनस्यैव ॥ १९ ॥

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



स वै राजानं पणते । स यद्राजानं पणते तस्मादिदꣳ सर्वं पण्यꣳ स ऽआह सोमविक्रयिन् क्रय्यस्ते सोमो राजा३ ऽइति क्रय्य ऽइत्याह सोमविक्रयी तं वै ते क्रीणानीति क्रीणीहीत्याह सोमविक्रयी कलया ते क्रीणानीति भूयो वा ऽअतꣳ सोमो राजाऽर्हतीत्याह सोमविक्रयी भूयऽएवाऽतꣳ सोमो राजाऽर्हति महाँस्त्वेव गोर्महिमेत्यद्ध्वर्युꣳ ॥१॥

(१) शु० सं० अ० ४ क० २५। (२) शु० सं० अ० ४ क० २५।

गोर्वै प्रतिधुक् । तस्यै शृतं तस्यै शरस्तस्यै दधि तस्यै मस्तु तस्या ऽआतञ्चनं तस्यै नवनीतं तस्यै घृतं तस्या ऽआमिक्षा तस्यै वाजिनम् ॥ २ ॥ शफेन ते क्रीणानीति । भूयो वा ऽअतः सोमो राजाऽर्हतीत्याह सोमसोमविक्रयी भूय ऽएवाऽतः सोमो राजाऽर्हति महाँस्त्वेव गोर्म्महिमेत्यध्वर्युरेतान्येव दश वीर्य्याण्युदाख्यायाऽऽह पदा तेऽर्द्धेन ते गवा ते क्रीणामीति क्रीतः सोमो राजेत्याह सोमविक्रयी वयाᳩसि प्रब्रूहीति ॥ ३ ॥ स आह । चन्द्रं ते वस्त्रं ते छागा ते धेनुस्ते मिथुनौ ते गावौ तिस्रस्तेऽन्याऽइति स यदर्वाक्पणन्ते परः सम्पादयन्ति तस्मादिदᳩ सकृत्सर्वं पण्यमर्वाक्पणन्ते परः सम्पादयन्त्यथ यदध्वर्युरेव गोर्वीर्य्याण्युदाचष्टे न सोमस्य सोमविक्रयी महितो वै सोमो देवो हि सोमोऽथैतदध्वर्युर्गां महयति तस्यै पश्यन्वीर्य्याणि क्रीणादिति तस्मादध्वर्युरेव गोर्वीर्य्याण्युदाचष्टे न सोमस्य सोमविक्रयी ॥ ४ ॥ अथ यत्पञ्च कृत्वः पणते । संवत्सरसम्मितो वै यज्ञः पञ्च वा ऽऋतवः संवत्सरस्य तं पञ्चभिराप्नोति तस्मात्पञ्च कृत्वः पणते ॥ ५ ॥ अथ हिरण्ये वाचयति । 'शुक्रं त्वा शुक्रेण क्रीणामी'ति शुक्रᳪ ह्येतच्छुक्रेण क्रीणाति यत्सोमᳪ हिरण्येन 'चन्द्रं चन्द्रेणे'ति चन्द्रᳪ ह्येतच्चन्द्रेण क्रीणाति यत्सोमᳪ हिरण्येना'ऽमृतममृतेने'त्यमृतᳪ ह्येतदमृतेन क्री-

(१) शु० सं० अ० ४ क० २६। (२) शु० सं० अ० ४ क० २६। (३) शु० सं० अ० ४ क० २६।

णाति यत्सोमꣳ हिरण्येन ॥ ६ ॥ अथ सोमविक्रयिणम-
भि प्रकम्पयति । 'संग्मे ते गोरि'ति यजमाने ते गौरित्येवै-
तदाह तद्यजमानमभ्याहृत्य न्यस्यत्य'स्मे ते चन्द्राणी'ति
स ऽआत्मन्न्येव वीर्यं धत्ते शरीरमेव सोमविक्रयी हरते
तत्ततः सोमविक्रय्यादत्ते ॥ ७ ॥ अथाऽजायां प्रतीचीन-
मुख्यां वाचयति । 'तपसस्तनूरसी'ति तपसो ह वा ऽएषा
प्रजापतेः सम्भृता यदजा तस्मादाह तपसस्तनूरसीति
'प्रजापतेर्वर्ण' ऽइति सा यत्त्रिः संवत्सरस्य विजायते तेन
प्रजापतेर्वर्णः 'परमेण पशुना क्रीयस' ऽइति सा यत्त्रिः
संवत्सरस्य विजायते तेन परमः पशुः 'सहस्रपोषं पुषेय-
मि'त्याशिषमेवैतदाशास्ते भूमा वै सहस्रं भूमानं गच्छा-
नीत्येवैतदाह ॥ ८ ॥ स वा ऽअनेनैवाऽजां प्रयच्छति ।
अनेन राजानमादत्त ऽआजा ह वै नामैषा यदजैतया ह्येन-
मन्तत ऽआजति तामेतत्परोऽक्षमजेत्याचक्षते ॥ ९ ॥ अथ
राजानमादत्ते । 'मित्रो न ऽएहि सुमित्रध' ऽइति शिवो नः
शान्त ऽएहीत्येवैतदाह तं यजमानस्य दक्षिण ऽऊरौ प्रत्युह्य
वासो निदधा'तीन्द्रस्योरुमाविश दक्षिणमि'त्येष वा ऽअत्रे-
न्द्रो भवति यद्यजमानस्तस्मादाहेन्द्रस्योरुमाविश दक्षिण-
मि'त्युशन्नुशन्तमि'ति प्रियः प्रियमित्येवैतदाह 'स्योनः
स्योनमि'ति शिवः शिवमित्येवैतदाह ॥ १० ॥ अथ सोम-

(१) शु० स० अ० ४ क० २६ । (२) शु० स० अ० ४ क० २६ । (३) शु० स० अ० ४ क० २६ । (४) शु० स० अ० ४ क० २६ । (५) शु० सं० अ० ४ क० २६ । (६) शु० स० अ० ४ क० २६ । (७) शु० सं० अ० ४ क० २७ । (८) शु० सं० अ० ४ क० २७ (९) शु० सं० अ० ३६ क० २७ । (१०) शु० स अ० ४ क० २७ ।

क्रयणाननुदिशति। 'स्वानं भ्राजाऽङ्घारे बम्भारे हस्त सुहस्त कृशानवेते वः सोमक्रयणास्तान्रक्षध्वं मा वो दभन्नि'ति धिष्ण्यानां वा ऽएते भाजनेनैतानि वै *धिष्ण्यानां नामानि तान्येवैभ्य ऽएतदन्वदिक्षत् ॥ ११ ॥ अथाऽत्राऽपोर्णुते। गर्भो वा ऽएष भवति यो दीक्षते प्राऽऽवृता वै गर्भा-ऽउल्वेनेव जरायुणेव तमत्राऽजीजनत तस्मादपोर्णुत ऽएष वा ऽअत्र गर्भो भवति तस्मात्परिवृतो भवति परिवृता-ऽइव हि गर्भा ऽउल्वेनेव जरायुणेव ॥ १२ ॥ अथ वाचयति। 'परि माऽग्ने दुश्चरिताद्बाधस्वा मा सुचरिते भजे'-त्यासीनं वा ऽएनमेष ऽआगच्छति स ऽआगत ऽउत्तिष्ठति तन्मिमत्थ्याकरोति व्रतं प्रमीणाति तस्यो हैषा प्रायश्चित्तिस्तथो हाऽस्यैतन्न मिथ्याकृतं भवति न व्रतं प्रमीणाति तस्मादाह परिमाऽग्ने दुश्चरिताद् बाधस्वा मा सुचरिते भजेति ॥ १३ ॥ अथ राजानमादायोत्तिष्ठति 'उदायुषा स्वायुषोदस्थाममृताँ२ ऽअन्वि'त्यमृतं वा ऽएषोऽनूत्तिष्ठति यः सोमं क्रीतं तस्मादाहोदायुषा स्वायुषोदस्थाममृताँ२ ऽअन्विति ॥ १४ ॥ अथ राजानमादायाऽऽरोहणमभिप्रैति। 'प्रेति पन्थामपद्महि स्वस्ति गामनेहसम्। येन विश्वाः परि द्विषो वृणक्ति विन्दते वस्वि'ति ॥ १५ ॥ देवा ह वै यज्ञं तन्वानाः। तेऽसुररक्षसेभ्य ऽआसङ्गाद्बिभया-

* धिष्ण्य स्थण्डिलविशेषो यत्राऽग्निं संस्थाप्य होत्रादय स्थानि स्थानि शस्त्राणि शंसन्ति। तथा च—"अग्नीनामाश्रय भूता मृदा निर्मिता सह स्वल्पवेदिका धिष्ण्यान्युच्यन्ते"।

(१) शु० म० अ० ४ क० २७। (२) शु० म० अ० ४ क० २८। (३) शु० म० अ० ४ क० २८। (४) शु० म० अ० ४ क० २९।

ऽचक्रुस्त ऽएतद्यजुः स्वस्त्ययनं ददृशुस्त ऽएतेन यजुषा नाष्ट्रा रक्षाᳫंस्यपहत्यैतस्य यजुषोऽभयेऽनाष्ट्रे निवाते स्वस्ति समाश्नुवत तथो ऽएवैष ऽएतेन यजुषा नाष्ट्रा रक्षाᳫंस्यपहत्यै तस्य यजुषोऽभयेऽनाष्ट्रे निवाते स्वस्ति समश्नुते तस्मादाह प्रति पन्थामपद्महि स्वस्ति गामनेहसम् । येन विश्वाः परिद्विषो वृणक्ति विन्दते वस्विति ॥ १६ ॥ तं वा ऽइति हरन्ति । अनसा परिवहन्ति महयन्त्येवैनमेतत्तस्माच्छीर्ष्णा वीजः हरन्त्यनसोद्वावहन्ति ॥ १७ ॥ अथ यदपामन्ते क्रीणाति । रसो वा ऽआपः सरसमेवैतत्क्रीणात्यथ यद्धिरण्यं भवति सशुक्रमेवैतत्क्रीणात्यथ यद्वासो भवति सत्वचसमेवैतत्क्रीणात्यथ यदजा भवति सतपसमेवैतत्क्रीणात्यथ यद्धेनुर्भवति साऽशिरमेवैतत्क्रीणात्यथ यन्मिथुनौ भवतः समिथुनमेवैतत्क्रीणाति तं वै दशभिरेव क्रीणीयान्नाऽदशभिर्दशाक्षरा वै विराड्वैराजः सोमस्तस्माद्दशभिरेव क्रीणीयान्नाऽदशभिः ॥ १८ ॥

तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥

कण्डिकासंख्या ॥१२८॥



*नीडे कृष्णाजिनमास्तृणाति । 'अदित्यास्त्वगसी'ति सोऽसावेव बन्धुरथैनमासादय'त्यदित्यै सद ऽआसीदे'तीयं

* परित प्राकृन शकटमध्यदेशो नीडम्, तत्र कृष्णाजिनमास्तृणाति प्रसारयेदित्यर्थः ।
(१) शु० सं० अ० ४ क० ३० । (२) शु० सं० अ० ४ क० ३० ।

वै पृथिव्यदितिः सेयं प्रतिष्ठा तदस्यामेवैनमेतत्प्रतिष्ठायां प्रतिष्ठापयति तस्मादाहाऽदित्यै सद ऽआसीदेति ॥ १ ॥ अथैवमभिपद्य वाचयति । 'अस्तभ्नाद् द्यां वृषभो ऽअन्तरिक्षमि'ति देवा ह वै यज्ञं तन्वानास्तेऽसुररक्षसेभ्य ऽआसङ्गाद्बिभयाञ्चक्रुस्त ऽएनमेतज्ज्यायाꣳसमेव वधाच्चक्रुर्य्यदाहाऽस्तभ्नाद् द्यां वृषभो ऽअन्तरिक्षमिति ॥२॥ 'अमिमीत वरिमाणं पृथिव्या' ऽइति । तदेनेनेमाँल्लोकानास्पृणोति तस्य हि न हन्ताऽस्ति न वधो येनेमे लोका ऽआस्पृतास्तस्मादाहाऽमिमीत वरिमाणं पृथिव्या ऽइति ॥३॥ 'आसीदद्विश्वा भुवनानि सम्म्राडि'ति । तदेनेनेदꣳ सर्वमास्पृणोति तस्य हि न हन्ताऽस्ति न वधो येनेदꣳ सर्वमास्पृतं तस्मादाहाऽऽसीदद्विश्वा भुवनानि सम्म्राडिति ॥ ४ ॥ 'विश्वेत्तानि वरुणस्य व्रतानी'ति । तदस्मा ऽइदꣳ सर्वमनुवर्त्म करोति यदिदं किञ्च न कश्चन प्प्रत्युद्यामिनं तस्मादाह विश्वेत्तानि वरुणस्य व्रतानीति ॥ ५ ॥ अथ सोमपर्य्याणहनेन पर्य्याणह्यति । नेदेनं नाष्ट्रा रक्षाꣳसि प्प्रमृशानिति गर्भो वा ऽएष भवति तिर ऽइव वै गर्भास्तिर ऽइवैतद्यत्पर्य्याणद्धं तिर ऽइव वै देवा मनुष्येभ्यस्तिर ऽइवैतद्यत्पर्य्याणद्धं तस्माद्वै पर्य्याणह्यति ॥ ६ ॥ स पर्य्याणह्यति । 'वनेषु व्व्यन्तरिक्षं ततानेति वनेषु हीदमन्तरिक्षं विततं व्वृक्षाग्रेषु 'वाजमर्वत्सु पय ऽउस्रियास्वि'ति वीर्य्यं वै वाजाः

(१) शु० सं० अ० ४ क० ३० । (२) शु० सं० अ० ४ क० ३० । (३) शु० सं० अ० ४ क० ३० । (४) शु० सं० अ० ४ क० ३० । (५) शु० सं० अ० ४ क० ३१ । (६) शु० सं० अ० ४ क० ३१ ।

पुमाꣳसोऽर्वन्तः पुꣳस्त्वेवैतद्वीर्य्यं दधाति पय ऽउस्रिया-स्विति पयो हीदमुस्रियासु हितꣳ 'ह्रत्सु क्रतुं वरुणो विक्ष्व-ग्निमि'ति ह्रत्सु ह्ययं क्रतुर्म्मनोजवꣳ प्रविष्टो विक्ष्वग्निमिति विक्षु ह्ययं प्रजास्वग्नि'न्दिवि सूर्य्यमदधात्सोममद्रावि'ति दिवि ह्यसौ सूर्य्यो हितꣳ सोममद्राविति गिरिषु हि सोम-स्तस्मादाह दिवि सूर्य्यमदधात्सोममद्राविति ॥ ७ ॥ अथ यदि द्वे कृष्णाजिने भवतꣳ । तयोरन्यतरत्प्रत्यानह्यति *प्रतीनाहभाजनं यद्यु ऽएकं भवति कृष्णाजिनग्रीवा ऽएवा-ऽवकृत्य प्रत्यानह्यति प्रतीनाहभाजनꣳ 'सूर्य्यस्य चक्षुरा-रोहाऽग्नेरक्ष्णꣳ कनीनकम् । यत्रैतशेभिरीयसे भ्राजमानो विपश्चिते'ति सूर्य्यमेवैतत्पुरस्तात्करोति सूर्य्यꣳ पुरस्तान्नाष्ट्रा रक्षाꣳस्यपघ्नन्नेत्यथाऽभयेनाऽनाष्ट्रेण परिवहन्ति ॥८॥ उद्धते प्र ऽउग्ये फलके भवतꣳ । तदन्तरेण तिष्ठन्सुब्रह्मण्यꣳ प्राऽऽजति श्रेयान्वा ऽएषोऽभ्यारोहाद्भवति को ह्येतमर्हत्य-भ्यारोढुं तस्मादन्तरेण तिष्ठन्प्राऽऽजति ॥ ९ ॥ पलाश-शाखया प्राऽऽजति। यत्र वै गायत्री सोममच्छाऽपतत्तदस्या-ऽआहरन्त्या ऽअपादस्ताऽभ्यायत्य पर्णं प्रचिच्छेद गायत्र्यै वा सोमस्य वा राज्ञस्तत्पतित्वा पर्णोऽभवत्तस्मात्पर्णो नाम तद्यदेवाऽत्र सोमस्य न्यक्तं तदिहाऽप्यसदिति तस्मात्पला-शशाखया प्राऽऽजति ॥ १० ॥ अथाऽनड्वाहावाजन्ति । तौ

(१) शु० सं० अ० ४ क० ३१। (२) शु० सं० अ० ४ क० ३१। (३) शु० सं० अ० ४ क० ३२।

* नद्धस्य पुरोदेशप्रसारितो ध्वजः प्रतिनाहः, तद्भाजनन्तत्स्थानीयं भवतीत्यर्थः (सा० भा०)। अग्राऽनसो वाससा वेष्टनमिति देवयाज्ञिकः।

यदि कृष्णौ स्यातामन्यतरो वा कृष्णस्तत्र विद्याद्वर्षिष्यत्येषमः पर्जन्यो वृष्टिमान्भविष्यतीत्येतदु विज्ञानम् ॥ ११ ॥ अथ युनक्ति । 'उस्रावेतं धूर्षाहावि'त्युस्रौ हि भवतो धूर्षाहाविति धूर्वाहौ हि भवतो 'युज्येथामनश्रू' इति युज्येते ह्यनश्रू इत्त्यनार्ताविति त'द्वीरहणावि'त्यपापकृताविति तद् 'ब्रह्मचोदनावि'ति ब्रह्मचोदनौ हि भवतः 'स्वस्ति यजमानस्य गृहान्गच्छत'मिति यथैनावन्तरा नाष्ट्रा रक्षांसि न हिंस्युरेवमेतदाह ॥ १२ ॥ अथ पश्चात्परिक्रम्य । अपालम्बमभिपद्याऽऽह सोमाय क्रीतायाऽनुब्रूहीति सोमाय पर्य्यूह्यमाणायेति वाऽतो यतरथा कामयेत ॥ १३ ॥ अथ वाचयति । 'भद्रो मेऽसि' 'प्रच्च्यवस्व भुवस्पत' इति भद्रो ह्यस्यैष भवति तस्माद्राऽन्यमाह्रियतेऽप्यस्य राजानः सभागा आगच्छन्ति पूर्वो राज्ञोऽभिवदति भद्रो हि भवति तस्मादाह भद्रो मेऽसीति प्रच्च्यवस्व भुवस्पत इति भुवनानाᳪ ह्येष पति'र्विश्वान्यभि धामानी'त्यङ्गानि वै विश्वानि धामान्यङ्गान्येवैतदुभ्याह 'मा त्वा परिपरिणो विदन्मा त्वा परिपन्थिनो विदन्मा त्वा वृका अघायवो विदन्नि'ति यथैनमन्तरा नाष्ट्रा रक्षांसि न विन्देयुरेवमेतदाह ॥ १४ ॥ 'श्येनो भूत्वा परापते'ति । वय-

(१) शु॰ सं॰ अ॰ ४ क॰ ३३ । (२) शु॰ सं॰ अ॰ ४ क॰ ३३ । (३) शु॰ सं॰ अ॰ ४ क॰ ३३ । (४) शु॰ सं॰ अ॰ ४ क॰ ३३ । (५) शु॰ सं॰ अ॰ ४ क॰ ३३ । (६) शु॰ सं॰ अ॰ ४ क॰ ३४ । (७) शु॰ सं॰ अ॰ ४ क॰ ३४ । (८) शु॰ सं॰ क॰ ४ क॰ ३४ । (९) शु॰ सं॰ अ॰ ४ क॰ ३४ ।

ऽएवैनमेतद्भूतं प्रपायति यद्वा ऽउग्रं तन्नाष्ट्रा रक्षाᳬसि नाऽन्ववयन्त्येतद्वै वयसामोजिष्ठं बलिष्ठं यच्छ्येनस्तमेवै- तद्भूतं प्रपातयति यदाह श्येनो भूत्वा परापतेति ॥ १५ ॥ अथ शरीरमेवा*ऽन्ववहन्ति । 'यजमानस्य गृहान्गच्छ तन्नौ सᳬस्कृतमि'ति नाऽत्र तिरोहितमिवाऽस्ति ॥ १६ ॥ अथ †सुब्रह्मण्यामाह्वयति । यथा येभ्यः पक्ष्यन्त्स्यात्तान्ब्रूयादि- त्यहे वः पक्ताऽस्मीत्येवमेवैतद्देवेभ्यो यज्ञं निवेदयति 'सुब्रह्मण्योᳬ३म् सुब्रह्मण्योᳬमि'ति ब्रह्म हि देवान्प्रच्च्या- वयति त्रिष्कृत्व ऽआह त्रिवृद्धि यज्ञः ॥ १७ ॥ 'इन्द्राऽऽ- गच्छे'ति । इन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्राऽऽगच्छेति 'हरिव ऽआगच्छ मेधातिथेर्मेष वृषणश्वस्य मेने । गौरा- वस्कन्दिन्नहल्यायै जारे'ति तद्यान्येवाऽस्य चरणानि तैरे- वैनमेतत्प्रमुमोदयिषति ॥ १८ ॥ 'कौशिक ब्राह्मण गौतम ब्रुवाणे'ति । शश्वद्धैतदारुणिनाऽधुनोपज्ञातं यद्गौतम ब्रुवा- णेति स यदि कामयेत ब्रूयादेतद्यद्यु कामयेताऽपि नाऽऽद्रि- येते'त्यहे सुत्यामि'ति यावदहे सुत्या भवति ॥ १९ ॥ 'देवा ब्रह्माण ऽआगच्छते'ति । तद्देवाँश्च ब्राह्मणाँश्चाऽऽहैतैर्ह्युभयैरर्थो भवति यद्देवैश्च ब्राह्मणैश्च ॥ २० ॥ अथ प्रातिप्र- स्थाता । अग्रेण शालामग्नीषोमीयेण पशुना प्रत्युपातिष्ठते-

* 'क' पुस्तके 'ऽन्वावहन्ति' इति ।

† सुब्रह्मण्यानामकेन ऋत्विजा यदिन्द्राद्यावाहनं क्रियते तत् सुब्रह्मण्याह्वानम् ।

( १ ) शु० सं० अ० ४ कं० ३६ । ( २ ) षड्वि० ब्रा० १ १ ३ । ( ३ ) षड्वि० ब्रा० १ १ २ । ( ४ ) षड्वि० ब्रा० १ १ २ । ( ५ ) षड्वि० ब्रा० १. १ २ । ( ६ ) ला० श्रौ० सू० १ ३ । ( ७ ) ला० श्रौ० सू० १ ३ ।

ऽआग्नावैष्णवᳫं ह्यदो दीक्षणीयᳬ हविर्भवति यो वै विष्णुः सोमः स हविर्वा ऽएष देवानां भवति यो दीक्षते तदेनमन्तर्जम्भ ऽआदधाते तत्पशुनाऽऽत्मानं निष्क्रीणीते ॥२१॥ तद्धैके। आहवनीयादुल्मुकमाहरन्त्ययमग्निरयᳬ सोमस्ताभ्याᳫं सह सन्नयां निष्क्रेष्यामह ऽइति वदन्तस्तदु तथा न कुर्य्याद्यत्र वा ऽएतौ क्व च तत्सहैव ॥ २२ ॥ स वै द्विरूपो भवति। द्विदेवत्यो हि भवति देवतयोरसमदे कृष्णसारङ्गः स्यादित्याहुरेतद्ध्येनयो रूपतममिवेति यदि कृष्णसारङ्गं न विन्देदुथो ऽअपि लोहितसारङ्गः स्यात् ॥२३॥ तस्मिन्वाचयति। 'नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतᳫं सपर्य्यत। दूरे दृशे देवजाताय केतवे दिवस्पुत्राय सूर्य्याय शᳫंसते'ति नम ऽएवाऽस्मा ऽएतत्करोति मित्रधेयमेवैनेनैतत्कुरुते ॥ २४ ॥ अथाऽद्भ्र्युरारोहणं विमुञ्चति। 'वरुणस्योत्तम्भनमसी'त्युपस्तम्भनेनोपस्तभ्नाति 'वरुणस्य स्कम्भसर्जनी स्थ' ऽइति शम्म्ये ऽउद्‌वृहति स यदाह वरुणस्य स्कम्भसर्जनी स्थ ऽइति वरुण्यो ह्येष ऽएतर्हि भवति यत्सोमः क्रीतः ॥ २५ ॥ अथ चत्वारो राजाऽऽसन्दीमाददते। द्वौ वा ऽअस्मै मानुषाय राज्ञ ऽआददाते ऽअथैतां चत्वारो योऽस्य सकृत्सर्वस्येष्टे ॥२६॥ औदुम्बरी भवति। अन्नं वा ऊर्गुदुम्बर ऽऊर्जोऽन्नाद्यस्याऽवरुद्ध्यै तस्मादौदुम्बरी भवति ॥२७॥ नाभिदघ्ना भवति। अत्र

(१) शु० सं० अ० ४ क० ३५। (२) शु० सं० अ० ४ क० ३६। (३) शु० सं० अ० ४ क० ३६।

वा ऽअन्नं प्रतितिष्ठत्यन्नꣳ सोमस्तस्मान्नाभिदघ्ना भवत्यत्रो ऽएव रेतस ऽआशयो रेतꣳ सोमस्तस्मादत्रदघ्ना भवति ॥ २८ ॥ तामभिमृशति । 'वरुणस्य ऽऋतसदन्यसी'त्यथ कृष्णाजिनमास्तृणाति 'वरुणस्य ऽऋतसदनमसी'त्यथैनमासादयति 'वरुणस्य ऽऋतसदनमासीदे'ति स यदाह वरुणस्य ऽऋतसदनमासीदेति वरुण्यो ह्येष ऽएतर्हि भवति ॥ २९ ॥ अथैनꣳ शालां प्रपादयति । स प्प्रपादयन्वाचयति 'याँ ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम् । गयस्फानꣳ प्प्रतरणꣳ सुवीरोऽवीरहा प्प्रचरा सोम दुर्य्यानि'ति गृहा वै दुर्य्या गृहान्नꣳ शिवꣳ शान्तोऽपापकृत्प्रचरेत्येवैतदाह ॥ ३० ॥ अत्र हैके । उदपात्रमुपनिनयन्ति यथा राज्ञ ऽआगतायोदकमाहरेदेवमेतदिति वदन्तस्तदु तथा न कुर्य्यात्स्मानुपꣳ ह ते यज्ञे कुर्वन्ति व्यृद्धं वै तद्यज्ञस्य यन्मानुषं नेद्व्यृद्धं यज्ञे करवाणीति तस्मान्नोपनिनयेत् ॥ ३१ ॥

तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥



शिरो वै यज्ञस्याऽऽतिथ्यं बाहू प्प्रायणीयोदयनीयौ । अभितो वै शिरो बाहू भवतस्तस्मादभित ऽआतिथ्यमेते हविषी भवतः प्प्रायणीयश्चोदयनीयश्च ॥१॥ ऽअथ यस्मा-

(१) शु० सं० अ० ४ क० ३६ । (२) शु० सं० अ० ४ क० ३६ । (३) शु० सं० अ० ४ क० ३६ ।

*दातिथ्यं नाम । अतिथिर्वा ऽएष ऽएतस्याऽऽगच्छति
यत्सोमः क्रीतस्तस्मा ऽएतद्यथा राज्ञे वा ब्राह्मणाय वा
†महोक्षं वा महाजं वा पचेत्तदह मानुषꣳ हविर्देवानामेव-
मस्मा ऽएतदातिथ्यं करोति ॥ २ ॥ तदाहुः । पूर्वोऽतीत्य
गृह्णीयादिति यत्र वा ऽअर्हन्तमागतं नाऽपचायन्ति क्रुध्यति
वै स तत्र तथा ह्याऽपचितो भवति ॥ ३ ॥ तद्वा ऽअन्यतर-
ऽएव विमुक्तः स्यात् । अन्यतरोऽविमुक्तोऽथ गृह्णीयात्स
यदन्यतरो विमुक्तस्तेनाऽऽगतो यद्वन्यतरोऽविमुक्तस्तेना-
ऽपचितः ॥ ४ ॥ तदु तथा न कुर्य्यात् । विमुच्यैव प्रपाद्य
गृह्णीयाद्यथा वै देवानां चरणं तद्वा ऽअनु मनुष्याणां तस्मा-
न्मानुषे यावन्न विमुञ्चते नैवाऽस्मै तावदुदकꣳ हरन्ति
नाऽपचितिं कुर्वन्त्यनागतो हि स तावद्भवत्यथ यदैव
विमुञ्चतेऽथाऽस्मा ऽउदकꣳ हरन्त्यथाऽपचितिं कुर्वन्ति तर्हि
हि स ऽआगतो भवति तस्माद्विमुच्यैव प्रपाद्य गृह्णीयात्
॥ ५ ॥ स वै सन्त्वरमाण ऽइव गृह्णीयात् । तथा ह्याऽपचितो
भवति तत्पत्न्यन्वारभते पर्य्युह्यमाणं वै यजमानोऽन्वारभते-
ऽथाऽत्र पत्न्युभयत ऽएवैतन्मिथुनेनाऽन्वारभेते यत्र वा-
ऽअर्हन्नाऽऽगच्छति सर्वगृह्या ऽइव वै तत्र चेष्टन्ति तथा
ह्याऽपचितो भवति ॥ ६ ॥ स वा ऽअन्येनैव ततो यजुषा

* 'आतिथ्यं निर्वपति वैष्णवं नवकपालम्' ( का० श्रौ० सू० ८. १. १. ) ।

† "महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत् ।
सत्क्रियाऽन्वासनं स्वादु भोजनं सूनृतं वचः" ( या० स्मृ० आचा० श्लो० १०९ ) ।

गृह्णीयात्। श्येनो चाऽन्यानि हवीᳬंष्येकं वा ऽएष भागं क्रीयमाणोऽभिक्रीयते छन्दसामेव राज्याय च्छन्दसाᳬं साम्राज्याय तस्य च्छन्दाᳬंस्यभितः * साचयानि यथा राज्ञोऽराजानो राजकृतः सूतग्रामण्य ऽएवमस्य च्छन्दाᳬंस्यभितः साचयानि ॥ ७ ॥ न वै तदवकल्पते। यच्छन्दोभ्यऽइति केवलं गृह्णीयाद्यत्र वा ऽअर्हते पचन्ति तदभितः साचयोऽन्वाभक्ता भवन्त्यराजानो राजकृतः सूतग्रामण्यस्तस्माद्यत्रैवैतस्मै गृह्णीयात्तदेव च्छन्दाᳬंस्यन्वाभजेत् ॥८॥ स गृह्णाति। 'अग्नेस्तनूरसि विष्णवे त्वे'त्यग्निर्वै गायत्री तद्गायत्रीमन्वाभजति ॥ ९ ॥ 'सोमस्य तनूरसि विष्णवे त्वे'ति। क्षत्रं वै सोमः क्षत्रं त्रिष्टुप्तत्त्रिष्टुभमन्वाभजति ॥ १० ॥ 'अतिथेरातिथ्यमसि विष्णवे त्वे'ति। सोऽस्योद्धारो यथा श्रेष्ठस्योद्धार ऽएवमस्यैष ऽऋते च्छन्दोभ्यः ॥ ११ ॥ 'श्येनाय त्वा सोमभृते विष्णवे त्वे'ति। तद्गायत्रीमन्वाभजति सा यद्गायत्री श्येनो भूत्वा दिवः सोममाहरत्तेन सा श्येनः सोमभृत्तेनैवैनामेतद्वीर्येण द्वितीयमन्वाभजति ॥ १२ ॥ 'अग्नये त्वा रायस्पोषदे विष्णवे त्वे'ति। पशवो वै रायस्पोषः पशवो जगती तज्जगतीमन्वाभजति ॥ १३ ॥ अथ यत्पञ्चकृत्वो गृह्णाति। संवत्सरसम्मितो वै यज्ञः पञ्च वा ऽऋतवः संवत्सरस्य तं पञ्चभिराप्नोति

---

* अभितः साचयानीति, पुरः पश्चात् सर्वेषाऽऽगन्तारः प्रधानपुरुषा इत्यर्थः।

(१) शु० सं० अ० ५ क० १। (२) शु० सं० अ० ५ क० १। (३) शु० सं० अ० ५ क० १। (४) शु० सं० अ० ५ क० १। (५) शु० सं० अ० ५ क० १।

तस्मात्पञ्चकृत्वो गृह्णात्यथ यद्विष्णवे त्वा विष्णवे त्वेति गृह्णाति विष्णवे हि गृह्णाति यो यज्ञाय गृह्णाति ॥ १४ ॥ नवकपालः पुरोडाशो भवति । शिरो वै यज्ञस्याऽऽतिथ्यं नवाक्षरा वै गायत्र्यष्टौ तानि यान्यन्वाह प्रणवो नवमः पूर्वार्द्धो वै यज्ञस्य गायत्री पूर्वार्द्ध ऽएष यज्ञस्य तस्मान्नवकपालः पुरोडाशो भवति ॥१५॥* कार्ष्मर्य्यमयाः परिधयः । देवा ह वा ऽएतं वनस्पतिषु राक्षोघ्नं ददृशुर्यत्कार्ष्मर्य्यः शिरो वै यज्ञस्याऽऽतिथ्यं नेच्छिरो यज्ञस्य नाष्ट्रा रक्षाꣳसि हिनसन्निति तस्मात्कार्ष्मर्य्यमयाः परिधयो भवन्ति ॥१६॥ †आश्ववालः प्रस्तरः । यज्ञो ह देवेभ्योऽपचक्राम सोऽश्वो भूत्वा पराङावर्वर्त्त तस्य देवा ऽअनुहाय वालानभिपेदुस्तानालुलुपुस्तानालुप्य सार्द्धꣳ सन्न्यासुस्तत ऽएता ऽओषधयः समभवन्यदश्ववालाः शिरो वै यज्ञस्याऽऽतिथ्यं जघनार्द्धो वाला ऽउभयत ऽएवैतद्यज्ञं परिगृह्णाति यदाश्ववालः प्रस्तरो भवति ॥ १७ ॥ ‡ऐक्षव्यौ विधृती । ‡‡नेद्बर्हिश्च प्रस्तरश्च संलुभ्याऽत ऽइत्यथोत्पूयाऽऽज्यꣳ सर्वाण्येव चतुर्गृहीतान्याज्यानि गृह्णाति न ह्यत्राऽनुयाजा भवन्ति ॥१८॥ §आसाद्य हवीꣳष्यग्निं मन्थति । शिरो वै यज्ञस्याऽऽतिथ्यं जनयन्ति वा ऽएनमेतद्यन्मन्थन्ति शीर्षतो वा ऽअग्रे

---

* 'कार्ष्मर्यमयाः परिधयः' ( का० श्रौ० सू० ८. १. १० ) ।

† 'आश्ववालः प्रस्तरः' ( का० श्रौ० सू० ८ १ १० ) ।

‡ 'ऐक्षवी विधृती बर्हिश्च' ( का० श्रौ० सू० ८. १. १० ) ।

‡‡ सर्वोऽप्यनुवाक ( तै० स० ६. २. १ ) अत्र द्रष्टव्य ।

§ 'आसाद्याऽग्निमन्थनमाहोमात्करोति' ( का० श्रौ० सू० ८. १ १२ ) ।

जायमानो जायते शीर्षत ऽएवैतदग्ने यज्ञं जनयत्यग्निर्वै सर्वा देवता ऽअग्नौ हि सर्वाभ्यो देवताभ्यो जुह्वति शिरो वै यज्ञस्याऽऽतिथ्यꣳ शीर्षत ऽएवैतद्यज्ञꣳ सर्वाभिर्देवताभिः समर्द्धयति तस्मादग्निं मन्थति ॥ १९ ॥ सोऽधिमन्थनꣳ शकलमादत्ते । 'अग्नेर्जनित्रमसी'त्यत्र ह्यग्निर्जायते तस्मादाहाऽग्नेर्जनित्रमसीति ॥ २० ॥ अथ दर्भतरुणके निदधाति । 'वृषणौ स्थ' ऽइति तद्यावेवेमौ* श्रियै साकञ्जावेतावेवैतौ ॥ २१ ॥ अथाऽधरारणिं निदधाति 'उर्वश्यसी'त्यथोत्तरारण्याऽऽज्यविलापनीमुपस्पृश'त्यायुरसी'ति तामभिनिधाति 'पुरूरवा ऽअसी'त्युर्वशी वा ऽअप्सराः पुरूरवाः पतिरथ यत्तस्मान्मिथुनादजायत तदायुरेवमेवैष ऽएतस्मान्मिथुनाद्यज्ञं जनयत्यथाऽऽहाऽग्नये मथ्यमानायाऽनु ब्रूहीति ॥ २२ ॥ स मन्थति । 'गायत्रेण त्वा छन्दसा मन्थामि त्रैष्टुभेन त्वा च्छन्दसा मन्थामि जागतेन त्वा च्छन्दसा मन्थामीति' तं वै छन्दोभिरेव मन्थति च्छन्दाꣳसि मथ्यमानायाऽन्वाह च्छन्दाꣳस्येवैतद्यज्ञमन्वायातयति यथाऽमुमादित्यꣳ रश्मयो जातायाऽनुब्रूहीत्याह यदा जायते प्रह्रियमाणायेत्यनुप्रहरन् ॥ २३ ॥ सोऽनुप्रहरति । 'भवतं नः समनसौ सचेतसावरेपसौ । मा यज्ञꣳ हिꣳसिष्टं मा यज्ञपतिं

---

* श्रियै साकञ्जाविति, श्रियै—श्रिया सकाशात्—साकञ्जौ सहजायमानावित्यर्थः ।

(१) शु० सं० अ० ५ क० २ । (२) शु० सं० अ० ५ क० २ । (३) शु० सं० अ० ५ क० २ । (४) शु० सं० अ० ५ क० । (५) शु० सं० अ० ५ क० २ । (६) शु० सं० अ० ५ क० २ । (७) शु० सं० अ० ५ क० २ ।

जातवेदसौ शिवौ भवतमद्यन' ऽइति शान्तिमेवाऽऽभ्यामेतद्व-
दति यथा नाऽन्योऽन्यꣳ हिꣳस्याताम् ॥ २४ ॥ अथ
स्रुवेणोपहत्याऽऽज्यम् । अग्निमभिजुहो'त्यग्नावग्निश्चरति प्र-
विष्ट ऽऋषीणां पुत्रो ऽअभिशस्तिपावा । स नः स्योनः सुयजा
यजेह देवेभ्यो हव्यꣳ सदमप्रयुच्छन्त्स्वाहे'त्याहुत्यैवा-
ऽएतमजीजनत तमेतयाऽऽहुत्याऽप्रैषीत्तस्मादेवमभिजुहोति
॥ २५ ॥ तदिडान्तं भवति । नाऽनुयाजान्यजन्ति शिरो
वै यज्ञस्याऽऽतिथ्यं पूर्वार्द्धो वै शिरः पूर्वार्द्धमेवैतद्यज्ञस्या-
ऽभि* सꣳस्करोति स यद्धाऽनुयाजान्यजेद्यथा शीर्षतः पर्या-
हृत्य पादौ प्रतिदध्यादेवं तत्तस्मादिडान्तं भवति नाऽनुया-
जान्यजन्ति ॥ २६ ॥

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



आतिथ्येन वै देवा ऽइष्ट्वा । तान्त्समदविन्दत्ते चतुर्द्धा
व्यद्रवन्नन्योऽन्यस्य श्रिया ऽअतिष्ठमाना ऽअग्निर्वसुभिः
सोमो रुद्रैर्वरुण ऽआदित्यैरिन्द्रो मरुद्भिर्बृहस्पतिर्विश्वैर्दे-
वैरित्यु हैक ऽआहुरेते ह त्वेव ते विश्वे देवा ये ते चतुर्द्धा
व्यद्रवꣳस्तान्विद्रुतानसुररक्षसान्यनु व्यवेयुः ॥ १ ॥ ते-
ऽविदुः । पापीयाꣳसो वै भवामोऽसुररक्षसानि वै नोऽनुव्य-
वागुर्द्विषद्भ्यो वै रध्यामो हन्त सञ्जानामहा ऽएकस्य श्रियै

* 'सꣳस्करोति' इति 'क' पुस्तके ।

(१) शु० स० अ० ५ क० ३ । (२) का० श्रौ० सू० ८. १ १३ । (३) शु०
सं० अ० ५ क० ४ ।

तिष्ठामहा ऽइति त ऽइन्द्रस्य श्रिया ऽअतिष्ठन्त तस्मादाहु-
रिन्द्रः सर्वा देवता ऽइन्द्रश्रेष्ठा देवा ऽइति ॥ २ ॥
तस्मादु ह न स्वा ऽऋतीयेरन् । य ऽएषां परस्तरामिव
भवति स ऽएनाननु व्व्युवैति ते प्प्रियं द्विषतां कुर्वन्ति
द्विषद्भ्यो रक्षन्ति तस्मान्नर्तीयेरन्त्स यो हैवं विद्वान्नर्त्ती-
यतेऽप्प्रियं द्विषतां करोति न द्विषद्भ्यो रक्षति तस्मान्नर्त्ती-
येत ॥ ३ ॥ ते होचुः । हन्तेदं तथा करवामहै यथा
न ऽइदमा प्प्रादिवमेवा*ऽजर्य्यमसदिति ॥ ४ ॥† ॥ ते देवाः ।
जुष्टास्तनूः प्प्रियाणि धामानि सार्द्धः समवददिरे
ते होचुरेतेन नः स नानाऽसदेतेन विष्वङ् यो न-
ऽएतदतिक्रामादिति कस्योपद्रष्टुरिति तनूनप्त्रेव शाकरस्येति
‡यो वा ऽअयं पवत ऽएष तनूनपाच्छाकरः सोऽयं प्रजाना-
मुपद्रष्टा प्प्रविष्टस्ताविमौ प्प्राणोदानौ ॥५॥ तस्मादाहुः । मनो
देवा मनुष्यस्याऽऽजानन्तीति मनसा सङ्कल्पयति तत्प्राणमपि
पद्यते प्प्राणो वातं वातो देवेभ्य ऽआचष्टे यथा पुरुषस्य
मनः ॥६॥ तस्मादेतदृषिणाऽभ्यनूक्तम् । मनसा सङ्कल्पयति
तद्वातमपि गच्छति । वातो देवेभ्य ऽआचष्टे यथा पुरुष
ते मन ऽइति ॥ ७ ॥ ते देवाः । जुष्टास्तनूः प्प्रियाणि
धामानि सार्द्धः समवददिरे ते होचुरेतेन नः स नाना-
ऽसदेतेन विष्वङ् यो न ऽएतदतिक्रामादिति तद्देवा ऽअप्प्ये-

* "अजर्य्यं सङ्गतम्" पा० सू० ( ३ १ १०५ ) इत्यनेन निपात्यते ।
† अत्र शतम् १५०० ।
‡ सो वा इति 'ख पुस्तके पाठ ।

तर्हि नाऽतिक्रामन्ति के हि स्युर्य्यदतिक्रामेयुरनृतꣳ हि वदेयुरेकꣳ ह वै देवा व्रतं चरन्ति सत्यमेव तस्मादेषां जित-*मनपजय्यं तस्माद्यश ऽएवꣳ ह वा ऽअस्य जितमनपजय्य-मेवं यशो भवति य ऽएवं विद्वान्त्सत्यं वदति तदेत†त्तानूनप्त्रं निदानेन ॥ ८ ॥ ते देवाः । जुष्टास्तनूः प्रियाणि धामानि सार्द्धꣳ समवदिरेऽथैत ऽआज्याद्धयेव गृह्णाना जुष्टास्तनूः प्रियाणि धामानि सार्द्धꣳ समवद्यन्ते तस्मादु ह न सर्वेणेव समभ्यवेयान्नेन्मे जुष्टास्तन्वः प्रियाणि धामानि सार्द्धꣳ समभ्यवायानिति येनो ह समभ्यवेयान्नाऽस्मै द्रुह्येदिदुꣳ ह्याहुर्न्न सतानूनप्त्रिणे द्रोग्धव्यमिति ॥ ९ ॥ अथाऽतो गृह्णात्येव । आपतये त्वा परिपतये गृह्णामी(१)ति यो वा-ऽअयं पवत ऽएप ऽआ च पतति परि च पतत्येतस्मा ऽउ हि गृह्णाति तस्मादाहाऽऽपतये त्वा परिपतये गृह्णा-मीति ॥ १० ॥ 'तनूनप्त्रे शाक्वराये'(२)ति । यो वा ऽअयं पवत-ऽएप तनूनप्ता शाक्वर ऽएतस्मा ऽउ हि गृह्णाति तस्मादाह तनूनप्त्रे शाक्वरायेति ॥ ११ ॥ 'शक्मन ऽओजिष्ठाये'(३)ति । एप वै शक्वौजिष्ठ ऽएतस्मा ऽउ हि गृह्णाति तस्मादाह शक्मन ऽओजिष्ठायेति ॥ १२ ॥ अथाऽतः समवमृशत्येव । एतद्ध देवा भूयः समामिर ऽइत्थं नः सोऽसुथाऽसन्नो न-ऽएतदतिक्रामादिति तथो ऽएवैत ऽएतत्सममन्त ऽइत्थं

* 'क्षय्यजय्यौ शक्यार्थे' ( पा० सू० ६ । १ । ८१ ) इति।

† अध्वर्युप्रभृति षोडशर्त्विजो यजमानश्च मिथो द्रोहशून्या भवन्त एकमत्या यज्ञकार्यं सम्पादयितुं आज्यस्पर्शनपूर्वकं यत् शपथं कुर्वन्ति, तदेव कर्म तानूनप्त्रमित्युच्यते ।

(१) शु० सं० अ० ५ क० ५। (२) शु० सं० अ० ५ क० ५। (३) शु० सं० अ० ५ क० ५।

नः सोऽमुथा सद्यो न ऽएतदतिक्रामादिति ॥ १३ ॥ ते समवमृशन्ति । 'अनाधृष्टमस्यनाधृष्यं देवानामोज' ऽइत्यनाधृष्टा हि देवा ऽआसन्ननाधृष्याः सह सन्तः समानं वदन्तः समानं दध्राणा देवानामोज ऽइति देवानां वै जुष्टास्तन्वः प्रियाणि धामा'न्यनभिशस्त्यभिशस्तिपाऽनभिशस्तेन्न्यमि'ति सर्वाथं हि देवा ऽअभिशस्तिं तीर्णा- 'ऽअञ्जसा सत्यमुपगेषमि'ति सत्यं वदानि मेदमतिक्रमिषमित्येवैतदाह 'स्विते मा धा' ऽइति स्विते हि तद्देवा ऽआत्मानमदधत यत्सत्यमवदन्न्यरसत्यमकुर्वँस्तस्मादाह स्विते मा धा ऽइति ॥ १४ ॥ अथ यास्तद्देवाः । जुष्टास्तनूः प्रियाणि धामानि सार्द्धꣳ समवदादिरे तदिन्द्रे सन्न्यदधतैष वाऽइन्द्रो य ऽएष तपति न ह वा ऽएषोऽग्रे तताप यथा हैवेदमन्न्यत्कृष्णमेवꣳ हैवाऽऽस तेनैवैतद्वीर्येण तपति तस्माद्यदि वहवो दीक्षेरन्न्गृहपतय ऽएव व्रतमभ्युत्सिच्च्य प्रयच्छेयुः स हि तेषामिन्द्रभाजनं भवति यद्यु दक्षिणावता दीक्षेत यजमानायैव व्रतमभ्युत्सिच्च्य प्रयच्छेयुरिदꣳ ह्याहुरिन्द्रो यजमान ऽइति ॥ १५ ॥ अथ यास्तद्देवाः । जुष्टास्तनूः प्रियाणि धामानि सार्द्धꣳ समवदादिरे तत्सार्द्धꣳ सञ्जघ्ने तत्सामाऽभवत्तस्मादाहुः सत्यꣳ साम देवजꣳ सामेति ॥ १६ ॥

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

(१) शु० सं० अ० ५ कं० ५। (२) शु० सं० अ० ५ कं० ५। (३) शु० सं० अ० ५ कं० ५। (४) शु० सं० अ० ५ कं० ५।

[ अथाऽवान्तरदीक्षा ]

आतिथ्येन वै देवा ऽइष्ट्वा। तान्त्समदविन्दत्ते तानूनप्त्रैः समशाम्यँस्त ऽएतस्य प्रायश्चित्तिमैच्छन्न्यदुन्न्योऽन्न्यं पापमवदत्राऽऽह पुराऽवभृथात्पुनर्दीक्षामवाऽकल्पयँस्त ऽएतामवान्तरां *दीक्षामपश्यन् ॥ १ ॥ तेऽग्निमेव त्वचं विपल्ल्याऽङ्गयन्त। तपो वा ऽअग्निस्तपो दीक्षा तदवान्तरां दीक्षामुपायँस्तद्यदवान्तरां दीक्षामुपायँस्तस्मादवान्तरदीक्षा सन्तरामङ्गुलीराश्चन्त सन्तरां मेखलां पर्य्यस्तामेवैनामेतत्सतीं पर्य्यास्यन्त तथो ऽएवैष ऽएतद्यदतः प्राचीनमन्नृतं वा करोत्यन्नृतं वा वदति तस्यैवैतत्प्रायश्चित्तिं कुरुते ॥ २ ॥ सोऽग्निमेव त्वचं विपल्ल्यङ्गयते। तपो वा ऽअग्निस्तपो दीक्षा तदवान्तरां दीक्षामुपैति सन्तरामङ्गुलीरञ्चते सन्तराम्मेखलां पर्य्यस्तामेवैनामेतत्सतीं पर्य्यस्यते प्रजामु हैव तद्देवा ऽउपाऽऽयन् ॥३॥ तेऽग्निमेव त्वचं विपल्ल्याऽङ्गयन्त। अग्निर्वै मिथुनस्य कर्त्ता प्रजनयिता तत्प्रजामुपाऽऽयन्त्सन्तरामङ्गुलीराश्चन्त सन्तराम्मेखलान्तत्प्रजामात्मन्नकुर्वत तथो ऽएवैष ऽएतत्प्रजामेवोपैति ॥ ४ ॥ सोऽग्निमेव त्वचं विपल्ल्यङ्गयते। अग्निर्वै मिथुनस्य कर्त्ता प्रजनयिता तत्प्रजामुपैति सन्तरामङ्गुलीरञ्चते सन्तराम्मेखलां तत्प्रजामात्मन्कुरुते ॥ ५ ॥ देवानामु ह स्म दीक्षितानाम्। यः समिद्धारो वा स्वाध्यायं वा †विसृज्यते तद्ध ह स्मेतरस्यैवेतरः रूपेणेतरस्येतरमसुररक्ष-

* तै० सं० ( ६ २ २ ७ ) द्रष्टव्यम्।

† 'विसृजते' इति 'ग-च' पुस्तकयो।

सानि जिघाᳫंसन्ति ते ह पापं वदन्त ऽउपसमेयुरिति वै मां त्वमचिकीर्षीरिति मा जिघाᳫंसीरित्यग्निर्हैव तथा नाऽन्य-मुवादाऽग्निं तथा नाऽन्यः ॥ ६ ॥ ते होचुः । अपीत्थं त्वामग्नेऽवादिषूरिति नैवाऽहमन्यं न मामन्य ऽइति ॥ ७ ॥ तेऽविदुः । अयं वै नो विरक्षस्तमोऽस्यैव रूपमसाम तेन रक्षाᳫंस्यतिमोक्ष्यामहे तेन स्वर्गं लोकᳫं समश्नुवि-ष्यामह ऽइति तेऽग्नेरेव रूपमभवंस्तेन रक्षाᳫंस्यत्यमुच्यन्त तेन स्वर्गं लोकᳫं समाश्नुवत तथो ऽएवैष ऽएतदग्नेरेव रूपं भवति तेन रक्षाᳫंस्यतिमुच्यते तेन स्वर्गं लोकᳫं समश्नुते स वै समिधमेवाऽभ्यादधदवान्तरदीक्षामुपैति ॥ ८ ॥ स समिधमभ्यादधाति । * '(१)अग्ने व्रतपास्त्वे व्रतपा' ऽइत्यग्निर्हि देवानां व्रतपतिस्तस्मादाहाऽग्ने व्रतपास्त्वे व्रतपा-ऽइति '(२)या तव तनूरियᳫं सा मयि यो मम तनूरेषा सा त्वयि । सह नौ व्रतपते व्रतानी'ति तदग्निना त्वचं विप-ल्ल्यङ्गयते '(३)ऽनु मे दीक्षां दीक्षापतिर्मन्यतामनु तपस्तपस्प-तिरि'ति तदवान्तरां दीक्षामुपैति सन्तरामङ्गुलीरचते सन्तरा-म्मेखलां पर्य्यस्तामेवैनामेतत्सतीं पर्य्यस्यते ॥ ९ ॥ अथैनमतो †मदन्तीभिरुपचरन्ति । तपो वा ऽअग्निस्तपो मदन्त्यस्तस्मादेनं मदन्तीभिरुपचरन्ति ॥ १० ॥ अथ ‡ मदन्तीरुपस्पृश्य ।

* का० श्रौ० सू० ८ २ ४ ।

† पत्नीयजमानयो क्षतोपच दृष्टाऽदृष्टकार्यार्थास्तप्ता आपो 'मदन्त्य' इत्युच्यन्ते । यत्स्पर्शोऽपि शुद्धिकर, एतादृश आपो 'मदन्त्य' इति गोपीनाथ । ( सत्या० श्रौ० सू० ७ ३ )

‡ 'मदन्तीभिरुप' इति पाठ 'ग च' पुस्तकयो । ( का० श्रौ० सू० ८ २ ६ )

( १ ) शु० स० अ० ५ क० ६ । ( २ ) शु० स० अ० ५ क० ६ । ( ३ ) शु० स० अ० ५ क० ६ ।

राजानमाप्यायन्ति तद्यन्मदन्तीरुपस्पृश्य राजानमाप्यायन्ति * वज्रो वा ऽआज्यꣳ रेतꣳ सोमो नेद्वज्रेणाऽऽज्येन रेतꣳ सोमꣳ हिनसामेति तस्मान्मदन्तीरुपस्पृश्य राजानमाप्यायन्ति ॥ ११ ॥ तदाहुꣳ । यस्मा ऽएतदाप्यायनं क्रियत ऽआतिथ्यꣳ सोमाय तमेवाऽत्र ऽआप्याययेयुरथाऽवान्तरदीक्षामथ तानूनप्त्राणीति तदु तथा न कुर्याद्यज्ञस्य वा ऽएवं कर्माऽत्र वा ऽएनान्त्समदविन्दत्ते सꣳशममेव पूर्वमुपायन्नथाऽवान्तरदीक्षामथाऽऽप्यायनम् ॥१२॥ तद्यदाप्याययन्ति । देवो वै सोमो दिवि हि सोमो वृत्रो वै सोम ऽआसीत्तस्यैतच्छरीरं यद्गिरयो यदश्मानस्तदेषोऽशानानामौषधिर्जायत ऽइति ह स्माऽऽह श्वेतकेतुरौद्दालकिस्तामेतदाहृत्याऽभिषुण्वन्ति तां दीक्षोपसद्भिस्तानूनप्त्रैराप्यायनेन सोमं कुर्वन्तीति तथो ऽएवैनामेष ऽएतद्दीक्षोपसद्भिस्तानूनप्त्रैराप्यायनेन सोमं करोति ॥ १३ ॥ 'मधु सारघमि'ति वा ऽआहुꣳ । यज्ञो ह वै मधु सारघमथैत ऽएव सरघो मधुकृतो यदृत्विजस्तद्यथा मधु मधुकृत ऽआप्याययेयुरेवमेवैतद्यज्ञमाप्याययन्ति ॥ १४ ॥ [1]यज्ञेन वै देवाꣳ । इमां जितिं जिग्युर्येषामियं जितिस्ते होचुꣳ कथं न ऽइदं मनुष्यैरनभ्यारोह्यꣳ स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरो-

* आज्यस्य वज्ररूपत्वम् , ( तै० सं० ६. २ २. ४ ) अत्र द्रष्टव्यम् ।

( १ ) शु० य० अ० १९ कं० ११ ।

† तै० सं० २. २ ८ इत्यत्र द्रष्टव्यम् ।

ऽभवन्नथ यदेनेनाऽयोपयँस्तस्माद्यूपो नाम ॥ १५ ॥ तद्वा ऽऋषीणामनुश्रुतमास । ते यज्ञꣳ समभरन्यथाऽयं यज्ञꣳ सम्भृत ऽएवं वा ऽएष यज्ञꣳ सम्भरति यो दीक्षते वाग्वै यज्ञस्तद्यदेवाऽत्र यज्ञस्य निर्धीतं यद्विदुग्धं तदेवैतत्पुनराप्याययति ॥१६॥ ते वै षड् भूत्वाऽऽप्याययन्ति । षड्वा ऽऋतव ऽऋतव ऽएवैतद्भूत्वाऽऽप्याययन्ति ॥१७॥ त ऽआप्याययन्ति । 'अꣳशुरꣳशुष्टे देव सोमाऽऽप्यायतामि'ति तदस्याऽꣳशुमꣳशुमेवाऽऽप्यायय'न्तीन्द्रायैक धनविद्' ऽइतीन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्रायेत्येकधनविद् ऽइति शतꣳ शतꣳ ह स वा ऽएष देवान्प्रत्येकैक ऽएवाꣳशुरेकधनानाप्यायते दश–दश 'वाऽऽतुभ्यमिन्द्रꣳ प्यायतामात्वमिन्द्राय प्यायस्वे'तीन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तामेवैतदाप्याययत्यात्वमिन्द्राय प्यायस्वेति तदेतस्मिन्नाऽऽप्यायनं दधा'त्याप्याययाऽस्मान्सखीन्त्सन्न्या मेधये'ति स यत्सनोति तत्तदाह यत्सन्न्येत्यथ यदनुब्रूते तदु तदाह यन्मेधयेति 'स्वस्ति ते देव सोम सुत्यामशीये'त्येका वा ऽएतेषामाशीर्भवत्यृत्विजां च यजमानस्य च यज्ञस्योदृचं गच्छेमेति यज्ञस्योदृचं गच्छानीत्येवैतदाह ॥१८॥ अथ प्रस्तरे निन्हुवते । *उत्तरत ऽउपचारो वै यज्ञोऽथैतद्दक्षिणे †वाऽन्वित्याप्याययन्त्यग्निर्वै यज्ञस्तद्यज्ञं पृष्ठतꣳ ‡कुर्वते तन्निमरथ्या

(१) शु० सं० अ० ५ क० ७। (२) शु० सं० अ० ५ क० ७। (३) शु० सं० अ० ५ क० ७। (४) शु० सं० अ० ५ क० ७। (५) शु० सं० अ० ५ क० ७।

* 'उत्तरत उपचारो यज्ञ' का० श्रौ० सू० १ ८ २६ द्रष्टव्यम्।

† 'नाऽन्वि' इति 'ख' पुस्तके।

‡ 'कुर्वंति' इति 'गन्च' पुस्तकयो।

कुर्वन्ति देवेभ्य ऽआवृश्च्यन्ते यज्ञो वै प्रस्तरस्तद्यज्ञं पुनरारभन्ते तस्यो हैषा प्रायश्चित्तिस्तथो हैषामेतन्न मिथ्याकृतं भवति न देवेभ्य ऽआवृश्च्यन्ते तस्मात्प्रस्तरे निन्हुवते ॥१९॥ तदाहुः। अक्ते निन्हुवीरा३न्ननक्ता३ ऽइत्यनक्ते हैव निन्हुवीरन्ननुप्रहरणं ह्येवाऽक्तस्य ॥२०॥ ते निन्हुवते । 'एष्टा रायः प्रेषे भगाय ऽऋतमृतवादिभ्य' ऽइति सत्यं सत्यवादिभ्य ऽइत्येवैतदाह 'नमो द्यावापृथिवीभ्यामि'ति तदाभ्यां द्यावापृथिवीभ्यां निन्हुवते ययोरिदं सर्वमधि ॥ २१ ॥ अथाऽऽह * समुल्लुप्य प्रस्तरम् । अग्नीन्मदन्त्यापा३ ऽइति मदन्तीत्यग्नीदाह ताभिरेहीत्युपर्य्युपर्य्यग्निमतिहरति स यन्नाऽनुप्रहरत्येतेन ह्यत ऽऊर्ध्वान्यहानि प्रचरिष्यन्भवत्यथ यदुपर्य्युपर्य्यग्निमतिहरति तदेवाऽस्याऽनुप्रहृतभाजनं भवति † तमग्नीधे प्रयच्छति तमग्नीन्निदधाति ॥ २२ ॥

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ अथोपसदिष्टिः ]

[1]ग्रीवा वै यज्ञस्योपसदः शिरः ‡‡ प्रवर्ग्यः । तस्माद्यदि $ प्रवर्ग्यवान्भवति प्रवर्ग्येण प्रचर्य्याऽथोपसद्भिः प्रचरन्ति

(१) शु० सं० अ० ५ क० ७। (२) शु० सं० अ० ५ क० ७ ।

* का० श्रौ० सू० ८ २ १० ।

† का० श्रौ० सू० ८ २ १२ ।

‡ ( ऐ० ब्रा० १ ५ ८ ) इत्यत्र आतिथ्यस्य शिरस्त्वमुपसदां ग्रीवात्वम् ।

‡‡ का० श्रौ० सू० ८ २ १५।

$ का० श्रौ० सू० ८ २ १५ । आश्वलायनोऽपि 'प्रथमयज्ञेनैके घर्मम्' (४ ८ १६) इति ।

तद् ग्रीवाः प्रतिदधाति ॥ १ ॥ तद्याः पूर्वाह्णेऽनुवाक्या भवन्ति । ता ऽअपराह्णे* याज्या या याज्यास्ता ऽअनुवाक्यास्तद्व्यतिषजति तस्मादिमानि ग्रीवाणां पर्वाणि व्यतिषक्तानीमान्यस्थीनि ॥ २ ॥ देवाश्च वा ऽअसुराश्च । उभये प्राजापत्याः पस्पृधिरे ततोऽसुरा ऽएषु लोकेषु पुरश्चक्रिरेऽयस्मयीमेवाऽस्मिँल्लोके रजतामन्तरिक्षे हरिणीं दिवि ॥ ३ ॥ तद्वै देवा ऽअस्पृण्वत । त ऽएताभिरुपसद्भिरुपाऽऽसीदँस्तद्यदुपाऽऽसीदँस्तस्मादुपसदो नाम ते पुरः प्राऽभिन्दन्निमाँल्लोकान्प्राऽजयँस्तस्मादाहुरुपसदा पुरं जयन्तीति यदुहोपाऽऽसते तेनेमां मानुषीं पुरं जयन्ति ॥ ४ ॥ एताभिर्वै देवा ऽउपसद्भिः । पुरः प्राऽभिन्दन्निमाँल्लोकान्प्राऽजयँस्तथो ऽएवैष ऽएतद्याऽऽहैवाऽस्मा ऽअस्मिँल्लोके कश्चन पुरः कुरुत ऽइमानेवैतल्लोकान्प्रभिनत्तीमाँल्लोकान्प्रजयति तस्मादुपसद्भिर्यजते ॥ ५ ॥ ता वा ऽआज्यहविषो भवन्ति । वज्रो वा ऽआज्यमेतेन वै देवा वज्रेणाऽऽज्येन पुरः प्राऽभिन्दन्निमाँल्लोकान्प्राजयँस्तथो ऽएवैष ऽएतेन वज्रेणाऽऽज्येनेमाँल्लोकान्प्रभिनत्तीमाँल्लोकान्प्रजयति तस्मादाज्यहविषो भवन्ति ॥ ६ ॥ स वा ऽअष्टौ कृत्वो जुह्वां गृह्णाति । चतुरुपभृत्यथो ऽइतरथाऽऽहुश्चतुरेव कृत्वो जुह्वां गृह्णीयादष्टौ कृत्व ऽउपभृतीति ॥ ७ ॥ स वा ऽअष्टावेव

---

* 'अग्निर्वृत्राणि जङ्घनत्' 'य उग्र इव शर्यहा' ऋ० सं० ६. १६. ३४, ३९। 'त्वं सोमासि सत्पतिः, भद्रक्रतो अभीरहा' ऋ० सं० १ ९१ ५, १२। 'इदं विष्णुर्विचक्रमे, त्रीणि पदा विचक्रमे' ऋ० सं० १. २२ १७, १८। इति त्रीणि युगलानि क्रमेणाऽग्नि-सोमविष्णूनां याज्यानुवाक्यारूपाणि भवन्ति ।

कृत्वो जुह्वां गृह्णाति । चतुरुपभृति तद्वज्रमभिभारं करोति तेन वज्रेणाऽभिभारेणेमाँल्लोकान्प्रभिनत्तीमाँल्लोकान्प्रजयति ॥ ८ ॥ अग्नीषोमौ वै देवानाꣳ सयुजौ । ताभ्याꣳ सार्द्धं गृह्णाति विष्णव ऽएकाकिनेऽन्यतरमेवाऽऽघारमाघारयति यꣳ स्रुवेण प्रतिक्रामति वा ऽउत्तरमाघारमाघार्य्याऽभिजित्या ऽअभिजयानीति तस्मादन्यतरमेवाऽऽघारमाघारयति यꣳ स्रुवेण ॥ ९ ॥ अथाऽऽश्राव्य * न होतारं प्रवृणीते । सीद होतरित्येवाऽऽहोपविशति होता होतृषदन ऽउपविश्य प्रसौति प्रसूतोऽध्वर्युः स्रुचावादत्ते ॥ १० ॥ सऽआहाऽतिक्राम†न्नग्नयेऽनुब्रूहीति । आश्राव्याऽऽहाऽग्निं यजेति ‡ वषट्कृते जुहोति ॥ ११ ॥ अथाऽऽह सोमायाऽनुब्रूहीति। आश्राव्याऽऽह सोमं यजेति वषट्कृते जुहोति ॥१२॥ अथ यदुपभृत्याज्यं भवति। तत्समानयमान ऽआह‡‡ विष्णवेऽनुब्रूहीत्याश्राव्याऽऽह विष्णुं यजेति वषट्कृते जुहोति ॥ १३ ॥ स यत्समानन्न तिष्ठञ्जुहोति । न यथेदं प्रचरन्तसञ्चरत्यभिजित्या ऽअभिजयानीत्यथ यदेता देवता यजति वज्रमेवैतत्सꣳस्करो§त्यग्निमनीकꣳ सोमꣳ शल्यं विष्णुं कुल्मलꣳ ॥ १४ ॥ संवत्सरो हि वज्रः । अग्निर्वाऽअहः सोमो रात्रिरथ यदन्तरेण तद्विष्णुरेतद्वै परिप्लवमानः

* का० श्रौ० सू० ८. २. २९ ।

† का० श्रौ० सू० ८. २. ३० ।

‡ 'अर्धं हुत्वा सोमायेति' का० श्रौ० सू० ८. २. ३१ ।

‡‡ 'विष्णवे समानीयेति' का० श्रौ० सू० ८. २. ३१ ।

§ अग्निमित्यारभ्य विष्णुमित्यस्य प्राक् ग्रन्थ. (१.४.८) ऐ० ब्रा० एवमेव । तै० सं० ६, २. ३ १ ।

संवत्सरं करोति ॥ १५ ॥ संवत्सरो वज्रः । एतेन वै देवाः संवत्सरेण वज्रेण पुरः प्राऽभिन्दन्निमाँल्लोकान्प्राऽजयँस्तथो ऽएवैष ऽएतेन संवत्सरेण वज्रेणेमाँल्लोकान्प्रभिनत्तीमाँल्लोकान्प्रजयति । तस्मादेता देवता यजति ॥ १६ ॥ स वै तिस्र ऽउपसद ऽउपेयात् । त्रयो वा ऽऋतवः संवत्सरस्य संवत्सरस्यैवैतद्रूपं क्रियते संवत्सरमेवैतत्सꣳस्करोति *द्विरेकया प्रचरति द्विरेकया ॥ १७ ॥ †ताः षट् सम्पद्यन्ते । षड्वा ऽऋतवः संवत्सरस्य संवत्सरस्यैवैतद्रूपं क्रियते संवत्सरमेवैतत्सꣳस्करोति ॥ १८ ॥ यद्यु द्वादशोपसद ऽउपेयात् । द्वादश वै मासाः संवत्सरस्य संवत्सरस्यैवैतद्रूपं क्रियते संवत्सरमेवैतत्सꣳस्करोति द्विरेकया प्रचरति द्विरेकया ॥ १९ ॥ ताश्चतुर्विꣳशतिः सम्पद्यन्ते । चतुर्विꣳशतिर्वै संवत्सरस्याऽर्द्धमासाः संवत्सरस्यैवैतद्रूपं क्रियते संवत्सरमेवैतत्सꣳस्करोति ॥ २० ॥ ‡स यत्सायम्प्रातः प्रचरति । तथा ह्येव सम्पत्सम्पद्यते स यत्पूर्वाह्ने प्रचरति तज्जयत्यथ यदपराह्णे प्रचरति सुजितमसदित्यथ यज्जुहोतीदं वै पुरं युञ्जन्ति तां जित्वा स्वाꣳ सतीं प्रपद्यन्ते ॥२१॥ स यत्प्रचरति । तद्युञ्जत्यथ यत्सन्तिष्ठते तज्जयत्यथ यज्जुहोति स्वामेवैतत्सतीं प्रपद्यते ॥ २२ ॥ स जुहोति । ‡‡यया

* 'द्विरेकया चरति' का० श्रौ० ८ २ ३४ ।

† तै० स० ६. २. ३. ३-४ द्रष्टव्यम् ।

‡ का० श्रौ० सू० ८. २ ३५ द्रष्टव्यम् ।

‡‡ का० श्रौ० सू० ८. २. ३६ । तै० स० ६. २. ३. १-५ द्रष्टव्यम् ।

द्विरेकस्याऽह्नः प्रचरिष्यन्भवति * 'या ते ऽअग्नेऽयःशया तनूर्वर्षिष्ठा गह्वरेष्ठा । †उग्रं वचो ऽअपाऽवधीत्त्वेषं वचोऽअपावधीत्स्वाहे'त्येवङ्रूपा हि साऽऽसीदयस्मयी हि साऽऽसीत् ॥ २३ ॥ अथ जुहोति । यया द्विरेकस्याऽन्हः प्रचरिष्यन्भवति 'या ते ‡ऽअग्ने रजःशया तनूर्वर्षिष्ठा गह्वरेष्ठा । उग्रं वचो ऽअपाऽवधीत्त्वेषं वचो ऽअपावधीत्स्वाहे'त्येवङ्रूपा हि साऽऽसीद्रजता हि साऽऽसीत् ॥ २४ ॥ अथ जुहोति । यया द्विरेकस्याऽह्नः प्रचरिष्यन्भवति 'या ते ऽअग्ने हरिशया तनूर्वर्षिष्ठा गह्वरेष्ठा । उग्रं वचोऽअपावधीत्त्वेषं वचो ऽअपावधीत्स्वाहे'त्येवङ्रूपा हि साऽऽसीद्धरिणी हि साऽऽसीद्यद्यु द्वादशोपसद ऽउपेयाच्चतुरहमेकया प्रचरेच्चतुरहमेकया ॥ २५ ॥ अथाऽतो व्रतोपसदामेव । पर ऽउर्वीर्वा ऽअन्न्या ऽउपसदः परोऽह्वीरन्न्याः स यासामेकं प्रथमाहं दोग्ध्यथ द्वावथ ‡‡ त्रींस्ताः पर ऽउर्वीरथ यासां त्रीन्प्रथमाहं दोग्ध्यथ द्वावथैकं ताः परोऽह्वीर्य्यो वै परोऽह्वीस्ताः पर ऽउर्वीर्य्याः पर ऽउर्वीस्ताः

(१) शु० स० अ० ५ क० ८। (२) शु० स० अ० ५ क० ८। (३) शु० स० अ० ५ क० ८।

* 'उपसद जुहोति स्रुवेण या ते इति' का० श्रौ० सू० ८ २ २३।

† 'यथा असुरै पराजिता देवा अन्नपाने अलभमाना क्षुपिपासाभ्या भय पीडिता इति यदूचुस्तद् उग्र वच। तथा किं वा वीरहत्यादि महापातकमस्माभि कृतमिति विलशन्तो यद्वाक्य सन्तापहेतुत्वेन दीप्तमूचुस्तत् त्वेष वच' तथा च—"अशनायापिपासे ह वा उग्रं वच एनश्च वै वीरहत्य च त्वेष वच' तै० स० १ २ ११। इति।

‡ का० श्रौ० सू० ८ २ २६।

‡‡ का० श्रौ० सू० ८ २ २७।

पुरोऽह्नीः ॥ २६ ॥ तपसा वै लोकं जयन्ति । तदस्यैतत्परः पर ऽएव वरीयस्तपो भवति परः-परः श्रेयाꣳसं लोकं जयति वसीयान्तु हैवाऽस्मिँल्लोके भवति य ऽएवं विद्वान्पुरोऽह्नीरुपसद ऽउपैति तस्मादु पुरोऽह्नीरेवोपसद ऽउपेयाद्यद्यु द्वादशोपसद ऽउपेयात्त्रींश्चतुरहं *दोहयेद् द्वौ चतुरहमेकं चतुरहम् ॥ २७ ॥

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥

कण्डिकासंख्या ॥१२१॥

[ महावेदिमानम् ]

तद्य ऽएष पूर्वार्द्ध्यो वर्षिष्ठ स्थूणाराजो भवति । तस्मात्प्राङ् प्रक्रामति त्रीन्विक्रमाँस्तच्छङ्कुं निहन्ति †सोऽन्तःपातः ॥ १ ॥ तस्मान्मध्यमाच्छङ्कोः । दक्षिणा पञ्चदश विक्रमान्प्रक्रामति तच्छङ्कुं निहन्ति सा दक्षिणा श्रोणिः ॥ २ ॥ तस्मान्मध्यमाच्छङ्कोः । उदङ् पञ्चदश विक्रमान्प्रक्रामति तच्छङ्कुं निहन्ति सोत्तरा श्रोणिः ॥ ३ ॥ तस्मान्मध्यमाच्छङ्कोः । प्राङ् षट्त्रिꣳशतं विक्रमान्प्रक्रामति तच्छङ्कुं निहन्ति स पूर्वार्द्धः ॥ ४ ॥ तस्मान्मध्यमाच्छङ्कोः । दक्षिणा द्वादश विक्रमान्प्रक्रामति तच्छङ्कुं वि-

* का० श्रौ० ८ २ १-२ । तै० सं० ६ २ ३. ७-१४ द्रष्टव्यम् ।
† 'पूर्वाग्न्यांसस्तम्भात् पुरस्तात् त्रिषु प्रक्रमेषु शङ्कुं निहन्ति सोऽन्तःपातः' का० श्रौ० सू० ८. ३. ७ । इत आरभ्य ८ १२ द्रष्टव्यम् ।

हन्ति स दक्षिणोऽक्षसः ॥ ५ ॥ तस्मान्मद्ध्यमाच्छङ्कोः । उदङ् द्वादश विक्रमान्प्रक्रामति तच्छङ्कुं निहन्ति स ऽउत्तरोऽक्षस ऽएषा मात्रा वेदेः ॥ ६ ॥ अथ यत्त्रिꣳशद्विक्रमा पश्चाद्भवति । त्रिꣳशदक्षरा वै विराड्विराजा वै देवा ऽअस्मिँल्लोके प्रत्यतिष्ठँस्तथो ऽएवैष ऽएतद्विराजैवाऽस्मिँल्लोके प्रतितिष्ठति ॥ ७ ॥ अथो ऽअपि त्रयस्त्रिꣳशत्स्युः । त्रयस्त्रिꣳशदक्षरा वै विराट् तद्विराजैवाऽस्मिँल्लोके प्रतितिष्ठति ॥ ८ ॥ अथ यत्षट्त्रिꣳशद्विक्रमा प्राची भवति । षट्त्रिꣳशदक्षरा वै बृहती बृहत्या वै देवाः स्वर्गं लोकꣳ समाश्नुवत तथो ऽएवैष ऽएतद्बृहत्यैव स्वर्गं लोकꣳ समश्नुते सोऽस्य दिव्याऽऽहवनीयो भवति ॥ ९ ॥ अथ यच्चतुर्विꣳशतिविक्रमा पुरस्ताद्भवति । चतुर्विꣳशत्यक्षरा वै गायत्री पूर्वार्द्धो वै यज्ञस्य गायत्री पूर्वार्द्धं ऽएष यज्ञस्य तस्माच्चतुर्विꣳशतिविक्रमा पुरस्ताद्भवत्येषा मात्रा वेदेः ॥ १० ॥ अथ यत्पश्चाद्वरीयसी भवति । पश्चाद्वरीयसी पृथुश्रोणिरिति वै योषां प्रशꣳसन्ति यद्वेव पश्चाद्वरीयसी भवति पश्चादेवैतद्वरीयः प्रजननं करोति तस्मात्पश्चाद्वरीयसः प्रजननादिमाः प्रजाः प्रजायन्ते ॥ ११ ॥ नासिका ह वा ऽएषा यज्ञस्य यदुत्तरवेदिः । अथ यदेनामुत्तरां वेदेरुपकिरति तस्मादुत्तरवेदिर्नाम ॥ १२ ॥ द्वय्यो ह वा ऽइदमग्रे प्रजा ऽआसुः । आदित्याश्चैवाऽङ्गिरसश्च ततोऽङ्गिरसः पूर्वे यज्ञꣳ समभरँस्ते यज्ञꣳ सम्भृत्योचुरग्निमिमां नः श्वः सुत्यामादित्येभ्यः प्रब्रूह्यनेन नो यज्ञेन याजयतेति ॥१३॥

ते हाऽऽदित्या ऽऊचुः । उपजानीत यथाऽस्मानेवाऽङ्गिरसो जयान्न वयमङ्गिरस ऽइति ॥ १४ ॥ ते होचुः । वा ऽअन्न्येन यज्ञादपक्रमणमस्त्यन्तरामेवं सुत्यां प्रियामहा ऽइति ते यज्ञं सञ्जहुस्ते यज्ञं सम्भृत्योचुः श्वःसुत्यां वै स्त्वमस्मभ्यमग्ने प्राऽवोचोऽथ वयमद्य सुत्यामेव तुभ्यं प्रब्रूमोऽङ्गिरोभ्यश्च तेषां नस्त्वः होताऽसीति ॥ १५ ॥ तेऽन्न्यमेव प्रति प्रजिग्युः । अङ्गिरसोऽच्छ ते हाऽप्यङ्गिरसोऽग्नयेऽन्वागत्य चुक्रुधुरिव कथं नु नो दूतश्चरन्न प्रत्यादृथाऽइति ॥ १६ ॥ स होवाच । अनिन्द्या वै माऽवृषत सोऽनिन्द्यैर्वृतो नाऽशकमपक्रमितुमिति तस्मादु हाऽनिन्द्यस्य वृतो नाऽपक्रामेत्तु ऽएतेन सद्यः क्रियाऽङ्गिरस ऽआदित्यानयाजयन्त्स सद्यःक्रीः ॥ १७ ॥ तेभ्यो वाचं दक्षिणामानयन् । तां न प्रत्यगृह्णन्हास्यामहे यदि प्रतिग्रहीष्याम ऽइति तदु तद्यज्ञस्य कर्म्म न व्ययमुच्यत यद्दाक्षिणमासीत् ॥ १८ ॥ अथैभ्यः सूर्य्यं दक्षिणामानयन् । तं प्रत्यगृह्णँस्तस्मादु ह स्माऽऽहुरङ्गिरसो वयं वा ऽआर्त्विजीनाः स्मो वयं दक्षिणीया ऽअपि वा ऽअस्माभिरेष प्रतिगृहीतो य ऽएष तपतीति तस्मात्सद्यः क्रियो*ऽश्वः श्वेतो दक्षिणा ॥ १९ ॥ तस्य† रुक्मः पुरस्ताद्भवति । तदेतस्य रूपं क्रियते य ऽएष तपति यद्यश्वं श्वेतं न विन्देदपि गौरेव श्वेतः

---

* "न कथाऽप्यानमनुर्दनाऽश्व स यवनीय स्यात्"
"अश्व परमार् अरनुर्तेऽश्वान महाराजो भवतीति वा" इति पारस्कोपे ।

† 'स्वर्णनिर्मितं वक्षाकारमाभरणविशेषं 'रुक्मः' इत्युच्यते' ।

स्यात्तस्य स्वमः पुरस्ताद् भवति तदेतस्य रूपं क्रियते य ऽएष तपति ॥ २० ॥ तेभ्यो ह वाक्चुक्रोध । केन मदेष श्रेयाऽस्वन्धुनाऽकेनार यदेतं प्रत्यग्रहीष्ट न मामिति सा हैभ्योऽपचक्राम सोभयाऽनन्तरेण देवासुरान्त्सँव्यत्ता-न्त्सिᳲही भूत्वाऽऽददाना चचार तामुपैव देवा ऽअमन्त्र-यन्तोपाऽसुरा ऽअग्निरेव देवानां दूत ऽआस सहरक्षा-ऽइत्यसुररक्षसमसुराणाᳲ ॥ २१ ॥ सा देवानुपाऽवत्स्यन्त्यु-वाच । यद्व ऽउपावर्त्तेयं किं मे ततः स्यादिति पूर्वामेव त्वाऽग्नेराहुतिः प्राप्स्यसीत्यथ हैषा देवानुवाच यां मया काश्चाऽऽशिषमाशासिष्यद्वे सा वः सर्वा समर्द्धिष्यत-ऽइति सैवं देवानुपाऽऽववर्त्त ॥ २२ ॥ स यद्धाऽर्युमाणेऽग्नौ । उत्तरवेदिं व्याघारयति यदेवैनामदो देवा ऽअब्रुवन्पूर्वा त्वाऽग्नेराहुतिः प्राप्स्यतीति तदेवैनामेतत्पूर्वामग्नेराहुतिः प्राप्नोति वाग्घ्येषा निदानेनाऽथ यदुत्तरवेदिमुपकिरति यज्ञस्यैव सर्वत्वाय वाग्घि यज्ञो वागु ह्येषा ॥ २३ ॥ तां वै युगशम्येन विमिमीते । युगेन यत्र हरन्ति शम्यया यतो हरन्ति युगशम्येन वै योग्यं युञ्जन्ति सा यद्वेवाऽदः सिᳲही भूत्वा शान्तेवाऽऽचरत्तदेवैनामेतद्यज्ञे युनक्ति ॥२४॥ तस्मान्निवृत्तदक्षिणां न प्रतिगृह्णीयात् । सिᳲही हैनं भूत्वा क्षिणोति नो हाऽस्मा कुर्वीत सिᳲही हैवैनं भूत्वा क्षिणोति नो हाऽन्यस्मै दद्यायज्ञं तदन्यत्राऽत्मनः कुर्वीत तस्माद्योऽस्याऽपि पाप ऽइव समानबन्धुः स्यात्तस्मा ऽएनां दद्यात्स यद्ददाति तदेनः सिᳲही भूत्वा न क्षिणोति

यदु समानबन्धवे ददाति तदु नाऽन्यत्राऽऽत्मनः कुरुत ऽएषो निवृत्तदक्षिणायै प्रतिष्ठा ॥ २५ ॥ *अथ शम्म्या श्च स्फ्यश्चाऽऽदत्ते । तद्य ऽएष पूर्वार्द्धः उत्तरार्द्धः शङ्कुर्भवति तस्मात्प्रत्यङ् प्रक्रामति त्रींस्त्रिक्रमाँस्तच्चात्वालं परिलिखति सा[†] चात्वालस्य मात्रा नाऽत्रमात्राऽस्ति यत्रैव स्वयं मनसा मन्येताऽग्रेणोत्करं तच्चात्वालं परिलिखेत् ॥ २६ ॥ स वेद्यन्तात् । उदीचीᳬ शम्म्यां निदधाति स परिलिखति 'तप्तायनी मे ऽसी'तीमामेवैतदाहाऽस्याᳬ हि तत्त ऽएति ॥ २७ ॥ अथ पुरस्तात् । उदीचीᳬ शम्म्यां निदधाति स परिलिखति 'वित्तायनी मेऽसी'तीमामेवैतदाहाऽस्याᳬ हि विविदान ऽएति ॥२८॥ अथाऽनु वेद्यन्तम् । प्राचीᳬ शम्म्यां निदधाति स परिलिख'त्यवताऽन्मा नाथितादि'तीमामेवैतदाह यत्र नाऽथैतन्माऽवतादिति ॥ २९ ॥ अथोत्तरतः । प्राचीᳬ शम्म्यां निदधाति स परिलिख'त्यवताऽन्मा व्यथितादि'ती मामेवैतदाह यत्र व्यथैतन्माऽवतादिति ॥ ३० ॥ अथ हरति । यत्र हरति तदग्नी दुपसीदति स वा ऽग्नीनामेव नामानि गृह्णन्हरति यान्वाऽअमून्देवा ऽअग्रेऽग्नीन् होत्राय प्रावृणत ते प्राऽधन्वँस्त-

* 'द्वात्रिंशदङ्गुलप्रमाणा समन्ता वारणी शम्याम्' का० श्रौ० सू० वृ० ( ५. ३. २० ) ।
'गदया समानाकारो व्यायामार्थपरिमित काष्ठविशेष शम्या' तै० सं० १. १. ९ ।
'गदया सदृशी बाहुपरिमिता शम्या' तै० ब्रा० ३. २. ६ ।

† 'उत्तरवेदि निचयार्थं यत्र भूप्रदेशे मृदं खनति स प्रदेशश्चात्वाल उच्यते' ।

(१) शु० य० अ० ५ क० ९ । (२) शु० सं० अ० ५ क० ९ । (३) शु० सं० अ० ५ क० ९ । (४) शु० य० अ० ५ क० ९ ।

ऽइमा ऽएव पृथिवीरूपाऽसर्पन्निमामहैव द्वे ऽअस्याः परे तेनैवैतन्निदानेन हरति ॥ ३१ ॥ स प्रहरति । 'विदेदग्नि-र्नभो नामाऽग्ने ऽअङ्गिर ऽआयुना नाम्नेही'ति स यत्रा-ऽधन्वँस्तदायुर्दधाति तत्समीरयति 'योऽस्यां पृथिव्याम-सी'ति योऽस्यां पृथिव्यामसीति हृत्वा निदधाति 'यत्ते-ऽनाधृष्टं नाम यज्ञियं तेन त्वाऽऽदध' ऽइति यत्तेऽनाधृष्टः रक्षोभिर्नाम यज्ञियं तेन त्वाऽऽदध ऽइत्येवैतदाह'ऽनु त्वा देववीतय' ऽइति चतुर्थः हरति देवेभ्यस्त्वा जुष्टाꣳ हरामीत्येवैतदाह तां वै चतुःस्रक्तेश्चात्वालाद्धरति चतस्रो वै दिशः सर्वाभ्य ऽएवैनामेतद्दिग्भ्यो हरति ॥ ३२ ॥ अथाऽनुव्यूहति । 'सिꣳहीरसि सपत्नसाही देवेभ्यः कल्पस्वे'ति सा यदेवाऽदः सिꣳही भूत्वाऽशान्तेवाऽचरत्तदे-वैनामेतदाह सिꣳहीरसीति सपत्नसाहीति त्वया वयꣳ सपत्नान्पापीयसः क्रियास्मेत्येवैतदाह देवेभ्यः कल्पस्वेति योषा वा ऽउत्तरवेदिस्तामेवैतद्देवेभ्यः कल्पयति ॥ ३३ ॥ तां वै युगमात्रीं वा सर्वतः करोति । यजमानस्य वा दश-दश पदानि दशाक्षरा वै विराड्वाग्वै विराड्वाग्यज्ञो मध्ये नाभिकामिव करोति समानत्राऽऽसीनो व्याघारयाणीति ॥ ३४ ॥ तामद्भिरभ्युक्षति । सा यदेवाऽदः सिꣳही भूत्वाऽशान्ते वाऽऽचरच्छान्तिरापस्तामद्भिः शमयति योषा

(१) शु० स० अ० ५ क० ९। (२) शु० सू० अ० ५ क० ९। (३) शु० स० अ० ५ क० ९। (४) शु० स० अ० ५ क० ९। (५) शु० स० अ० ५ क० १०।

* का० श्रौ० सू० ५।३।३२।

वा ऽउत्तरवेदिस्तामेवैतद्देवेभ्यो हिन्वति तस्मादद्भिरभ्युक्षति ॥ ३५ ॥ सोऽभ्युक्षति । 'सिꣳहीरसि सपत्नसाही देवेभ्यः शुन्धस्वे'त्यथ सिकताभिरनुविकरत्यलङ्कारो न्वेव सिकता वभ्राजन्त ऽइव हि सिकता ऽअग्नेर्वा ऽएतद्वैश्वानरस्य भस्म यत्सिकता ऽअग्निं वा ऽअस्यामाधास्यन्भवति तथो हैनामग्निर्न हिनस्ति तस्मात्सिकताभिरनु विकिरति सोऽनु विकिरति 'सिꣳहीरसि सपत्नसाही देवेभ्यः शुम्भस्वे'त्यथैनां छादयति सा *च्छन्नैताꣳ रात्रिं वसति ॥ ३६ ॥

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

[ अथाऽग्निप्रणयनादि ]

†इध्ममभ्यादधति । उपयमनीरुपकल्पयन्त्याज्यमधिश्रयति स्रुवञ्च स्रुचश्च सम्मार्ष्ट्यथोरुप्याऽऽज्यं पञ्चगृहीतं गृहीते यदा प्रदीप्त ऽइध्मो भवति ॥१॥ अथोपयच्छन्तीध्मम् । उपयच्छन्त्युपयमनीरथाऽऽहाऽग्नये प्रह्रियमाणायाऽनुब्रूह्येकस्फ्ययाऽनूदेहीत्यनूदेति प्रतिप्रस्थातैकस्फ्ययैतस्मान्मध्यमाच्छङ्कोर्ध्य ऽएष वेदेर्जघनार्द्धे भवति तद्यदेवाऽत्राऽन्तःपातेन गार्हपत्यस्य वेदेर्व्यवच्छिन्नं भवति तदेवैतदनुसन्तनोति ॥ २ ॥ तद्धैके । ओत्तरवेदेरनूदायन्ति तदु तथा न कुर्याद्वैतस्मान्मध्यमाच्छङ्कोरनूदेयात्त ऽआयन्त्यागच्छ-

(१) शु० सं० अ० ५ क० १०। (२) शु० सं० अ० ५ क० १०।
* का० श्रौ० सू० ५ ४ ११।
† का० श्रौ० सू० ५ ४ २१।

न्युत्तरवेदिम् ॥ ३ ॥ *प्रोक्षणीरद्ध्वर्युरादत्ते । स पुरस्तादेवाऽग्रे †प्प्रोक्षत्त्युदङ् 'तिष्ठ'न्निन्द्रघोपस्त्वा वसुभिः पुरस्तात्पात्वि'तीन्द्रघोपस्त्वा वसुभिः पुरस्ताद्गोपायत्वित्त्येवैतदाह ॥ ४ ॥ अथ पश्चात्प्रोक्षति । 'प्रचेतास्त्वा रुद्रैः पश्चात्पात्वि'ति प्प्रचेतास्त्वा रुद्रैः पश्चाद्गोपायत्वित्त्येवैतदाह ॥ ५ ॥ अथ दक्षिणतः प्प्रोक्षति । 'मनोजवास्त्वा पितृभिर्द्दक्षिणतः पात्वि'ति मनोजवास्त्वा पितृभिर्द्दक्षिणतो गोपायत्वित्त्येवैतदाह ॥ ६ ॥ ‡ अथोत्तरतः प्प्रोक्षति । 'विश्वकर्म्मा त्वाऽदित्त्यैरुत्तरतः पात्वि'ति विश्वकर्म्मा त्वाऽदित्यैरुत्तरतो गोपायत्वित्त्येवैतदाह ॥ ७ ॥ अथ याः प्प्रोक्षण्यः परिशिष्यन्ते । तद्ये ऽएते पूर्वे स्रक्ती तयोर्या दक्षिणा तान्न्यन्तेन वहिर्वेदि निनय'तीदुमहं तसं व्वार्वहिर्द्धा यज्ञान्निः सृजामी'ति सा यदेवाऽदः सिंही भूत्त्वाऽशान्ते वाऽचरत्तामेवाऽस्या ऽएतच्छुचं वहिर्द्धा यज्ञान्निः सृजति यदि नाऽभिचरेद्यद्यु ऽअभिचरेदादिशेदिदमहं तसं व्वारमुमभि निःसृजामीति तमेतया शुचा विध्यति स शोचन्नेवाऽमुं लोकमेति ॥ ८ ॥ स यद्धाऽर्य्यमाणेऽग्नौ । उत्तरवेदिं व्याघारयति यदेवैनामदो देवाऽअब्रुवन्पूर्वां त्वाऽग्नेराहुतिः प्राप्प्स्यतीति तदेवैनामेतरपू-

---

* अत्र शतम् १८०० ॥

† का० श्रौ० सू० ५ ४ ५-१० ।

‡ का० का० श्रौ० सू० ५ ४ ११ ।

(१) शु० स० अ० ५ क० ११ । (२) शु० सं० अ० ५ क० ११ । (३) शु० स० अ० ५ क० ११ । (४) शु० स० अ० ५ क० ११ । (५) शु० स० अ० ५ क० ११ ।

र्वामग्नेराहुतिः प्राप्नोति यद्देषा देवानब्रवीद्यां मया काञ्चा-ऽऽशिषमाशासिष्यद्ध्वे सा वः सर्वा समर्द्धिष्यत ऽइति तामेनयाऽऽर्त्विजो यजमानायाऽऽशिषमाशासते साऽस्मै सर्वा समृध्यते ॥ ९ ॥ तद्वा ऽएतदेकं कुर्वन्द्वयं करोति । यदुत्तरवेदिं व्याघारयत्यथ येयां मध्येऽनाभिकेव भवति तस्यै ये पूर्वे स्रक्ती तयोर्न्या दक्षिणा ॥ १० ॥ तस्यामाघा-यति । 'सिꣳहीरसि स्वाहे'त्यथाऽपरयोरुत्तरस्याꣳ 'सिꣳही-रस्याऽऽदित्यवनिः स्वाहे'त्यथाऽपरयोर्दक्षिणस्याꣳ 'सिꣳ-हीरसि ब्रह्मवनिः क्षत्रवनिः स्वाहे'ति वह्नी वै यजुःष्वाशीस्तद्ब्रह्म च क्षत्रं चाऽऽशास्त ऽउभे वीर्ये ॥ ११ ॥ अथ *पूर्व-योरुत्तरस्याꣳ । 'सिꣳहीरसि सुप्रजावनी रायस्पोषवनिः' स्वाहे'ति तत्प्रजामाशास्ते यदाह सुप्रजावनिरिति रायस्पो-षवनिरिति भूमा वै रायस्पोषस्तद्भूमानमाशास्ते ॥ १२ ॥ अथ मद्ध्य ऽआघारयति । 'सिꣳहीरस्यावह देवान्यजमानाय स्वाहे'ति तद्देवान्यजमानायाऽऽवहयत्यथ स्रुचमुद्यच्छति 'भूतेभ्यस्त्वे'ति' प्रजा वै भूतानि प्रजाभ्यस्त्वेत्येवे तदाह ॥ १३ ॥ अथ †परिधीन्परिधाति । 'ध्रुवोऽसि पृथिवीं दृꣳ-हे'ति मध्यमं 'ध्रुवक्षिदस्यन्तरिक्षं दृꣳहे'ति दक्षिण'मच्च्यु-

(१) शु० स० अ० ५ क० १२ । (२) शु० स० अ० ५ क० १२ । (३) शु० स० अ० ५ क० १२ । (४) शु० स० अ० ५ क० १२ । (५) शु० स० अ० ५ के० १२ । (६) शु० स० अ० ५ क० १२ । (७) शु० स० अ० ५ क० १३ । (८) शु० सं० अ० ५ क० १३ ।

* का० श्रौ० सू० ५ ४ १२-१३ ।

† का० श्रौ० सू० ५ ४, १४ ।

तं स्रिदसि दिवं दृꣳहेत्युत्तरमग्नेः पुरीषमसीति * सम्भारानुपनिवपति तद्यत्सम्भारा भवन्त्यग्नेरेव सर्वत्वाय ॥ १४ ॥ शरीरꣳ हैवाऽस्य । पीतुदारु तद्यत्पैतु दारवाः परिधयो भवन्ति शरीरेणैवैनमेतत्समर्द्धयति कृत्स्नं करोति ॥ १५ ॥ माꣳसꣳ हैवाऽस्य गुल्गुलु । तद्यद् गुल्गुलु भवति माꣳसेनैवैनमेतत्समर्द्धयति कृत्स्नं करोति ॥ १६ ॥ गन्धो हैवाऽस्य सुगन्धितेजनम् । तद्यत्सुगन्धितेजनं भवति गन्धेनैवैनमेतत्समर्द्धयति कृत्स्नं करोति ॥ १७ ॥ अथ यद्वृष्णेस्तुका भवति । यद्वृष्णेर्ह वै विषाणे ऽअन्तरेणाऽग्निरेकाꣳ रात्रिमुवास तद्यदेवाऽत्राऽग्नेश्चर्यक्तं तदिहाऽप्यसदिति तस्माद्वृष्णेस्तुका भवति तस्माद्या शीर्ष्णो नेदिष्ठꣳ स्यात्तामाच्छिद्याऽऽहरेद्यद्यु तां न विन्देदपि यामेव काञ्चाऽऽहरेत्तद्यत्परिधयो भवन्ति गुप्त्या ऽएव दूरं ऽइव ह्येनमुत्तरे परिधयऽआगच्छन्ति ॥१८॥ (A)

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ सदोहविर्धाननिर्माणादि ]

पुरुषो वै यज्ञः । पुरुषस्तेन यज्ञो यदेनं पुरुषस्तनुत ऽएष वै तायमानो यावानेव पुरुषस्तावान्विधीयते तस्मात्पुरुषो

---

(१) शु० सं० अ० ५ क० १२। (२) शु० सं० अ० ५ क० १३।

* का० श्रौ० सू० ८.४ १५।

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—

कपि० सं० ३९ ३ ४ का० सं० २५ ६ मै० सं० ३ ८ ५, तै० सं० ६ २ ८; आप० श्रौ० ४ ५ २।

यज्ञः ॥ १ ॥ शिर ऽएवाऽस्य हविर्द्धानम् । वैष्णवं देवतयाऽथ यदस्मिन्त्सोमो भवति हविर्वै देवानाꣳ सोमस्तस्माद्धविर्द्धानं नाम ॥ २ ॥ [ काण्डस्यार्धम् ॥ ४३० ॥ ] मुखमेवाऽस्याऽऽहवनीयः । स यदा हवनीये जुहोति यथा मुख ऽआसिञ्चेदेवं तत् ॥ ३ ॥ स्तुप ऽएवाऽस्य यूपः । बाहू ऽएवाऽस्याऽऽग्नीध्रीयश्च मार्जालीयश्च ॥ ४ ॥ उदरमेवाऽस्य सदः । तस्मात्सदसि भक्षयन्ति यद्धीदं किञ्चाऽश्नन्त्युदर ऽएवेदꣳ सर्वं प्रतितिष्ठत्यथ यदस्मिन्विश्वे देवा ऽअसीदꣳस्तस्मात्सदो नाम त ऽउ ऽएवाऽस्मिन्नेते ब्राह्मणा विश्वगोत्राः सीदन्ति ॥ ५ ॥ अथ यावेतौ जघनेनाऽग्नी । पादावेवाऽस्यैतावेष वै तायमानो यावानेव पुरुषस्तावान्विधीयते तस्मात्पुरुषो यज्ञः ॥ ६ ॥ *उभयतोद्वारꣳ हविर्द्धानं भवति । उभयतोद्वारꣳ सदस्तस्मादयं पुरुष ऽआन्तꣳ सन्तृण्णः प्रणिक्ते हविर्द्धाने † ऽउपतिष्ठते ॥ ७ ॥ ते समुववर्त्तयन्ति । दक्षिणेनैव दक्षिणमुत्तरेणोत्तरं यद्वर्षीयस्तद्दक्षिणꣳ स्यात् ॥ ८ ॥ ‡ तयोः समववृत्तयोः । छदिरधि निदधति यदि छदिर्न्न विन्देयुश्छदिः सम्मितां ‡‡ वा भित्तिं प्रत्यानह्यन्ति रराट्यां परिश्रयन्त्युच्छ्रायीभ्यां छदिः पश्चादधि निदधति छदिः सम्मितां वा भित्तिम् ॥ ९ ॥ अथ पुनः प्रपद्य । § चतुर्गृहीतमाज्यं गृहीत्वा सावित्रं

* पृष्ठयामुभयतो द्वारे ( ८ ५ २५ ) का० श्रौ० सू० ।

† 'उपतिष्ठेते' इति 'क' पुस्तके ।

‡ का० श्रौ० सू० ८ ? २०—

‡‡ 'वा भित्तिं' इत्यत्र 'वा इति

§ का० श्रौ० सू० ८ ३ २५

प्रसवाय जुहोति सविता वै देवानां प्रसविता [§]सवितृ-प्रसूताथ यज्ञं तनवामहा ऽइति तस्मात्सावित्रं जुहोति ॥१०॥ स जुहोति । 'युञ्जते मन ऽउत युञ्जते धिय'ऽइति मनसा च वै वाचा च यज्ञं तन्वते स यदाह युञ्जते मन ऽइति तन्मनो युनक्त्युत युञ्जते धिय ऽइति तद्वाचं युनक्ति धिया-धिया ह्येतया मनुष्या जुज्यूपन्त्यनूक्तेनेव प्रकामो-द्येनेव गाथाभिरिव ताभ्यां युक्ताभ्यां यज्ञं तन्वते ॥११॥ 'विप्रा विप्रस्य बृहतो विपश्चित' ऽइति । ये वै ब्राह्मणाः शुश्रुवाꣳसोऽनूचानास्ते विप्रास्तानेवैतदभ्याह बृहतो विपश्चित ऽइति यज्ञो वै बृहद्विपश्चिद्यज्ञमेवैतदभ्याह 'वि होत्रा दधे वयुना विदेक ऽइद्' इति वि हि होत्रा दधते यज्ञं तन्वाना 'मही देवस्य सवितुः परिष्टुतिः स्वाहे'ति तत्सा-वित्रं प्रसवाय जुहोति ॥१२॥ [ अर्धप्रपाठकः ॥६६॥ ] अथाऽपरं चतुर्गृहीतमाज्यं गृहीत्वा । उपनिष्क्रामति दक्षिणया द्वारा पत्नीं [*] निष्क्रामयन्ति स दक्षिणस्य [†] हविर्धानस्य दक्षि-णायां वर्त्तन्याꣳ हिरण्यं निधाय जुहो'तीदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाꣳसुरे स्वाहे'ति सꣳस्रवं पत्न्यै पाणावानयति साक्षस्य सन्तापमुपाऽनक्ति 'देवश्रुतौ देवेष्वाघोपतमि'ति प्रयच्छति प्रतिप्रस्थात्रे स्रुचं चा-

(१) शु० सं० अ० ५ क० १४। (२) शु० सं० अ० ५ कं० १४। (३) शु० सं० अ० ५ क० १४। (४) शु० सं० अ० ५ क० १४। (५) शु० सं० अ० ५ क० १५। (६) शु० सं० अ० ५ क० १६।

§ 'क' पुस्तके 'सवितृप्रसूता' इति ।

* 'निष्क्रमयन्ति' इति 'क' पुस्तके ।

† का० श्रौ० सू० ८. ३. २७ ।

ऽऽज्यविलापनीश्च पर्य्यणयन्ति पत्नीमुभौ जघनेनाऽग्नी ॥१३॥ चतुर्गृहीतमाज्यं गृहीत्वा। प्रतिप्रस्थातोत्तरस्य हविर्द्धानस्य दक्षिणायां वर्त्तन्याᳬ हिरण्यं निधाय जुहो'ती-रावती धेनुमती हि भूतᳯ सूयवसिनी मनवे दशस्या। व्यस्कभ्ना रोदसी विष्णवेते दाधर्त्थ पृथिवीमभितो मयूखैᳯ स्वाहे'ति सᳬस्रवं पत्न्यै पाणावानयति * साक्षस्य सन्ताप-मुपाऽनक्ति 'देवश्रुतौ देवेष्वाघोपतमि'ति तद्यदेवं जुहोति ॥ १४ ॥ देवा ह वै यज्ञं तन्वानाᳯ। तेऽसुर रक्षसेभ्य-ऽआसङ्गाद्बिभयाञ्चक्रुर्वज्रो वा ऽआज्यन्त ऽएतेन वज्रेणाऽऽज्येन दक्षिणतो नाष्ट्रा रक्षाᳬस्यवाऽघ्नँस्तथैषां नियानं नाऽन्ववायँस्तथो ऽएवैष ऽएतेन वज्रेणाऽऽज्येन दक्षिणतो नाष्ट्रा रक्षाᳬस्यवहन्ति तथाऽस्य नियानं नाऽन्ववयन्ति तद्वैष्णवीभ्यामृग्भ्यां जुहोति वैष्णवᳯ हि हविर्द्धानम् ॥ १५ ॥ अथ यत्पत्न्यक्षस्य सन्तापमुपाऽनक्ति। प्रजनन-मेवैतत्क्रियते यदा वै स्त्रियै च पुᳬसश्च सन्तप्यतेऽथ रेतᳯ सिच्यते तत्ततᳯ प्रजायते परागुपाऽनक्ति पराग्घ्येव रेतᳯ सिच्यतेऽथाऽऽह हविर्द्धानाभ्यां प्रवर्त्त्यमानाभ्या-मनुब्रूहीति ॥ १६ ॥ अथ †वाचयति। 'प्राची प्रेतमध्वरं कल्पयन्ती' ऽइत्यध्वरो वै यज्ञᳯ प्राची प्रेतं यज्ञं कल्पयन्ती-ऽऊर्ध्वं यज्ञं नयतं मा जिह्वरतमि'त्यूर्द्ध्वमिमं

(१) शु० स० अ० ५ क० १६। (२) शु० स० अ० ५ क० १७। (३) शु० स० अ० ५ क० १७। (४) शु० स० अ० ५ क० १७।

* का० श्रौ० सू० ८ ३ २८-३।

† का० श्रौ० सू० ८ ४ १-३।

यज्ञं देवलोकं नयतमित्येवैतदाह मा जिह्वरतमिति तदे-तस्मा ऽअह्वलामाशास्ते समुद्रगृहेव प्रवर्तयेयुर्यथा नोत्स-र्जेतामसुर्य्यां वा ऽएषा वाग्याक्षे नेदिहाऽसुर्य्यां वाग्वदादिति यद्युत्सर्जेताम् ॥ १७ ॥ एतद्वाचयेत् । * 'स्त्रं गोष्ठमावदतं देवी दुर्य्ये ऽआयुर्म्मा निर्वादिष्टं प्रजां मा निर्वादिष्टमि'ति तस्यो हैषा प्रायश्चित्तिः ॥ १८ ॥ तदाहुः । उत्तरवेदेः प्रत्यङ् प्रक्रामेत्त्रीन्विक्रमाँस्तद्धविर्द्धाने स्थापयेत्सा हवि-र्द्धानयोर्म्मात्रेति नाऽत्र मात्राऽस्ति यत्रैव स्वयं मनसा मन्येत नाहैव सन्नाऽऽत्यन्तिके नोदूरे तत्स्था-पयेत् ॥ १९ ॥ ते ऽअभिमन्त्रयते । 'अत्र रमेथां वर्ष्म-न्पृथिव्या' ऽइति वर्ष्म ह्येतत्पृथिव्यै भवति दिवि ह्यस्याऽऽहवनीयो भवति नभ्यस्थे करोति तद्धि क्षेमस्य रूपम् ॥ २० ॥ अथोत्तरेण पर्य्येत्याऽध्वर्युः । दक्षिणं †हविर्द्धानमुपस्तभ्नाति 'विष्णोर्नुं कं वीर्य्याणि प्रवोचं यः पार्थिवानि विममे रजाꣳसि । यो ऽअस्कभायदुत्तरꣳ सधस्थं विचक्रमाणस्त्रेधोरुगायो विष्णवे त्वे'ति मेथीमुप-निहन्तीतरस्ततो यदु च मानुषे ॥ २१ ॥ ‡अथ प्रति-प्रस्थाता । उत्तरꣳ हविर्द्धानमुपस्तभ्नाति 'दिवो वा विष्ण-ऽउत वा पृथिव्या महो वा विष्ण ऽउरोरन्तरिक्षात् । उभा

---

* का० श्रौ० सू० ८.४ ४-५।

† का० श्रौ० सू० ८.४ ६-७।

‡ का० श्रौ० सू० ८ ४.८।

(१) शु० सं० अ० ५ म० १७। (२) शु० सं० अ० ५ म० १७। (३) शु० सं० अ० ५ म० १८। (४) शु० सं० अ० ५ म० १९।

हि हुस्ता वुसुना पृणस्वा प्रुयच्छ दुक्षिणादोत सव्व्याद्वि-ष्णवे त्त्वे'ति मेथीमुपनिहन्तीतरुतस्तुतो युदु च मानुपे तयद्वैष्णवैर्य्युजुर्भिरुपचुरन्ति वैष्णवह् हि हविर्द्धानम् ॥२२॥ अथ * मध्यमं छदिरुपस्पृश्य वाचयति। 'प्रतद्विष्णुस्तवते वीर्य्येण मृगो न भीमह् कुचरो गिरिष्ठाह्। युस्योरुपु त्रिपु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वे'तीदृह् हैं वाऽस्यै तुच्छीर्षकपालं युदिदुमुपरिष्टादुधीव ह्येतरिक्षयन्त्यन्यानि शीर्षकपालानि तुस्मादाहाऽधिक्षियन्तीति ॥ २३ ॥ अथ †रुराटद्यामुपस्पृश्य वाचयति। 'विष्णो रुराटमसी'ति ललाटह् हैवाऽस्यै तुदथोच्छ्राय्या ऽउपस्पृश्य वाचयति 'विष्णोह् श्नप्त्र स्थ' ऽइति सृके हैवाऽस्यैते ऽअथ युदिदुं पश्चाच्छदिर्भव-तीदृह् हैवाऽस्यै तुच्छीर्षकपालं युदिदुं पश्चात् ॥ २४ ॥ अथ लस्पूजन्या स्पन्द्यया प्रसीव्यति। 'विष्णोह् स्यूर-सी'त्युथ ग्रन्थिं करोति 'विष्णोर्द्ध्रुवोऽसी'ति नेद्व्यवपद्याता ऽइति तं प्रकृते कुर्म्मन्निव्यति तुथोहाऽद्ध्वर्युं वा युज-मानं वा ग्राहो न विन्दति तन्निष्ठितमभिमृशति वैष्णव-मसीति वैष्णवह् हि हविर्द्धानम् ॥ २५ ॥ (B)

पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

---

* का० श्रौ० सू० ८.४ १३।

† का० श्रौ० सू० ८.४.१३–२३।

(B) एतद्ब्राह्मणस्था विषया अन्यत्राप्युपलभ्यन्ते यथा—

का० सं० ६. २. ९; मै० सं० ३. ८. ५, काठ० सं० २५. ८, कपि० सं० ४ १।

( १ ) शु० सं० अ० ५ क० २०। ( २ ) शु० सं० अ० ५ २१। ( ३ ) शु० सं० अ० ५ क० २१। ( ४ ) शु० सं० अ० ५ क० २१।

[ *उपरवनिर्माणम् ]

इयं वा ऽअभ्युपरवाः† खायन्ते । शिरो वै यज्ञस्य हविर्द्धानं तस्य ऽइमे शीर्षण्ँयुपरवाः कूपा ऽइमावह द्वाविमौ द्वौ तानेवै तत्करोति तस्मादुपरवान्खनति ॥ १ ॥ देवाश्च वा ऽअसुराश्च । उभये प्राजापत्याः पस्पृधिरे । ततोऽसुरा ऽएषु लोकेषु कृत्यां वलगान्निचख्नुरुतैवाश्चिद्देवानभिभवेमेति ॥ २ ॥ तद्वै देवा ऽअस्पृण्वत । त ऽएतैः ‡कृत्यां वलगानुदखनन्यदा वै कृत्यामुत्खनन्त्यथ सालसा मोघा भवति तथो ऽएवैष ऽएतद्यद्यस्मा ऽअत्र कश्चिद्द्विषन् भ्रातृव्यः कृत्यां वलगान्निखनति तानेवैतदुत्किरति तस्मादुपरवान्खनति स दक्षिणस्य हविर्द्धानस्याऽधोऽधः प्र ऽउगं खनति ॥ ३ ॥ §सोऽभ्रिमादत्ते । 'देवस्य त्वा सवितुः प्रसवेऽश्विनो र्बाहुभ्यां पूष्णो हस्ताभ्यामाददे नार्यसी'ति समान ऽएतस्य यजुषो बन्धुर्योषा वा ऽएषा यदभ्रिस्तस्मादाह नार्यसीति ॥ ४ ॥ तान्प्रादेशमात्रं विना परिलिखति । 'इदमहᳮ रक्षसां ग्रीवा ऽअपि कृन्ता-

---

* उपरवा नाम कूपकाः, तेषामुपरि अधिषवणफलके निधीयेते तयोरुपरि अधिषवणचर्म, तत्र सोमोऽभिषूयते, तस्मिन्ग्रावभिर्हन्यमाने वादित्रोदरवत् सुषिरास्ते कूपा गम्भीरमुपरवन्ती त्युपरवा इत्यभिधीयन्ते इति याज्ञिकदेवः ।

† 'खायन्ते' इति 'च' पुस्तके ।

‡ कृत्यामिति, पराजयं प्राप्य पलायमानैरसुरैः इन्द्रादिवधार्थमभिचाररूपेण भूमौ निखाता अस्थि-केश-नखादिपदार्था कृत्याविशेषा वलगाः । वलगो वृणोते, इति यास्कः । ( १ २ )

§ का० श्रौ० सू० ८. ४ १६ ।

( १ ) शु० सं० अ० ५ क० २२ । ( २ ) शु० सं० अ० ५ क० २२ ।

भद्रमिति प्रत्याहाऽथ प्रोक्षत्येको वै प्रोक्षणस्य बन्धुर्मेध्यानेवैतत्करोति ॥ १७ ॥ स प्रोक्षति । 'रक्षोहणो वो वलगहन' ऽइति रक्षोहणो ह्येते वलगहनो ह्येते 'प्रोक्षामि वैष्णवानि'ति वैष्णवा ह्येते ॥ १८ ॥ अथ याः प्रोक्षण्यः परिशिष्यन्ते । ता ऽअवटेष्ववनयति तद्या ऽइमाः प्राणेष्वापस्ता ऽएवैतद्दधाति तस्मादेषु प्राणेष्विमा ऽआपः ॥ १९ ॥ सोऽवनयति 'रक्षोहणो वो वलगहनोऽवनयामि वैष्णवानि'त्यथ बर्हिꣳऽपि प्राचीनाग्राणि चोदीचीनाग्राणि चाऽवस्तृणाति तद्यानीमानी प्राणेषु लोमानि तान्येवै तद्दधाति तस्मादेषु प्राणेष्विमानि लोमानि ॥ २० ॥ सोऽवस्तृणाति । 'रक्षोहणो वो वलगहनोऽवस्तृणामि वैष्णवानि'त्यथ बर्हिꣳऽपि तनूनीवोपरिष्टात्प्रच्छादयति केशा हैवाऽस्यैते ॥ २१ ॥ अथाऽधिषवणे* फलके ऽउपदधाति । 'रक्षोहणौ वां वलगहना ऽउपदधामि वैष्णवी' ऽइति हनू हैवाऽस्यै ते ऽअथ पर्य्यूहति 'रक्षोहणौ वां वलगहनौ पर्य्यूहामि वैष्णवी' ऽइति दृढ्हयत्येवैने ऽएतदशिथिले करोति ॥ २२ ॥ अथाऽधिषवणं परिकृत्तं भवति । सर्वं रोहितं जिह्वा है वाऽस्यैषा तद्यत्सर्वरोहितं भवति लोहिनीव हीयं जिह्वा तन्निदधाति 'वैष्णवमसी'ति वैष्णवꣳ

(१) शु० सं० अ० ५ क० २५। (२) शु० सं० अ० ५ क० २५। (३) शु० सं० अ० ५ क० २५। (४) शु० सं० अ० ५ क० २५। (५) शु० सं० अ० ५ क० २५। (६) शु० सं० अ० ५ क० २५। (७) शु० सं० अ० ५ क० २५।

* का० श्रौ० सू० ८. ५. २२-२३। ययो. फलकयोरुपरि सोमोऽभिषूयते ते द्वे अधिषवणफलके इत्यर्थः ।

ह्येतत् ॥ २३ ॥ अथ ग्राव्ण उपाऽवहरति । दन्ता हैवाऽस्य ग्रावाणस्तद्यद् ग्रावभिरभिपुण्वन्ति यथा दद्भिः प्सायादेवं तत्तान्निदधाति 'वैष्णवा स्थे'ति वैष्णवा ह्येत ऽएतद् यज्ञस्य शिरः *सᳪंस्कृतम् ॥ २४ ॥(C)

पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति पञ्चमोऽध्यायः ॥ ५ ॥

[ सदस्यौदुम्बरीनिखननम् ]

†उदरमेवाऽस्य सदः । तस्मात्सदसि भक्षयन्ति यद्धीदं किञ्चाऽश्नन्त्युदर ऽएवैतत्सर्वं प्रतितिष्ठत्यथ यदस्मिन्विश्वे देवा ऽअसीदँस्तस्मात्सदो नाम त ऽउ ऽएवाऽस्मिन्नेते ब्राह्मणा विश्वगोत्राः सीदन्त्यैन्द्रं देवतया ॥१॥ तन्मध्यऽऔदुम्बरीं मिनोति । अन्नं वा ऽऊर्गुदुम्बर ऽउदरमेवाऽस्य सदस्तन्मध्यतोऽन्नाद्यं दधाति तस्मान्मध्य ऽऔदुम्बरीं मिनोति ॥२॥ अथ य ऽएष मध्यमः शङ्कुर्भवति । वेदेर्जघनार्द्धं तस्मात्प्राङ् प्रक्रामति षड्विक्रमान्दक्षिणा सप्तममुपक्रामति सम्पदः कामाय तदवटं परिलिखति ॥ ३ ॥ सोऽभ्रिमादत्ते । 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे नार्यसी'ति समान ऽएतस्य यजुषो

---

* 'क' पुस्तके 'संस्कृतम्' इति ।

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—
काण्वश॰ ४. ५. ४; का॰ सं॰ २५. ९; तै॰ सं॰ ६. २. १०-११; ।

† का॰ श्रौ॰ सू॰ ८. ६. १-६ ।

( १ ) शु॰ सं॰ अ॰ ५ क॰ २५ । ( २ ) शु॰ सं॰ अ॰ ५ क॰ २६ ।

मी'ति व्वज्रो वा ऽअग्निर्व्वज्रेणैवैतन्नाष्ट्राणाꣳ रक्षसां ग्रीवा ऽअपि कृन्तति ॥ ५ ॥ तद्यावेतौ पूर्व्वौ । तयोर्द्दक्षिणमेवाऽग्रे परिलिखेदथाऽपरयोरुत्तरमथाऽपरयोर्द्दक्षिणमथ पूर्व्वयोरुत्तरम् ॥ ६ ॥ अथो ऽइतरथाऽऽहुः । अपरयोरेवाऽग्र ऽउत्तरं परिलिखेदथ पूर्व्वयोर्द्दक्षिणमथाऽपरयोर्द्दक्षिणमथ पूर्व्वयोरुत्तरमित्यथो ऽअपि समीच ऽएव परिलिखेदेतन्न्वेवोत्तमं परिलिखेद्य ऽएष पूर्व्वयोरुत्तरो भवति ॥ ७ ॥ तान्यथाऽपरिलिखितमेव यथापूर्व्वं खनति । 'बृहन्नसि बृहद्द्रवा' ऽइत्युपस्तौत्येवैनानेतन्महयत्येव यदाह बृहन्नसि बृहद्द्रवा ऽइति 'बृहतीमिन्द्राय व्वाचं व्वदे'तीन्द्रो वै यज्ञस्य देवता व्वैष्णवꣳ हविर्द्धानं तत्सेन्द्रं करोति तस्मादाह बृहतीमिन्द्राय व्वाचं व्वदेति ॥ ८ ॥* 'रक्षोहणं व्वलगहनमि'ति । रक्षसाꣳ ह्येते व्वलगानां व्वधाय खायन्ते 'व्वैष्णवीमि'ति व्वैष्णवी हि हविर्द्धाने व्वाक् ॥९॥ तान्यथाखातमेवोत्किरति । 'इदमहं तं व्वलगमुत्किरामि यम्मे निष्ट्यो यममात्यो निचखाने'ति निष्ट्यो वा वा ऽअमात्यो वा कृत्यां व्वलगान्निखनति तानेवैतदुत्किरति ॥१०॥ 'इदमहं तं व्वलगमुत्किरामि । यम्मे समानो यमसमानो निचखाने'ति समानो वा वा ऽअसमानो वा कृत्यां व्वलगान्निखनति तानेवैतदुत्किरति ॥ ११ ॥

* का० श्रौ० सू० ८ ५ १-८ ।

(१) शु० सं० अ० ५ क० २२ । (२) शु० सं० अ० ५ क० २२ । (३) शु० सं० अ० ५
क० २२ । (४) शु० सं० अ० ५ क० २३ । (५) शु० सं० अ० ५ क० २३ । (६) शु० सं०
अ० ५ क० २३ ।

'इदमहं तं वलगमुत्किरामि । यम्मे सबन्धुर्य्यमसबन्धुर्न्निच-खाने'ति सबन्धुर्वा वा ऽअसबन्धुर्वा कृत्यां वलगान्निखनति तानेवैतदुत्किरति ॥ १२ ॥ 'इदमहं तं वलगमुत्किरामि यम्मे सजातो यमसजातो निचखाने'ति सजातो वा वा ऽअसजातो वा कृत्यां वलगान्निखनति तानेवैतदुत्किर'त्युत्कृत्यां कि-रामी'त्यन्तत ऽउद्वपति तत्कृत्यामुत्किरति ॥ १३ ॥ तान्वा-हुमात्रान्खनेत् । अन्तो वा ऽएषोऽन्तेनैवैतत्कृत्यां मोहयति तानक्षणया सन्तृन्दन्ति यद्यक्षणया न शक्नुयादपि समीचस्त-स्मादिमे प्राणाः परः सन्तृण्णाः ॥ १४ ॥ तान्यथा खात-मेवाऽवमर्शयति । * 'स्वराडसि सपत्नहा सत्रराडस्यभिमा-तिहा जनराडसि रक्षोहा सर्वराडस्य मित्रहे'त्याशीरेवैषैतस्य कर्म्मण ऽआशिषमेवैतदाशास्ते ॥ १५ ॥ अथाऽध्वर्युश्च यजमानश्च सम्मृशेते । पूर्वयोर्दक्षिणेऽध्वर्युर्भवत्यपरयो-रुत्तरे यजमानः सोऽध्वर्युः पृच्छति यजमान किमत्रेति भद्रमित्याह तन्नौ सहेत्युपाङ्श्वध्वर्युः ॥ १६ ॥ अथा-ऽपरयोर्दक्षिणेऽध्वर्युर्भवति । पूर्वयोरुत्तरे यजमानः स यजमानः पृच्छत्यध्वर्य्यो किमत्रेति भद्रमित्याह तन्म ऽइति यजमानस्तद्यदेवः सम्मृशेते प्राणानेवैतत्सयुजः कुरुत-स्तस्मादिमे प्राणाः परः संविदेऽथ यत्पृष्टो भद्रमिति प्रत्याह कल्याणमेवैतन्मानुष्यै वाचो वदति तस्मात्पृष्टो

* का० श्रौ० सू० ८ ५ १३ ।

( १ ) शु० स० अ० ५ क० २३ । ( २ ) शु० स० अ० ५ क० २३ । ( ३ ) शु० स० अ० ५ क० २३ । ( ४ ) शु० स० अ० ५ क० २४ ।

बन्धुर्य्योपो वा ऽएषा यदुद्भिस्तस्मादाह नार्य्यसीति ॥ ४ ॥ अथाऽवटं परिलिखति । 'इदमहᳫं रक्षसां ग्रीवा ऽअपि कृन्तामी'ति वज्रो वा ऽअभ्रिर्वज्रेणैवैतन्नाष्ट्राणाᳫं रक्षसां ग्रीवा ऽअपिकृन्तति ॥ ५ ॥ अथ खनति । प्राञ्चमुत्करमुत्किरति यजमानेन सम्मायौदुम्बरीं परिवासयति तामग्रेण प्राचीं निदधात्येतावन्मात्राणि बर्हीᳫंष्युपरिष्टादधि निदधाति ॥ ६ ॥ अथ यवमत्यः प्रोक्षण्यो भवन्ति । आपो ह वा ऽओषधीनाᳫं रसस्तस्माद्दोषधयः 'केवल्यः खादिता न धिन्वन्त्योषधय ऽउ हाऽपाᳫं रसस्तस्माद्धापः पीताः केवल्यो न धिन्वन्ति यदैवोभय्यः सᳫंसृष्टा भवन्त्यथैव धिन्वन्ति तर्हि हि सरसा भवन्ति सरसाभिः प्रोक्षाणीति ॥७॥ देवाश्च वा ऽअसुराश्च । उभये प्राजापत्याः पस्पृधिरे ततो देवेभ्यः सर्वा ऽएवौषधय ऽईयुर्य्यैवा हैवैभ्यो नेयुः ॥ ८ ॥ तद्वै देवा ऽअस्पृण्वत । त ऽएतैः सर्वाः सपत्नानामोषधीरयुवत यदयुवत तस्माद्यवा नाम ॥ ९ ॥ ते होचुः । हन्त यः सर्वासामोषधीनाᳫं रसस्तं यवेषु दधामेति स यः सर्वासामोषधीनाᳫं रस ऽआसीत्तं यवेष्वदधुस्तस्माद्यत्राऽन्या ऽओषधयो म्लायन्ति तदेते मोदमाना वर्द्धन्त ऽएवᳫं ह्येषु रसमदधुस्तथो ऽएवैष ऽएतैः सर्वाः सपत्नानामोषधीर्युते तस्माद्यवमत्यः प्रोक्षण्यो भवन्ति ॥ १० ॥ स * यवानावपति । 'यवोऽसि यव-

---

* का० श्रौ० सू० ६ २ १५ ।

( १ ) शु० य० सं० अ० ५ क० २६ । ( २ ) शु० सं० अ० ५ क० २६ ।

याऽस्मद्द्वेष्टो यश्च वयं द्विष्म इति यो यस्यास्मद्द्वेषो यश्चायाऽरातीरि॑ति नाऽत्र तिरोहित मिवाऽस्त्यथ प्रोक्षत्येको वै प्रोक्षणस्य बन्धुर्म्मेध्यामेवैतत्करोति ॥ ११ ॥ स *प्रोक्षति। 'दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वे'तीमानेवैतल्लोकानूर्ज्जा रसेन भाजयत्येषु लोकेषूर्ज्जः रसन्दधाति ॥ १२ ॥ अथ याः प्रोक्षण्यः †परिशिष्यन्ते। ता ऽअवटे ऽवनयति 'शुन्धन्ताँल्लोकाः पितृषदना' ऽइति पितृदेवत्यो वै कूपः खातस्तमेवैतन्मेध्यं करोति ॥ १३ ॥ ‡अथ बर्हीᳬष्यपि। प्राचीनाग्राणि चोदीचीनाग्राणि चाऽवस्तृणाति 'पितृषदनमसी'ति पितृदेवत्यं वा ऽअस्या ऽएतद्भवति यन्निखातः सा यथा निखातौषधिषु मिता स्यादेवमेतास्वोषधिषु मिता भवति ॥ १४ ॥ ‡‡ तामुच्छ्रयति। 'उद्दिवᳬं स्तभानाऽन्तरिक्षं पृण दृᳬहस्व पृथिव्यामि'ती-मानेवैतल्लोकानूर्ज्जा रसेन भाजयत्येषु लोकेषूर्ज्जः रसं दधाति ॥ १५ ॥ § अथ मिनोति। 'द्युतानस्त्वा मारुतो मिनोत्वि'ति यो वा ऽअयं पवत ऽएष द्युतानो मारुतस्तदेनामेतेन मिनोति 'मित्रावरुणौ ध्रुवेण धर्म्मणे'ति ॥ प्राणोदानौ वै

* का० श्रौ० सू० ६. २. १६।
† का० श्रौ० सू० ६. २. १७।
‡ का० श्रौ० सू० ६. २. १८।
‡‡ का० श्रौ० सू० ८. ५. २९।
§ का० श्रौ० सू० ८. ५ ३०।
‖ का० श्रौ० सू० ६. ३ ९–१०।

(१) शु० सं० अ० ५ क० २६। (२) शु० सं० १० अ० ५ क० २६। (३) शु० सं० अ० ५ क० २६। (४) शु० सं० अ० ५ क० २७। (५) शु० सं० अ० ५ क० २७। (६) शु० सं० अ० ५ क० २७।

मित्रावरुणौ तदेनां प्राणोदानाभ्यां मिनोति ॥ १६ ॥ *अथ पर्य्यूहति । 'ब्रह्मवनि त्वा क्षत्रवनि रायस्पोषवनि पर्य्यूहामी'[1]ति वही वै यजुष्वाशीस्तद् ब्रह्म च क्षत्रं चाऽऽशास्त ऽउभे वीर्य्ये रायस्पोषवनीति भूमा वै रायस्पोषस्तद्भूमानमाशास्ते ॥ १७ ॥ अथ †पर्य्यूपति । 'ब्रह्म दृꣳह क्षत्रं दृꣳहाऽऽयुर्द्दꣳह प्रजां दृꣳहे'[2]त्याशीरेवैषैतस्य कर्म्मण ऽआशिषमेवैतदाशास्ते समम्भूमि पर्य्यर्पणं करोति गर्त्तस्य वा ऽउपरि भूम्यथैवं देवत्रा तथा ह्यऽगर्त्तमिद्भवति ॥ १८ ॥ अथाऽप ‡ऽउपनिनयति । यत्र वा ऽअस्यै खनन्तः क्रूरी कुर्वन्त्यपघ्नन्ति शान्तिरापस्तदद्भिः शान्त्या शमयति तदद्भिः सन्दधाति तस्मादप ऽउपनिनयति ॥ १९ ॥ ‡‡अथैवमभिपद्य वाचयति । 'ध्रुवाऽसि ध्रुवोऽयं यजमानोऽस्मिन्नायतने प्रजया भूयादि'[3]ति 'पशुभिरि'[4]ति वैवं यं कामं कामयते सोऽस्मै कामः समृध्यते ॥ २० ॥ अथ स्रुवेणोपहत्याऽऽज्यम् । §विष्टपमभि जुहोति 'घृतेन द्यावापृथिवी पूर्य्येथामि'[5]ति तदिमे द्यावापृथिवी ऽऊर्ज्जा रसेन भाजयत्यनयोरूर्ज्जः रसं दधाति ते रसवत्या ऽउपजीवनीये ऽइमाः प्रजा ऽउप-

---

* का० श्रौ० सू० ६ ३ ११ ।

† ऐ० ब्रा० ४. २ ४. द्रष्टव्यम् ।

‡ का० श्रौ० सू० ६. ३ १२ ।

‡‡ का० श्रौ० सू० ८. ५ ३१ ।

§ का० श्रौ० सू० ८. ५. ३२ । विटप-विशाखम् 'अभि' विटपस्याऽग्रभागस्येत्यर्थः ।

(१) शु० सं० अ० ५ क० २७ । (२) शु० सं० अ० ५ क० २७ । (३) शु० सं० अ० ५ क० २८ । (४) शु० सं० अ० ५ क० २८ । (५) शु०सं० अ० ५ क० २८ ।

जीवन्ति ॥ २१ ॥ * अथ छदिरधि निदधाति । 'इन्द्रस्य च्छदिरसी'त्यैन्द्रꣳ हि सदो 'विश्वजनस्य च्छाये'ति विश्वगोत्रा ह्यस्मिन्ब्राह्मणा ऽआसते तदुभयतश्छदिषी ऽउपदधात्युत्तरतस्त्रीणि परस्त्रीणि तानि † नव भवन्ति त्रिवृद्वै यज्ञो नव वै त्रिवृत्तस्मान्नव भवन्ति ॥ २२ ॥ तदुदीचीनवꣳशꣳ ‡ सदो भवति । प्राचीनवꣳशꣳ हविर्धानमेतद्धै देवानां निष्केवल्यं यद्धविर्धानं तस्मात्तत्रनाऽश्नन्ति न भक्षयन्ति निष्केवल्यꣳ ह्येतद्देवानाꣳ स यो ह तत्राऽश्नीयाद्वा भक्षयेद्वा मूर्धा हाऽस्य विपतेदथैते मिश्रे यदाग्नीध्रं च सदश्च तस्मात्तयोरश्नन्ति तस्माद्भक्षयन्ति मिश्रे ह्येते ऽउदीची वै मनुष्याणां दिक्तस्मादुदीचीनवꣳशꣳ सदो भवति ॥ २३ ॥ ‡‡ तत्परिश्रयन्ति । 'परित्वा गिर्वणो गिर ऽइमा भवन्तु विश्वतः । वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टय' ऽइतीन्द्रो वै गिर्वा विशो गिरो विशैवैतत्क्षत्रं 'परिवृढ'मिति तदिदं क्षत्रमुभयतो विशा § परिवृढम् ॥ २४ ॥ अथ लरज्जुना स्यूत्या प्रसीव्यति । 'इन्द्रस्य स्यूरसी'त्यथ ग्रन्थिं करोती'न्द्रस्य ध्रुवोऽसीति नेद्व्यवपद्याता ऽइति प्रकृते

(१) शु० सं० अ० ५ क० २८ । (२) शु० सं० अ० ५ क० २८ । (३) शु० सं० अ० ५ क० २९ । (४) शु० सं० अ० ५ क० ३० । (५) शु० सं० अ० ५ क० ३० ।

* का० श्रौ० सू० ८ ६. ७ ।

† म्रा० ता० ( ३ १. ) अत्र नवत्वसम्पादनात् ।

‡ यागेऽस्मिन् सदोऽभिधानो मण्डपोऽष्टादशारत्निदीर्घो नवारत्निविस्तृतो दीर्घचतुरस्र उदग्वंशो (का० श्रौ० सू० ८. ६. १-६) विहित, तत्रापि उदीचीवेन व्यवहर्तव्या । मण्डपस्याऽस्य दैर्घ्य विस्तारे चाऽन्येऽपि कल्पा सन्ति ते तत एवाऽवगन्तव्या । ( शु० सू० १. २१. २२ )

‡‡ का० श्रौ० सू० ८. ६. ९-१० ।

§ 'ग' पुस्तके 'परिवृद्धं' इति ।

कुर्म्मेद्विष्यति तथो हाऽध्वर्य्युं वा यजमानं वा ग्राहो न विन्दति तन्निष्ठितमभिमृश'त्यैन्द्रमसी'त्यैन्द्रं हि सदः ॥२५॥ अथ * हविर्द्धानयोः । जघनार्द्धं समन्वीक्ष्योत्तरेणाऽऽग्नीध्रं मिनोति तस्याऽर्द्धमन्तर्वेदि स्यादर्द्धं वहिर्वेद्यथो ऽअपि भूयो-ऽर्द्धादन्तर्वेदि स्यात्कनीयो वहिर्वेद्यथो ऽअपि सर्वमेवाऽन्तर्वेदि स्यात्तन्निष्ठितमभिमृशति † 'वैश्वदेवमसी'ति द्वयेनैतद्वैश्वदेवं यदस्मिन्पूर्वेद्युर्विश्वे देवा ‡ वसतीवरीपूपवसन्ति तेन वैश्वदेवम् ॥ २६ ॥ देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्य ऽआसङ्गाद्बिभयाञ्चक्रुस्तान्दक्षिणतोऽसुररक्षसान्यासेदुस्तान्सदसो जिग्युस्तेषामेतान्धिष्ण्यानुद्वापयाञ्चक्रुर्य्य-ऽएतेऽन्तः सदसः ॥२७॥ सर्वे ह स्म वा ऽएते पुरा ज्वलन्ति। यथाऽयमाहवनीयो यथा गार्हपत्यो यथाऽऽग्नीध्रीयस्तद्यत-ऽएनानुदुवापयँस्तत ऽएवैतन्न ज्वलन्ति तानाग्नीध्रमभिसंरुरुधुस्तानप्यर्द्धमाग्नीध्रस्य जिग्युस्ततो विश्वेदेवा ऽअमृतत्वमपाऽजयँस्तस्माद्वैश्वदेवम् ॥ २८ ॥ तान्देवाः प्रतिसमैन्धत । यथा प्रत्यवस्येत्तस्मादेनान्त्सवने सवन ऽएव प्रतिसमिन्धते तस्माद्यः समृद्धः स ऽआग्नीध्रं कुर्य्याद्यो वै ज्ञातोऽनूचानः स समृद्धस्तस्मादग्नीधे प्रथमाय दक्षिणां नयन्त्यतो हि विश्वे देवा ऽअमृतत्वमपाऽजयँस्तस्माद्यं दीक्षितानामवल्ल्यं विन्देदाग्नीध्रमेनं नयतेति ब्रूयात्तदनार्त्तं

* का० श्रौ० सू० ८ ६. १० ।

† का० श्रौ० सू० ८ ६. ११ ।

‡ सोमाभिषवार्था आपो 'वसतीवर्य' इत्युच्यन्ते ।

( १ ) शु० सं० अ० ५ क० ३० । ( २ ) शु० सं० अ० ५ क० ३० ।

तन्नाऽरिष्यतीति तद्यदतो विश्वे देवा ऽअमृतत्वमपाऽजयँस्त-स्माद्वैश्वदेवम् ॥ २९ ॥(A)

पष्ठाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥ ४ ॥

कण्डिकासंख्या ॥ १३२ ॥

[ धिष्ण्यनिवापादि ]

विजामानोहैवाऽस्य धिष्ण्याः । इमे समङ्का ये वै समङ्कास्ते विजामान ऽएत ऽउहैवाऽस्यैत ऽआत्मनः ॥ १ ॥ दिवि वै सोम ऽआसीत् । अथेह देवास्ते देवा ऽअकामयन्ता नः सोमो गच्छेत्तेनाऽऽगतेन यजेमहीति त ऽएते माये ऽअसृजन्त सुपर्णीञ्च कद्रूञ्च वागेव सुपर्णीयं कद्रूस्ताभ्याछं समदञ्चक्रुः ॥ २ ॥ ते हर्त्तीयमाने ऽऊचतुः । यतरा नौ दवीयः परापश्यादात्मानं नौ सा जयादिति तथेति सा ह कद्रूरुवाच परेक्षस्वेति ॥ ३ ॥ सा ह सुपर्ण्युवाच । अस्य सलिलस्य पारेऽश्वः श्वेतस्स्थाणौ सेवते तमहं पश्यामीति तमेव त्वं पश्यसीति तं हीत्यथ ह कद्रूरुवाच तस्य वालो न्यषञ्जि तममुं वातो धूनोति तमहं पश्यामीति ॥ ४ ॥ सा यत्सुपर्ण्युवाच । अस्य सलिलस्य पार ऽइति वेदिर्वै सलिलं वेदिमेव सा तदुवाचाऽश्वः श्वेतस्स्थाणौ

(A) एतद्ब्राह्मणस्था त्रिष्टुप् अन्यत्राऽप्युपलभ्यन्ते यथा—

तै० सं० ६. २ १०, का० सं० ४. ६ १, मैं० सं० ३ ८ ९, ।

सेवत ऽइत्यग्निर्वा ऽअश्वः श्वेतो यूप स्थाणुरथ यत्कद्रूरुवाच तस्य वालो न्यपक्षि तमसुं वातो धूनोति तमहं पश्यामीति रशना हैव सा ॥ ५ ॥ सा ह सुपर्ण्युवाच । एहीदं पताव वेदितुं यतरा नौ जयतीति सा ह कद्रूरुवाच त्वमेव पत त्वं वै न ऽआख्यास्यसि यतरा नौ जयतीति ॥ ६ ॥ सा ह सुपर्णी पपात । तद्ध तथैवाऽऽस यथा कद्रूरुवाच तामागतामभ्युवाद त्वमजैषीरहा३मिति त्वमिति होवाचैतद्वयाख्यानं सौपर्णीकाद्रवमिति ॥ ७ ॥ सा ह कद्रूरुवाच । आत्मानं वै त्वाऽजैषं दिव्यसौ सोमस्तं देवेभ्य ऽआहर तेन देवेभ्य ऽआत्मानं निष्क्रीणीष्वेति तथेति सा छन्दाꣳसि ससृजे सा गायत्री दिवः सोममाहरत् ॥ ८ ॥ हिरण्मय्योर्ह कुश्योरन्तरवहित ऽआस । ते ह स्म क्षुरपवी निमेषं निमेषमभिसन्धत्तो दीक्षातपसौ हैव ते ऽआसतुस्तमेते, गन्धर्वाः सोमरक्षा जुगुपुरिमे धिष्ण्या ऽइमा होत्राः ॥ ९ ॥ तयोरन्यतरां कुशीमाचिच्छेद । तान्देवेभ्यः प्रददौ सा दीक्षा तया देवा ऽअदीक्षन्त ॥ १० ॥ अथ द्वितीयां कुशीमाचिच्छेद । तान्देवेभ्यः प्रददौ तत्तपस्तया देवास्तप ऽउपाऽयन्नुपसदस्तपो ह्युपसदः ॥ ११ ॥ खदिरेण ह सोममाचखाद । तस्मात् खदिरो यदेनेनाऽखिदत्तस्मात्खादिरो यूपो भवति खादिर स्फ्योऽच्छावाकस्य हैनं गोपनायां जहार सोऽच्छावाकोऽहीयत ॥ १२ ॥ तमिन्द्राग्नी ऽअनु समतनुताम् । प्रजानां प्रजात्यै तस्मादैन्द्राग्नोऽच्छावाकः ॥ १३ ॥ तस्माद्दी-

क्षिता राजानं गोपायन्ति । नेन्नोऽपहरानिति तस्मात्तत्र सुगुप्तं चिकीर्षेद्यस्य ह गोपनायामपहरन्ति हीयते ह ॥१४॥ तस्माद् ब्रह्मचारिण ऽआचार्यं गोपायन्ति। गृहान्पशून्नेन्नोऽपहरानिति तस्मात्तत्र सुगुप्तं चिकीर्षेद्यस्य ह गोपनायामपहरन्ति हीयते ह तेनैतेन सुपर्ण्णी देवेभ्य ऽआत्मानं निरक्रीणीत तस्मादाहुः पुण्यलोक ऽईजान ऽइति ॥ १५ ॥ ऋणᳪ ह वै पुरुषो जायमान ऽएव । मृत्योरात्मना जायते स यद्यजते यथैव तत्सुपर्ण्णी देवेभ्य ऽआत्मानं निरक्रीणीतैवमेवैष ऽएतन्मृत्यो रात्मानं निष्क्रीणीते ॥ १६ ॥ तेन देवा ऽअयजन्त । तमेते गन्धर्व्वाः सोमरक्षा ऽअन्वाजग्मुस्तेऽन्वागत्याऽब्रुवन्ननु नो यज्ञ ऽआभजत मा नो यज्ञादन्तर्गातास्त्वेव नोऽपि यज्ञेभाग ऽइति॥१७॥ ते होचुः। किं नस्ततः स्यादिति यथैवाऽस्याऽमुत्र गोप्तारोऽभूमैव मेवाऽस्याऽपीह गोप्तारो भविष्याम ऽइति ॥ १८ ॥ तथेति देवा ऽअब्रुवन् । सोमक्रयणा व ऽइति तानेभ्य ऽएतत्सोमक्रयणाननुदिशत्यथैनानब्रुवँस्तृतीयसवने वो घृताहुतिः प्राप्स्यति न सौम्याऽपहृतो हि युष्मत्सोमपीथस्तेन सोमाहुतिं नाऽर्हथेति सैनानेषा तृतीयसवन ऽएव घृताहुतिः प्राप्नोति न सौम्या यच्छालाकैर्द्धिष्ण्यान्व्याघारयति ॥ १९ ॥ अथ यदग्नौ होष्यन्ति । तद्वोऽविष्यतीति स यदग्नौ जुहोति तदेनानवत्यथ यद्वः सोमं बिभ्रतऽउपर्य्युपरि चरिष्यन्ति तद्वोऽविष्यतीति स यदेनान्त्सोमं बिभ्रत ऽउपर्य्युपरि चरन्ति तदेनानवति तस्मादध्वर्युः

समया धिष्ण्यान्नाऽतीयादङ्गारुर्युर्हि सोमं विभर्त्ति तमेते ऽव्यात्तेन प्रत्यासते स ऽएतेषां ऽव्यात्तमापद्येत तमग्निर्वा ऽभिदुहेद्यो वाऽयं देवः पशूनामीष्टे स वा हैनमभिमन्येत तस्माद्यद्यङ्गारुर्योः शालायामर्थः स्यादुत्तरेणैवाऽग्नीध्रीयः सञ्चरेत् ॥ २० ॥ तेवा ऽएते । सोमस्यैव गुप्त्यै न्युप्यन्त ऽआहवनीयः पुरस्तान्मार्जालीयो *दक्षिणत ऽआग्नीध्रीय ऽउत्तरतोऽथ ये सदसि ते पश्चात् ॥ २१ ॥ तेषां वा ऽअर्द्धानुपकिरन्ति । अर्द्धाननुदिशन्त्येत ऽउहैव तद्द्धिरे ऽद्धान्न ऽउपकिरन्त्वर्द्धाननुदिशन्तु तथा यस्माल्लोकादागता स्मो दिवस्तथा तँल्लोकं प्रतिप्रज्ञास्यामस्तथा न जिह्मा ऽएष्याम ऽइति ॥२२॥ स यानुपकिरन्ति । तेनाऽस्मिँल्लोके प्रत्यक्षं भवन्त्यथ याननुदिशन्ति तेनाऽमुष्मिँल्लोके प्रत्यक्षं भवन्ति ॥ २३ ॥ ते वै †द्विनामानो भवन्ति । एत ऽउहैव तद्द्धिरे न वा ऽएभिर्नामभिरराल्स्म येषां नः सोमम पाऽहार्षुर्हन्त द्वितीयानि नामानि करवामहा ऽइति ते द्वितीयानि नामान्यकुर्वत तैरराध्नुवन्यानपहृतसोमपीथा न्त्सतोऽथ यज्ञ ऽआभजस्तँस्माद् द्विनामानस्तस्माद्ब्राह्मणोऽ नृध्यमाने द्वितीयं नाम कुर्वीत राध्नोति हैव य ऽएवं विद्वान्द्वितीयं नाम कुरुते ॥२४॥ स यदग्नौ जुहोति । तद्देवेषु जुहोति तस्माद्देवाः सन्त्यथ यत्सदसि भक्षयन्ति तन्मनुष्येषु जुहोति तस्मान्मनुष्याः सन्त्यथ यद्धविर्द्धानयोर्नाराशंस

* का० श्रौ० सू० ७ १ ६ ।
† का० श्रौ० सू० ८. ६ २१-२३ ।

साः सीदन्ति तत्पितृषु जुहोति तस्मात्पितरः सन्ति ॥२५॥ या वै प्रजा यज्ञेऽनन्वाभक्ताः । पराभूता वै ता ऽएवमेवैतद्या ऽइमाः प्रजा ऽअपरा भूतास्ता यज्ञ ऽआभजति मनुष्याननु पशवो देवाननु वयाᳬसयोषधयो वनस्पतयो यदिदं किञ्चैवमु तत्सर्वं यज्ञ ऽआभक्तं ते ह स्मैत ऽउभये देवमनुष्याः पितरः सम्पिबन्ते सैषा सम्पाते ह स्म दृश्यमाना ऽएव पुरा सम्पिबन्त ऽउतैतर्ह्यदृश्यमानाः ॥ २६ ॥ (B)

षष्ठाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ वैसर्जनहोमः ]

सर्वं वा ऽएषोऽभि दीक्षते । यो दीक्षते यज्ञः ह्यभि दीक्षते यज्ञᳬ ह्येवेदᳬ सर्वमनु तं यज्ञᳬ सम्भृत्य यमिममभि दीक्षते सर्वमिदं विसृजते ॥ १ ॥ यद्वैसर्जिनानि जुहोति । स यदिदᳬ सर्वं विसृजते तस्माद्वैसर्जिनानि नाम तस्माद्यो-*ऽपिव्रतः स्यात्सोऽन्वारभेत यद्यु ऽअन्यत्र चरेन्ना-ऽऽद्रियेत यद्वै जुहोति तदेवेदᳬ सर्वं विसृजते ॥ २ ॥ यद्वेव वैसर्जिनानि जुहोति । यज्ञो वै विष्णुः स देवेभ्य ऽइमां विक्रान्तिं विचक्रमे यैषामियं विक्रान्तिरिदमेव प्रथमेन पदेन पस्पाराऽथेदमन्तरिक्षं द्वितीयेन दिवमुत्तमेनैतामेवैष-

(B) एतद्ब्राह्मणगतविषया अन्यत्राऽप्युपलभ्यन्ते यथा—
तै० सं० ६. ३. १, मै० सं० ३. ८. १०, शा० ब्रा० ४. ६. २, ।

* 'अपिव्रताश्चाऽन्वारभन्ते यजमानम्' का० श्रौ० सू० ८. ६. १४, 'स अपिव्रतान् द्वयग्र-मिति सम्प्रेष्यति' आप० श्रौ० सू० ११. १६. १२, ।

ऽएतस्मै विष्णुर्यज्ञो विक्रान्तिं विक्रमते यज्जुहोति तस्मा-द्वैसर्जिनानि जुहोति ॥ ३ ॥ *सोऽपराह्णे वेदिस्थं स्तीर्त्वा । अर्द्धव्रतं प्रदाय सम्प्रपद्यन्त ऽइध्ममभ्यादधत्युपयमनीरुप-कल्पयन्त्याज्यमधिश्रयति स्रुचः सम्माष्टर्युपस्थे राजानं यजमानः कुरुतेऽथ सोमक्रयण्यै पदं जघनेन गार्हपत्यं परिकिरति पदा वै प्रतितिष्ठति प्रतिष्ठित्या ऽएव ॥ ४ ॥ तद्धैके । चतुर्द्धा कुर्वन्ति यत्राऽऽहवनीयमुद्धरन्ति तासूपय-मनीषु चतुर्भागमक्षं चतुर्भागेणोपाऽञ्जन्त्येतासूपयमनीषु चतुर्भागं जघनेन गार्हपत्यं चतुर्भागं परिकिरति ॥ ५ ॥ तदु तथा न कुर्यात् । सार्द्धमेव परिकिरेज्जघनेन गार्हपत्यमथोत्पूयाऽऽज्यं चतुर्गृहीते जुह्वां चोपभृति च गृह्णाति पञ्चगृहीतं † पृषदाज्यं ‘ज्योतिरसि विश्वरूपं विश्वेषां देवानाथं समिदि’ति वैश्वदेवथंहि पृषदाज्यं धार-यन्ति स्रुचो यदा प्रदीप्त ऽइध्मो भवति ॥ ६ ॥ ‡ अथ जुहोति । त्वᳫं सोम तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्य ऽउरु यन्तासि वरूथᳫं स्वाहे’ति तदेतेनैवाऽस्यां पृथिव्यां प्रतिष्ठायां प्रतितिष्ठत्येतेनेमं लोकᳫं स्पृणुते ॥ ७ ॥ अथाऽऽस्तवे ‡‡ द्वितीयामाहुतिं जुहोति । ‘जुषाणो ऽअप्तुरा-

* का० श्रौ० सू० ८. ६ २०—२१ ।

† का० श्रौ० सू० ८. ७ १ ।

‡ का० श्रौ० सू० ८ ७ २ ।

‡‡ का० श्रौ० सू० ८ ७ ३,४ ।

( १ ) शु० स० अ० ५ क० १२ । ( २ ) शु० स० अ० ५ क० १२ । ( ३ ) शु० स० अ० ५ क० १२ ।

ज्यस्य वेतु स्वाहे॑त्येष ऽउ हैवैतदुवाच रक्षोभ्यो वै बिभेमि यथा माऽन्तरा नाष्ट्रा रक्षाᳬसि न हिनसन्नेवं मा कनीयाᳬसमेव वधात्कृत्वाऽतिनयत स्तोकमेव स्तोको ह्यसुरिति ततमेत्कनीयाᳬसमेव वधात्कृत्वाऽत्यनयन्स्तोकमेव स्तोको ह्यसू रक्षोभ्यो भीषा तस्मादत्रवे द्वितीयामाहुतिं जुहोति ॥ ८ ॥ उयच्छन्तीध्मम् । उपयच्छन्त्युपयमनीरथाऽऽहाऽग्नये * प्रहियमाणायाऽनुब्रूहि सोमाय प्रणीयमानायेति वाऽग्नये प्रहियमाणायाऽनुब्रूहीति त्वेव ब्रूयात् ॥ ९ ॥ आददते † ग्रावणः । द्रोणकलशं वायव्यानीध्मं ‡कार्ष्मर्यमयान्परिधीनाश्ववालं प्रस्तरमैक्षव्यौ विधृती तद्बर्हिरुपसन्नद्धं भवति वपाश्रपण्यौ रशने ऽअरणीऽअधिमन्थनः शकलो वृषणौ तत्समादाय प्राञ्च ऽआयन्ति स ऽएष ऽऊर्द्ध्वो यज्ञ ऽएति ॥१०॥ तदायत्सु ‡‡वाचयति। '(१)अग्ने नय सुपथा राये ऽअस्मान्विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नम ऽउक्तिं विधेमे'त्यग्निमेवैतत्पुरस्तात्करोत्यग्निः पुरस्तान्नाष्ट्रा रक्षाᳬस्यपघ्नन्नेत्यथाऽभयेनाऽनाष्ट्रेण हरन्ति त ऽआयन्त्यागच्छन्त्याग्नीध्रं तमाग्नीध्रे निदधाति ॥११॥ स § निहिते जुहोति।

---

* का० श्रौ० सू० ८. ७. ३–६ ।

† का० श्रौ० सू० ८. ७. ५ । द्रोणकलशः सोमाधारभूतः प्रभूतपात्रविशेषः, यस्योपरि धारामहा गृह्यन्ते ।

‡ का० श्रौ० सू० ८. १. १२ ।

‡‡ का० श्रौ० सू० ८. ७. ६ ।

( १ ) शु० सं० अ० ५ क० ३६ ।

§ का० श्रौ० सू० ८. ७. ९ ।

'अयं नो ऽअग्निर्वरिवस्कृणोत्वयम्मृधः पुर ऽएतु प्रभिन्दन्। अयं वाजाञ्जयतु वाजसातावयः शत्रूञ्जयतु जर्हृषाणः स्वाहे'ति तदेतेनैवैतस्मिन्नन्तरिक्षे प्रतिष्ठायां प्रतितिष्ठत्येतेनैतँल्लोकꣳ स्पृणुते ॥१२॥ तदेव निदधाति ग्राव्णः। द्रोणकलशं वायव्यान्यथेतरमादायाऽऽयन्ति तदुत्तरेणाऽऽहवनीयमुपसादयन्ति ॥१३॥ प्रोक्षणीरध्वर्युरादत्ते। स ऽइध्ममेवाऽग्रे प्रोक्षत्यथ वेदिमथाऽस्मै बर्हिः प्रयच्छन्ति तत्पुरस्ताद्ग्रन्थ्यासादयति तत्प्रोक्ष्योपनिनीय विस्रꣳस्य ग्रन्थिमाश्ववालः प्रस्तर ऽउपसन्नद्धो भवति तं गृह्णाति गृहीत्वा प्रस्तरमेकवृद्बर्हिः स्तृणाति स्तीर्त्वा बर्हिः कार्ष्मर्य्यमयान्परिधीन्परिदधाति परिधाय परिधीन्त्समिधावभ्यादधात्यभ्याधाय समिधौ ॥ १४ ॥ * अथ जुहोति। 'उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि। घृतं घृतयोने पिब प्र-प्रयज्ञपतिं तिर स्वाहे'ति तदेतेनैवैतस्यां दिवि प्रतिष्ठायां प्रतितिष्ठत्येतेनैतँल्लोकꣳ स्पृणुते यदेतया जुहोति ॥ १५ ॥ यद्वेव वैष्णव्यर्चा जुहोति। कनीयाꣳसं वा ऽएनमेतद्धारकृत्वाऽत्यनैपुस्तोकमेव स्तोको ह्यसुस्तमेतदुभयं प्राप्य य ऽएवैष तं करोति यज्ञमेव यज्ञो हि विष्णुस्तस्माद्वैष्णव्यर्चा जुहोति ॥ १६ ॥ अथाऽऽसाद्य स्रुचः। अप ऽउपस्पृश्य राजानं प्रपादयति तद्यदासाद्य स्रुचोऽप ऽउपस्पृश्य राजानं प्रपादयति वज्रो वा ऽआज्यः रेतः सोमो नेद्वज्रेणाऽऽज्येन

---

* का० श्रौ० सू० ८ ७ १४।

(१) शु० सं० अ० ५ क० ३७। (२) शु० सं० अ० ५ क० ३८।

रेतः सोमः हिनसानीति तस्मादासाद्य स्रुचोऽप ऽउपस्पृश्य राजानं प्रपादयति ॥ १७ ॥ स दक्षिणस्य हविर्द्धानस्य नीडे कृष्णाजिनमास्तृणाति । तदेनमासादयति 'देव सवितरेष ते सोमस्तꣳ रक्षस्व मा त्वा दभन्नि'ति तदेनं देवायैव सवित्रे परिददाति गुप्त्यै ॥ १८ ॥ * अथाऽनुसृज्योपतिष्ठते । 'एतत्त्वं देव सोम देवो देवाँ२ ऽउपागा ऽइदमहम्मनुष्यान्त्सह रायस्पोषेणे'त्यग्नीषोमौ वाऽएतमन्तर्जम्भ ऽआदधाते यो दीक्षत ऽआग्नावैष्णवꣳ ह्यदो दीक्षणीयꣳ हविर्भवति यो वै विष्णुः सोमः स हविर्वाऽएष देवानां भवति यो दीक्षते तदेनमन्तर्जम्भ ऽआदधाते तत्प्रत्यक्षꣳ सोमान्निर्मुच्यते यदाहैतत्त्वं देव सोम देवो देवाँ२ ऽउपागा ऽइदमहम्मनुष्यान्त्सह रायस्पोषेणेति भूमा वै रायस्पोषः सह भूम्नेत्येवैतदाह ॥ १९ ॥ † अथोपनिष्क्रामति । 'स्वाहा निर्वरुणस्य पाशान्मुच्य' ऽइति वरुणपाशे वा ऽएषोऽन्तर्भवति योऽस्यस्याऽसँस्तत्प्रत्यक्षं वरुणपाशान्निर्मुच्यते यदाह स्वाहा निर्वरुणस्य पाशान्मुच्यऽइति ॥२०॥ अथैत्याहवनीये समिधमभ्यादधाति । 'अग्ने व्रतपास्त्वे व्रतपा' ऽइत्यग्निर्हि देवानां व्रतपतिस्तस्मादाहाऽग्ने व्रतपास्त्वे व्रतपा ऽइति 'या तव तनूर्म्मय्यभूदेषा सा त्वयि यो मम तनूस्त्वय्यभूदियꣳ सा मयि । यथायथं नौ व्रतपते

* का॰ श्रौ॰ सू॰ ८ ७ १७।

† का॰ श्रौ॰ सू॰ ८ ७ १८।

(१) शु॰ य॰ अ॰ ५ क॰ ३९। (२) शु॰ य॰ अ॰ ५ क॰ ३९। (३) शु॰ य॰ अ॰ ५ क॰ ३९। (४) शु॰ य॰ अ॰ ५ क॰ ४०। (५) शु॰ य॰ अ॰ ५ क॰ ४०।

व्रतान्यनु मे दीक्षां दीक्षापतिरमꣳस्ताऽनु तपस्तपस्पति-रि॑ति तत्प्रत्यक्षमग्नेर्व्रिमुच्यते स स्वेन सताऽऽत्मना यजते तस्मादस्याऽत्राऽश्नन्ति मानुषो हि भवति तस्माद-स्याऽत्र नाम गृह्णन्ति मानुषो हि भवत्यथ यत्पुरा ना-ऽश्नन्ति यथा *हविषोऽहुतस्य नाऽश्नीयादेवं तत्तस्माद्दीक्षि-तस्य नाऽश्नीयादथाऽत्राऽङ्गुलीर्विसृजते ॥ २१ ॥ (c)

षष्ठाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ अथाऽग्नीषोमीयपशुप्रयोगः ]

( तत्र यूपच्छेदनम् )

यूपं व्रक्ष्यन्वैष्णव्यर्चा जुहोति । वैष्णवो हि यूप-स्तस्माद्वैष्णव्यर्चा जुहोति ॥ १ ॥ यद्वेव वैष्णव्या जुहोति यज्ञो वै विष्णुर्यज्ञेनैवैतद्यूपमच्छैति तस्माद्वैष्ण-व्यर्चा जुहोति ॥ २ ॥ स यदि स्रुचा जुहोति । † चतु-र्गृहीतमाज्यं गृहीत्वा जुहोति यद्यु स्रुवेण स्रुवेणैवोपहत्य जुहो॑त्युरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि । घृतं घृत-योने पिब प्र-प्र यज्ञपतिं तिर स्वाहे॑ति ॥ ३ ॥ यदाज्यं परिशिष्टं भवति । तदादत्ते यत्तक्ष्णः शस्त्रं भवति तत्त-क्षादत्ते त ऽआयन्ति स यं यूपं जोषयन्ते ॥ ४ ॥ तमेवम-

* ऐ० ब्रा० २ १ ३ द्रष्टव्यम् ।

(c) एतद्ब्राह्मणगतविषया अन्यत्राऽप्युपलभ्यन्ते यथा—
कपि० स० ४०, ६ शा० ब्रा० ९ १, का० श्रौ० ४ ६, ३, क० स० २६, २, मै० स० ३, ९ १ ऐ० ब्रा० १ २८ ।

† का० श्रौ० सू० ६ १ ४ ।

(१) शु० स० अ० ५ क० ४१ ।

भिमृश्य जपति। पश्चाद्वेव प्राङ् तिष्ठन्न * भिमन्त्रयते'ऽत्यं-न्याँ२ ऽअगान्नान्याँ२ ऽउपागामि'त्युति ह्यन्यानेति ना-ऽन्यानुपैति तस्मादाहाऽत्यन्याँ२ ऽअगान्नान्याँ२ ऽउपा-गामिति ॥ ५ ॥ 'अर्वाक् त्वा परेभ्योऽविदं परोऽवरेभ्य'-ऽइति। अर्वाग्घ्येनं परेभ्यो वृश्चति य ऽएतस्मात्पराञ्चो भवन्ति परोऽवरेभ्य ऽइति परो ह्येनमवरेभ्यो वृश्चति य-ऽएतस्मादर्वाञ्चो भवन्ति तस्मादाहाऽर्वाक्त्वा परेभ्योऽविदं परोऽवरेभ्य ऽइति ॥ ६ ॥ 'तन्त्वा जुषामहे देव वनस्पते देवयज्यायाऽइति। तद्यथा बहूनां मध्यात्साधवे कर्म्मणे जुषेत स रातमनास्तस्मै कर्म्मणे स्यादेवमेवैनमेतद्बहूनां मध्यात्साधवे कर्म्मणे जुषते स रातमना वृश्चनाय भवति ॥ ७ ॥ 'देवास्त्वा देवयज्यायै जुषन्तामि'ति। तद्वै समृद्धं यं देवाः साधवे कर्म्मणे जुषान्तै तस्मादाह देवास्त्वा देवयज्यायै जुषन्तामिति ॥ ८ ॥ अथ †स्रुवेणोपस्पृशति। विष्णवे त्वेति वैष्णवो हि यूपो यज्ञो वै विष्णुर्यज्ञाय ह्येनं वृश्चति तस्मादाह विष्णवे त्वेति ॥ ९ ॥ अथ दर्भतरुणकमन्तर्दधाति। 'ओषधे त्रायस्वे'ति वज्रो वै परशुस्तथो हैनमेष वज्रः परशुर्न हिनस्त्यथ परशुना प्रहरति 'स्वधिते मैनꣳ हिꣳसीरि'ति

* का० श्रौ० सू० ६ १.७।

† का० श्रौ० सू० ६.१ ६।

(१) शु० सं० अ० ५ क० ४२। (२) शु० सं० अ० ५ क० ४२। (३) शु० सं० अ० ५ क० ४२। (४) शु० सं० अ० ५ क० ४२। (५) शु० सं० अ० ५ क० ४२। (६) शु० सं० अ० ५ क० ४२।

विड् भूम्नैव तत्प्रजापतिः पुनरात्मानमाप्यायत भूमैनमुपसमावर्त्तत भूमानमनुकमात्मनोऽकुरुत भूम्नोऽएवैष ऽएतदाप्यायते भूमैनमुपसमावर्त्तते भूमानमनुकमात्मनः कुरुते॥ १७ ॥ तद्यदैन्द्रमनु भवति। क्षत्रं वा ऽइन्द्रो विशो विश्वे देवा विशो वै मरुतो विशैवैतत्क्षत्रं परिवृढः इति तदिदं क्षत्रमुभयतो विशा परिवृढम् ॥ १८ ॥ अथैन्द्राग्नम् । तेजो वा ऽअग्निरिन्द्रियं वीर्य्यमिन्द्रऽउभाभ्यामेव तद्वीर्य्याभ्यां प्रजापतिः पुनरात्मानमाप्यायतोभे ऽएनं वीर्य्ये ऽउपसमावर्त्तेतामुभे वीर्य्ये ऽअनुकेऽआत्मनोऽकुरुतोभाभ्यामेवैष ऽएतद्वीर्य्याभ्यामाप्यायतऽउभे ऽएनं वीर्य्ये ऽउपसमावर्त्तेते ऽउभे वीर्य्ये ऽअनुकेऽआत्मनः कुरुते ॥ १९ ॥ अथ *सावित्रः। सविता वै देवानां प्रसविता तथो हाऽस्मा ऽएते सवितृप्रसूताऽएव सर्वे कामाः समृद्ध्यन्ते ॥ २० ॥ अथ वारुणमन्ततऽआलभते। तदेनः सर्वस्माद्वरुणपाशात्सर्वस्माद्वरुण्यात्प्रमुञ्चति ॥ २१ ॥ तस्माद्यदि † यूपैकादशिनी स्यात्। आग्नेयमेवाऽग्निष्ठे नियुञ्ज्यादथेतरान्व्युपनयेयुर्यथापूर्वम् ॥ २२ ॥ ‡ यद्यु पश्वेकादशिनी स्यात्। आग्नेयमेव यूपऽआलभेरन्नथेतरान्यथापूर्वम् ॥ २३ ॥ तान्यत्रोदीचो नयन्ति। आग्नेयमेव प्रथमं नयन्त्यथेतरान्यथापूर्वम् ॥२४॥

* 'सावित्रम्' इति पाठ 'ख' पुस्तके।

† का० श्रौ० सू० ८. ८. २६।

‡ का० श्रौ० सू० ८. ८. २८।

तान्यत्र निविक्ष्यन्ति । आग्नेयमेव प्प्रथमं दक्षिणार्द्ध्ये निविक्ष्यन्त्यथेतरानुदीचोऽतिनीय यथापूर्वम् ॥ २५ ॥ तेषां यत्र वपाभिः प्प्रचरन्ति । आग्नेयस्यैव प्प्रथमस्य वपया प्प्रचरन्त्यथेतरेषां यथापूर्वम् ॥ २६ ॥ तैर्य्यत्र प्प्रचरन्ति । आग्नेयेनैव प्प्रथमेन प्प्रचरन्त्यथेतरैर्य्यथापूर्वम् ॥ २७ ॥ (A)

नवमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ *वसतीवरीग्रहणविधिः ]

यत्र वै यज्ञस्य शिरोऽच्छिद्यत । तस्य रसो द्रुत्वाऽपः प्प्रविवेश तेनैवैतद्रसेनाऽऽपः स्यन्दन्ते तमेवैतद्रसꣳ स्यन्दमानं मन्त्रयन्ते ॥ १ ॥ स यद्वसतीवरीर्ग्गृह्णाति । तमेवैतद्रसमाहृत्य यज्ञे दधाति रसवन्तं यज्ञं करोति तस्माद्वसतीवरीर्ग्गृह्णाति ॥ २ ॥ ता वै सर्वेषु सवनेषु विभजति । सर्वेष्वेवैतत्सवनेषु रसं दधाति सर्वाणि सवनानि रसवन्ति करोति तस्मात्सर्वेषु सवनेषु विभजति ॥ ३ ॥ ता वै स्यन्दमानानां गृह्णीयात् । ऐन्द्रि स यज्ञस्य रसस्तस्मात्स्यन्दमानानां गृह्णीयात् ॥ ४ ॥ गोपीथाय वा ऽएता गृह्यन्ते । सर्वं वा ऽइदमन्यदिलयति यदिदं किञ्चाऽपि योऽयं पवतेऽथैता ऽएव नेलयन्ति तस्मात्स्यन्दमानानां गृह्णीयात् ॥५॥

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ४. ९. १; मै० सं० ४. ५. १, १, तै० सं० ६. ६. ५ ।

* "अभिषुतस्य सोमस्य वर्द्धनार्थं या आपः सोमरसेन सह संसृज्यन्ते ता वसतीवर्य उच्यन्ते" का० श्रौ० सू० वृ० ( ८. ९. ६ ) ।

* दिवा गृह्णीयात् । पश्यन्न्यज्ञस्य रसं गृह्णानीति तस्माद्दिवा गृह्णीयादेतस्मै वै गृह्णाति य ऽएष तपति विश्वेभ्यो ह्येना देवेभ्यो गृह्णाति रश्मयो ह्यस्य विश्वे देवास्तस्माद्दिवा गृह्णीयाद्दिवेव वा ऽएष तस्माद्धेव दिवा गृह्णीयात् ॥ ६ ॥

एतद्ध वै विश्वे देवाः । यजमानस्य गृहानागच्छन्ति स यः पुराऽऽदित्यस्याऽस्तमयाद्वसतीवरीर्गृह्णाति यथा श्रेयस्याऽऽगमिष्यत्स्यावसथेनोपक्लृप्तेनोपासीतैवं तत्त ऽएतद्धविः प्रविशन्ति त ऽएतासु वसतीवरीषूपवसन्ति स ऽउपवसथः ॥ ७ ॥

स यस्या गृहीता ऽअभ्यस्तमियात् । तत्र प्रायश्चित्तिः क्रियते यदि पुरेजानः स्यान्निनाह्याद् गृह्णीयाद्दिवा हि तस्य ताः पुरा गृहीता भवन्ति यद्यु † ऽअनीजानः स्याद्य-ऽएनमीजान ऽउपाऽवसितो वा पर्य्यवसितो वा स्यात्तस्य निनाह्याद्गृह्णीयाद्दिवा हि तस्य ताः पुरा गृहीता भवन्ति ॥८॥

यद्यु ऽएतदुभयं न विन्देत् । उल्कुषीमेवाऽऽदायोपपरेयात्ता-मुपर्य्युपरि धारयन् गृह्णीयाद्धिरण्यं वोपर्य्युपरि धारयन् गृह्णीयात्तदेतस्य रूपं क्रियते य ऽएष तपति ॥ ९ ॥

‡ अथाऽतो गृह्णात्येव । 'हविष्मतीरिमा ऽआप' ऽइति यज्ञस्य ह्यासु रसः प्राऽऽविशत्तस्मादाह हविष्मतीरिमा ऽआप ऽइति 'हविष्माँ२ ऽआविवासती'ति हविष्मान्ह्येना यजमान-

---

* का० श्रौ० सू० ८. ९. ६ ।

† का० श्रौ० सू० ८. ९. ७, ८, 'ब्राह्मणो यद्दुपात्नी तस्य कुम्भ्यानां गृह्णीयात्' इति श्रुत्यन्तरम् ( तै० स० ६. ४. २. ३ )।

‡ का० श्रौ० सू० ८. ९. ९ ।

( १ ) शु० सं० अ० ६ क० २३ । ( २ ) शु० सं० अ० ६ क० २३ ।

ऽआविवासति तस्मादाह हविष्माँ३ ऽआविवासतीति ॥१०॥ 'हविष्मान्देवो ऽअद्भ्वर' ऽइति । अद्ध्वरो वै यज्ञस्तद्यस्मै यज्ञाय गृह्णाति तꣳ हविष्मन्तं करोति तस्मादाह हविष्मान्देवो ऽअद्ध्वर ऽइति ॥ ११ ॥ 'हविष्माँ३ ऽअस्तु सूर्य्य' ऽइति । एतस्मै वै गृह्णाति य ऽएष तपति विश्वेभ्यो ह्येना देवेभ्यो गृह्णाति रश्मयो ह्यस्य विश्वे देवास्तस्मादाह हविष्माँ३ ऽअस्तु सूर्य्य ऽइति ॥ १२ ॥ ता ऽआहृत्य जघनेन * गार्हपत्यꣳ सादयति । 'अग्नेर्वोऽपन्नगृहस्य सदसि सादयामी'त्यग्नेर्वोऽनार्त्तगृहस्य सदसि सादयामीत्येवैतदाहाऽथ यदाग्नीषोमीयꣳ पशुꣳ सन्तिष्ठतेऽथ परिहरति व्युत्क्रामतेत्याहाऽग्रेण हविर्द्धाने यजमान ऽआस्ते ताऽआदत्ते ॥ १३ ॥ स † दक्षिणेन निष्क्रामति । ता दक्षिणायाꣳ श्रोणौ सादयती'न्द्राग्न्योर्भागधेयी स्थे'ति विश्वेभ्यो ह्येना देवेभ्यो गृह्णातीन्द्राग्नी हि विश्वे देवास्ताꣳ पुनराहृत्याऽग्रेण पत्नीꣳ सादयति स जघनेन पत्नीं पर्य्येत्य ता ऽआदत्ते ॥ १४ ॥ ‡ स ऽउत्तरेण निष्क्रामति । ता ऽउत्तरायाꣳ श्रोणौ सादयति 'मित्रावरुणयोर्भागधेयी स्थे'ति नैवꣳ सादयेदतिरिक्तमेतन्नैवꣳ सम्पत्सम्पद्यतऽइन्द्राग्न्योर्भागधेयी स्थेत्येव ब्रूयात्तदेवाऽनतिरिक्तं तथा

* का० श्रौ० सू० ८ ९ १०।
† का० श्रौ० सू० ८ ९ १६ ।
‡ का० श्रौ० सू० ८ ९ १९, २१।

(१) शु० स० अ० ६ क० २३ । (२) शु० स० अ० ६ क० २३ । (३) शु० स० अ० ६ क० २४ । (४) शु० स० अ० ६ क० २४ । (५) शु० अ० ६ क० २४ ।

सम्पत्सम्पद्यते ॥ १५ ॥ * गुप्त्यै वा ऽएताः परिह्रियन्ते । अग्निः पुरस्ताद्थैताः समन्तं पल्यङ्ग्यन्ते नाष्ट्रा रक्षाᳬंसि स्यपघ्नन्त्यस्ता ऽआग्नीध्रे सादयति 'विश्वेषां देवानां भागधेयी स्थे'ति तदासु विश्वान्देवान्त्संवेशयत्येते वै वसतां वरं तस्माद्वसतीवर्य्यो नाम वसताᳬं ह वै वरं भवति यऽएवमेतद्वेद ॥ १६ ॥ तानि वा ऽएतानि । सप्त यजूᳬंषि भवन्ति । चतुर्भिर्गृह्णात्येकेन जघनेन गार्हपत्यᳬं सादयत्येकेन परिहरत्येकेनाऽऽग्नीध्रे तानि सप्त यत्र वै वाचः प्रजातानि छन्दाᳬंसि सप्तपदा वै तेषां परार्ध्या शक्वर्य्येतामभिसम्पदं तस्मात्सप्त यजूᳬंषि भवन्ति ॥१७॥

नवमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥ (B)

[ अथ सवनीयपशुप्रयोगः ]

( तत्र सोमोपावहरणम्, सवनीयहविर्निर्वापादि )

† तान्त्सम्प्रबोधयन्ति । तेऽप ऽउपस्पृश्याऽऽग्नीध्रमुपसमायन्ति त ऽआज्यानि गृह्णते ‡ गृहीत्वाऽऽज्यान्यायन्त्यासाद्याऽऽज्यानि ॥ १ ॥ अथ राजानमुपाऽवहरति । इयं वै प्रतिष्ठा जनूरासां प्रजानामिमामेवैतत्प्रतिष्ठामभ्यु-

* का० श्रौ० सू० ८. ९. २३ ।

(B) एतद्ब्राह्मणगतविषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० शा० ४. ३. २, मै० सं० ४. ५. १, ३; तै० सं० ६. ४. ३ ।

† का० श्रौ० सू० ९. १. १ ।

‡ का० श्रौ० सू० ९. १. २-४ ।

( १ ) शु० सं० अ० ६ क० २४ । ( २ ) शु० सं० अ० ६ क० २४ ।

पाऽवहरति तमस्यै तनुते तमस्यै जनयति ॥ २ ॥
[ अर्धप्रपाठकः ॥ ५७ ॥ ] अन्तरेणैवे ऽउपाऽवहरति । यज्ञो वाऽअनस्तन्न्वेव यज्ञान्न बहिर्द्धा करोति ग्रावसु सम्मुखेष्वधि निदधाति क्षत्रं वै सोमो विशो ग्रावाणः क्षत्रमेवैतद्विश्य-द्ध्यूहति तद्यत्सम्मुखा भवन्ति विशमेवैतत्सम्मुखां क्षत्रिय-मनभ्युविवादिनीं करोति तस्मात्सम्मुखा भवन्ति ॥ ३ ॥
* स ऽउपाऽवहरति । 'हृदे त्वा मनसे त्वेति' यजमानस्यै-तत्कामायाऽऽह हृदयेन हि मनसा यजमानस्तं कामं कामयते यत्काम्म्या यजते तस्मादाह हृदे त्वा मनसे त्वेति ॥ ४ ॥ 'दिवे त्वा सूर्य्याय त्वे'ति । देवलोकाय त्वेत्येवैत-दाह यदाह दिवे त्वेति सूर्य्याय त्वेति देवेभ्यस्त्वेत्येवैतदा-'होर्द्ध्वमिममद्ध्वरं दिवि देवेषु होत्रा यच्छे'त्यद्ध्वरो वै यज्ञ-ऽऊर्द्ध्वमिमं यज्ञं दिवि देवेषु धेहीत्येवैतदाह ॥ ५ ॥ 'सोमं राजन्विश्वास्त्वं प्रजा ऽउपाऽवरोहे'ति । तदेनमासां प्रजाना-माधिपत्याय राज्यायोपाऽवहरति ॥ ६ ॥ अथाऽनुसृज्यो-पतिष्ठते । विश्वास्त्वां प्रजा ऽउपाऽवरोहन्त्वित्ययथायथ-मिव वा ऽएतत्करोति यदाह विश्वास्त्वं प्रजा ऽउपावरोहेति क्षत्रं वै सोमस्तत्पापवस्यसं करोति तद्धेदमनु पापवस्यसं क्रियतेऽथाऽत्र यथायथं करोति यथापूर्वं यदाह 'विश्वा-स्त्वां प्रजा ऽउपाऽवरोहन्त्वि'ति तदेनमाभिः प्रजाभिः

* का० श्रौ० सू० ९. १ ५-७।

(१) शु० सं० अ० ६ क० २५। (२) शु० सं० अ० ६ क० २५। (३) शु० सं० अ० ६ क० २५। (४) शु० सं० अ० ६ क० २६। (५) शु० सं० अ० ६ क० २६।

प्रत्यवरोहयति तस्मादु क्षत्रियमायन्तमिमाः प्रजा विशः प्रत्यवरोहन्ति तमधस्तादुपाऽऽसत ऽउपसन्नो होता प्रातरनुवाकमनुवक्ष्यन्भवति ॥ ७ ॥ अथ * समिधमभ्यादधदाह । देवेभ्यः प्रातर्यावभ्योऽनुब्रूहीति छन्दाꣳसि वै देवाः प्रातर्यावाणश्छन्दाꣳस्यनुयाजा देवेभ्यः प्रेष्य देवान्यजेति वा ऽअनुयाजैश्चरन्ति ॥ ८ ॥ तदु हैक ऽआहुः । देवेभ्योऽनुब्रूहीति तदु तथा न ब्रूयाच्छन्दाꣳसि वै देवाः प्रातर्यावाणश्छन्दाꣳस्यनुयाजा देवेभ्यः प्रेष्य देवान्यजेति वा ऽअनुयाजैश्चरन्ति तस्मादु ब्रूयाद्देवेभ्यः प्रातर्यावभ्योऽनुब्रूहीत्येव ॥ ९ ॥ अथ यत्समिधमभ्यादधाति । छन्दाꣳस्येवैतत्समिन्धेऽथ यद्धोता प्रातरनुवाकमन्वाह छन्दाꣳस्येवैतत्पुनराप्याययत्ययातयामानि करोति यातयामानि वै देवैश्छन्दाꣳसि छन्दोभिर्हि देवाः स्वर्गं लोकꣳ समाश्नुवत न वा ऽअत्र स्तुवते न शꣳसन्ति तच्छन्दाꣳस्येवैतत्पुनराप्याययत्ययातयामानि करोति तैरयातयामैर्यज्ञं तन्वते † तस्माद्धोता प्रातरनुवाकमन्वाह ॥ १० ॥ तदाहुः । कः प्रातरनुवाकस्य प्रतिगर ऽइति ‡ जाग्रद्धैवाऽध्वर्युरुपाऽऽसीत स यन्निमिषति स हैवाऽस्य प्रतिगरस्तदु तथा न कुर्याद्यदि निद्रायादुपि कामꣳ स्वप्यात्स

* का० श्रौ० सू० ९. १. १०, ११ ।

† का० श्रौ० सू० ९. १. १२ ।

‡ का० श्रौ० सू० ९. १. १३,१४ ।

यत्र होता प्रातरनुवाकं परिदधाति तत्प्रचरणीति स्रुग्भवति तस्यां चतुर्गृहीतमाज्यं गृहीत्वा जुहोति ॥ ११ ॥ यत्र वै यज्ञस्य शिरोऽच्छिद्यत । तस्य रसो द्रुत्वाऽपः प्रविवेश तमदः पूर्वेद्युर्वसतीवरीभिराहरत्यथ योऽत्र यज्ञस्य रसः परिशिष्टस्तमेवैतदच्छैति ॥ १२ ॥ * यद्वेवैतामाहुतिं जुहोति । एतमेवैतद्यज्ञस्य रसमभि प्रस्तृणीते तमारुन्धे याभ्य उ चैवैतां देवताभ्य आहुतिं जुहोति ता एवैतत्प्रीणाति ता अस्मै तृप्ताः प्रीता एतं यज्ञस्य रसः सन्नमन्ति ॥ १३ ॥ † स जुहोति । 'शृणोत्वग्निः समिधा हवम्म' इति शृणोतु म इदमग्निरनु मे जानात्वित्त्यैवैतदाह 'शृण्वन्त्वापो धिषणाश्च देवीरि'ति शृण्वन्तु म इदमापोऽनु मे जानन्त्वित्त्यैवैतदाह 'श्रोता ग्रावाणो विदुषो न यज्ञमि'ति शृण्वन्तु म इदं ग्रावाणोऽनु मे जानन्त्वित्त्यैवैतदाह विदुषो न यज्ञमिति विद्वाꣳसो हि ग्रावाणः 'शृणोतु देवः सविता हवम्मे स्वाहे'ति शृणोतु म इदं देवः सविताऽनु मे जानात्वित्त्यैवैतदाह सविता वै देवानां प्रसविता तत्सवितृप्रसूत एवैतद्यज्ञस्य रसमच्छैति ॥१४॥ ‡ अथाऽपरं चतुर्गृहीतमाज्यं गृहीत्वा । उदङ् प्रयन्नाहाऽप इष्य होतरित्यप इच्छ होतरित्त्येवैतदाह तद्य-

---

* 'ख पुस्तके यद्वेवैताम्' इति ।

† का० श्रौ० सू० ९ ३ १ अत्र शतम् २२०० ।

‡ का० श्रौ० सू० ९ ३ ३ ।

( १ ) शु० सं० अ० ६ क० २६ । ( २ ) शु० सं० अ० ६ क० २६ । ( ३ ) शु० सं० अ० ६ क० २६ । ( ४ ) शु० सं० अ० ६ क० २६ ।

दुतो होताऽश्वाहैतमेवैतद्यज्ञस्य रुसमभिप्रस्तृणीते, तमा-रुन्ध ऽएताऽनु चैवैतदनुतिष्ठते नेदेनानन्तरा नाष्ट्रा रक्षाᳪसि हिनसन्निति ॥ १५ ॥ अथ * सम्प्रेष्यति । मैत्रावरुणस्य चमसाध्वर्यवेहि नेष्टः पत्नीरुदानयैकधनिन ऽएताऽग्नी-च्चात्वाले वसतीवरीभिः प्रत्युपतिष्ठासै होतृचमसेन चेति सम्प्रैषु ऽएवैषः ॥ १६ ॥ त ऽउदञ्चो निष्क्रामन्ति । जघनेन चात्वालमग्रेणाऽग्नीध्रः स यस्यां ततो दिश्यापो भवन्ति तद्यन्ति ते वै सह पत्नीभिर्यन्ति तद्यत्सह पत्नी-भिर्यन्ति ॥ १७ ॥ यत्र वै यज्ञस्य शिरोऽच्छिद्यत । तस्य रुसो द्रुत्वाऽपः प्रविवेश तमेते गन्धर्वाः सोमरक्षा जुगुपुः ॥ १८ ॥ ते ह देवा ऽऊचुः । इयमु स्वेवेह नाष्ट्रा यदिमे गन्धर्वाः कथं न्विममभयेऽनाष्ट्रे यज्ञस्य रुसमाहरेमेति ॥ १९ ॥ ते होचुः । योषित्कामा वै गन्धर्वाः सह पत्नी-भिरयाम ते पत्नीष्वेव गन्धर्वा गर्द्धिष्यन्त्यथैतमभयेऽनाष्ट्रे यज्ञस्य रुसमाहरिष्याम ऽइति ॥ २० ॥ ते सह पत्नीभि-रीयुः । ते पत्नीष्वेव गन्धर्वा जगृधुरथैतमभयेऽनाष्ट्रे यज्ञस्य रुसमाजहुः ॥ २१ ॥ तथो ऽएवैष ऽएतत् । सहैव पत्नीभिरेति ते पत्नीष्वेव गन्धर्वा गृध्यन्त्यथैतमभयेऽनाष्ट्रे यज्ञस्य रुसमाहरति ॥ २२ ॥ सोऽपोऽभिजुहोति । एताᳪ ह वा ऽआहुतिᳪ हुतामेपु यज्ञस्य रुस ऽउपसमैति तां प्रत्युत्तिष्ठति तमेवैतदाविष्कृत्य गृह्णाति ॥ २३ ॥ † यद्वे-

* का० श्रौ सू० ९ ३ २ ।

† 'ग' पुस्तके 'यद्वेवैताम्' इति ।

वैतामाहुतिं जुहोति । एतमेवैतद्यज्ञस्य रसमभिप्रस्तुपीते तमारुन्धे तमपो याचति ग्राव्भ्य ऽउ चैवैतां देवताभ्य ऽआहुतिं जुहोति ता ऽएवैतत्प्रीणाति ता ऽअस्मै तृप्ताः प्रीता ऽएतं यज्ञस्य रसꣳ सन्नमन्ति ॥ २४ ॥ * स जुहोति । 'देवीरापो ऽअपान्नपादि'ति देव्व्यो ह्यापस्तस्मादाह देवीरापो ऽअपान्नपादिति 'यो वै ऽऊर्म्मिर्हविष्य' ऽइति यो व ऽऊर्म्मिर्यज्ञिय ऽइत्येवैतदा 'हेन्द्रियावान्मदिन्तम' ऽइति वीर्य्यवानित्येवैतदाह यदाहेन्द्रियावानिति मदिन्तम ऽइति स्वादिष्ठ ऽइत्येवैतदाह 'तन्देवेभ्यो देवत्रा दत्ते'त्येतदेना ऽअयाचिष्ट यदाह तं देवेभ्यो देवत्रा दत्तेति 'शुक्रपेभ्य' ऽइति सत्यं वै शुक्रꣳ सत्यपेभ्य ऽइत्येवैतदाह 'येषां भाग स्थ स्वाहे'ति तेषा मु ह्येष भागः ॥ २५ ॥ अथ †मैत्रावरुणचमसेनैतामाहुतिमुपप्लावयति । 'कार्षिरसी'ति यथा वा ऽअङ्गारोऽग्निना प्सातः स्यादेवमेषाऽऽहुतिरेतया देवतया प्साता भवति राजानं वा ऽएताभिरद्भिरुपस्रक्ष्यन्भवति या ऽएता मैत्रावरुणचमसे वज्रो वा ऽआज्यꣳ रेतः सोमो नेद्वज्रेणाऽऽज्येन रेतः सोमꣳ हिनसानीति तस्माद्वा ऽअपप्लावयति ॥ २६ ॥ अथ गृह्णाति । 'समुद्रस्य त्वाऽक्षित्या ऽउन्नयामी'त्यापो

---

* का० श्रौ० सू० ९. ३ ४।

† का० श्रौ० सू० ९. ३ ५-८।

(१) शु० सं० अ० ६ क० २७। (२) शु० सं० अ० ६ क० २७। (३) शु० सं० अ० ६ क० २७। (४) शु० सं० अ० ६ क० २७। (५) शु० सं० अ० ६ क० २७। (६) शु० सं० अ० ६ क० २८। (७) शु० सं० अ० ६ क० २८। (८) शु० सं० अ० ६ क० २८।

वै समुद्रोऽप्स्वेवैतदक्षितिं दधाति तस्मादाप एतावति भोगे भुज्यमाने न क्षीयन्ते तदश्वेकधनानुन्नयन्ति तदनु पात्रे-जनान् ॥ २७ ॥ तद्यन्मैत्रावरुणचमसेन गृह्णाति । यत्र वै देवेभ्यो यज्ञोऽपाऽक्रामत्तमेतद्देवाः प्रैषैरेव प्रैषमैच्छ-न्पुरोरुग्भिः प्राऽरोचयन्निविद्भिर्न्यवेदयँस्तस्मान्मैत्रावरुण-चमसेन गृह्णाति ॥ २८ ॥ * त ऽआयन्ति । प्रत्युपतिष्ठतेऽ-ग्नीच्चात्वाले वसतीवरीभिश्च होतृचमसेन च स ऽउप-र्युपरि चात्वालः सःस्पर्शयति वसतीवरीश्च मैत्रवरुण चमसश्च 'समापो ऽअद्भिरग्मत समोषधीभिरोषधीरि'ति यश्चाऽसौ पूर्वेद्युराहृतो यज्ञस्य रसो यश्चाऽयाऽऽहृतस्तमेवैत-दुभयः सह सृजति ॥२९॥ तद्धैके । एवमैत्रावरुणचमसे वस-तीवरीर्नयन्त्या मैत्रावरुणचमसाद्वसतीवरीषु यश्चाऽसौ पूर्वेद्युराहृतो यज्ञस्य रसो यश्चाऽयाऽऽहृतस्तमेवैतदुभयः सःसृजाम ऽइति वदन्तस्तदु तथा न कुर्य्याद्यत्रा ऽआधवनीये समवनयति तदेवैष ऽउभयो यज्ञस्य रसः सःसृज्यतेऽथ † होतृचमसे वसतीवरीर्गृह्णाति निग्राभ्याभ्यस्तद्यदुपर्य्युपरि चात्वालः सःस्पर्शयत्यतो वै देवा दिवमुपोदक्रामँस्तद्य-जमानमेवैतत्स्वर्ग्यं पन्थानमनु संख्यापयति ॥ ३० ॥ त-ऽआयन्ति । तः होता ‡ पृच्छत्यध्वर्य्योऽवेरपा३ ऽइत्युविदोऽ-

* का० श्रौ० सू० ९ ३ ९ ।

† "होतृचमसे वसतीवरी कृत्वा यजमानाय प्रयच्छति निग्राभ्या" (का० श्रौ० सू० ९ ३. ११)।

‡ का० श्रौ० सू० ९ ३ १२ ।

(१) शु० रा० अ० ६ क० २८ ।

पाइ ऽइत्येवैतदाह तं प्रत्याहोतेव नन्नमुरित्यविदमथो मेऽनद्दसतेत्येवैतदाह ॥३१॥ स यद्यग्निष्टोमः स्यात् । यदि *प्रचरण्याꣳ सꣳस्रवः परिशिष्टोऽलꣳ होमाय स्यात्तं जुहुयाद् यद्यु नाऽलꣳ होमाय स्यादुपरं चतुर्गृहीतमाज्यं गृहीत्वा जुहोति [1]'यमग्ने पृत्सु मर्त्यमवा वाजेषु यञ्जुनाः । स यन्ता शश्वतीरिषः स्वाहे'त्याग्नेय्या जुहोत्यग्निर्वा ऽअग्निष्टोमस्तदग्नावग्निष्टोमं प्रतिष्ठापयति मर्त्तवत्या पुरुषसम्मितो वा ऽअग्निष्टोम ऽएवं जुहुयाद्यद्यग्निष्टोमः स्यात् ॥ ३२ ॥ यद्युक्थ्यः स्यात् । मध्यमं परिधिमुपस्पृशेत्त्रयः परिधयस्त्रीण्युक्थान्येतैरु हि तर्हि यज्ञः प्रतितिष्ठति यद्यु ऽअतिरात्रो वा षोडशी वा स्यान्नैव जुहुयान्न मध्यमं परिधिमुपस्पृशेत्समुद्यैव तूष्णीमेत्य प्रपद्येत तद्यथायथं यज्ञक्रतून्व्यावर्त्तयति ॥ ३३ ॥ †अयुजा-ऽअयुजा ऽएकधना भवन्ति । त्रयो वा पञ्च वा पञ्च वा सप्त वा सप्त वा नव वा नव वैकादश वैकादश वा त्रयोदश वा ‡ त्रयोदश वा पञ्चदश वा द्वन्द्वमह मिथुनं प्रजननमथ य ऽएष ऽएकोऽतिरिच्यते स यजमानस्य श्रियमभ्यतिरिच्यते

* का० श्रौ० सू० ९ ३ १३-१५।

( १ ) शु० स० अ० ६ क० २१।

† त्रिप्रभृति पञ्चदशपर्यन्ता विषमसंख्याकान् एकधनाख्यान् कलशान् स्थापयेत्, 'एक सोम रूप धन येषा ते एकधना'। अग्निष्टोमात्यग्निष्टोमयोस्त्रय पञ्च वैकधना, उक्थ्ये पञ्च सप्त वा, षोडशिन्या सप्त नव वा वाजपेये नवैकादशवा, अतिरात्रे एकादश त्रयोदश वा, अप्तोर्यामे त्रयोदश पञ्चदश वेति सत्यावृद्धिरिति याज्ञिकदेव । एकधनाश्च मृन्मया धातुमया वा, सोमवर्धनार्था आप एकधना, तद्ग्रहणार्था घटाश्च एकधनशब्देनोच्यन्ते ( का० श्रौ० सू० वृ० ९ ३ २२ )।

‡ 'त्रयोदश इति नास्ति 'च' पुस्तके ।

स वा ऽएषाᳫं सधनं यो यजमानस्य श्रियमभ्यतिरिच्यते तद्यदेषाᳫं सधनं तस्मादेकधना नाम ॥ ३४ ॥ (C)

नवमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ सोमाभिषवः ]

अथाऽधिषवणे *पर्य्युपविशन्ति । अथाऽस्याᳫं हिरण्यं बध्नीते द्वयं वा ऽइदं न तृतीयमस्ति सत्यं चैवाऽनृतं च सत्यमेव देवा ऽअनृतं मनुष्या ऽअग्निरेतसं वै हिरण्यᳫं सत्येनाऽᳫंशूनुपस्पृशानि सत्येन सोमं पराहणानीति तस्माद्वा ऽअस्याᳫं हिरण्यं बध्नीते ॥ १ ॥ अथ ग्रावाण-मादत्ते । ते वा ऽएतेऽश्ममया ग्रावाणो भवन्ति देवो वै सोमो दिवि हि सोमो वृत्रो वै सोम ऽआसीत्तस्यैतच्छरीरं यद्गिरयो यदश्मानस्तच्छरीरेणैवैनमेतत्समर्द्धयति कृत्स्नं करोति तस्मादश्ममया भवन्ति घ्नन्ति वा ऽएनमेतद्यद-भिषुण्वन्ति तमेतेन घ्नन्ति तथाऽत उदेति तथा सञ्जीवति तस्मादश्ममया ग्रावाणो भवन्ति ॥२॥ †तमादत्ते । 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे रावाऽसी'ति सविता वै देवानां प्रसविता तत्सवितृप्रसूत-ऽएवैनमेतदादत्तेऽश्विनोर्बाहुभ्यामित्यश्विनावध्वर्य्यू तत्तयो-रेव बाहुभ्यामादत्ते न स्वाभ्यां पूष्णो हस्ताभ्यामिति

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ४ ९ ३ मै० स० ४ ५ २ तै० स० ६ ४, ३ ।

* "एकधनस्थाने उभयशेषे विधायाऽधिषवणे पर्य्युपविशन्ति" ( का० श्रौ० सू० ९ ४ १।

† 'देवस्यत्वेत्यद्रिमादाय'' का० श्रौ० सू० ( ९ ४ ४, ज ) ।

( १ ) शु० य० अ० ६ क० ३० ।

पूषा *भागदुघस्तत्तस्यैव हस्ताभ्यामादत्ते न स्वाभ्यां वज्रो वा ऽएष तस्य न मनुष्यो भर्त्ता तमेताभिर्देवताभिरादत्ते ॥ ३ ॥ 'आददे रावाऽसी'ति । यदा वा ऽएनमेतेनाऽभिषुण्वन्त्यथाऽऽहुतिर्भवति यदाहुतिं जुहोत्यथ दक्षिणा ददात्येतद्धेष द्वयः रासत ऽआहुतीश्च दक्षिणाश्च तस्मादाह रावासीति ॥ ४ ॥ 'गभीरमिममध्वरं कृधी'ति । अध्वरो वै यज्ञो महान्तमिमं यज्ञं कृधीत्येवैतदा'हेन्द्राय सुषूतममि'तीन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्रायेति सुषूतममिति सुसुतमित्येवैतदाहो'त्तमेन पविने'त्येष वाऽउत्तमः पविर्यत्सोमस्तस्मादाहोत्तमेन पविने'त्यूर्जस्वन्तं मधुमन्तं पयस्वन्तमि'ति रसवन्तमित्येवैतदाह यदाहोर्जस्वन्तं मधुमन्तं पयस्वन्तमिति ॥५॥ †अथ वाचं यच्छति देवा ह वै यज्ञं तन्वानास्तेऽसुररक्षसेभ्य ऽआसङ्गाद्बिभयाञ्चक्रुस्ते होचुरुपांशु यजाम वाचं यच्छामेति तऽउपांश्वयजन्वाचमयच्छन् ॥ ६ ॥ अथ ‡निग्राभ्याऽआहरति । तास्वेनं वाचयति 'निग्राभ्या स्थ देवश्रुतस्तर्प्पयत मा मनो मे तर्प्पयत वाचम्मे तर्प्पयत प्राणम्मे तर्प्पयत चक्षुर्म्मे तर्प्पयत श्रोत्रम्मे तर्प्पयताऽऽत्मानम्मे तर्प्पयत प्रजाम्मे तर्प्पयत पशून्मे तर्प्पयत गणान्मे तर्प्प-

(१) शु० स० अ० ६ क० ३०। (२) शु० स० अ० ६ क० ३०। (३) शु० स० अ० ६ क० ३०। (४) शु० स० अ० ६ क० ३०। (५) शु० स० अ० ६ क० ३०।

* 'दुहे कब् घश्च' इति (पा० सू० ३ २ ७०) कप् घकारश्च विधीयते।

† "वाचं यच्छति प्राग्विक्षारात्" (का० श्रौ० सू० ९ ४ ४, आ)।

‡ का० श्रौ० सू० ९ ४ ६.।

(६) शु० स० अ० ६ क० ३०।

यत गणा मे मा वितृपन्नि'ति रसो वा ऽआपस्तास्वेवैतामाशि-
षमाशास्ते सर्वं च म ऽआत्मानं तर्प्पयत प्रजाम्मे तर्प्पयत
पशून्मे तर्प्पयत गणान्मे तर्प्पयत गणा मे मा वितृपन्निति
स यु ऽएषु ऽउपाथंशुसवनः स विवस्वानादित्यो
निदानेन सोऽस्यैषु व्यानः ॥ ७ ॥ तमभिमिमीते।
घ्नन्ति वा ऽएनमेतद्यदभिषुण्वन्ति तमेतेन घ्नन्ति तथाऽत-
ऽउदेति तथा सञ्जीवति यद्वेव मिमीते तस्मान्मात्रा मनु-
ष्येषु मात्रो यो चाऽप्प्यन्न्या मात्रा ॥ ८ ॥ *स मिमीते।
'इन्द्राय त्वा वसुमते रुद्रवत' ऽइतीन्द्रो वै यज्ञस्य देवता
तस्मादाहेन्द्राय त्वेति वसुमते रुद्रवत ऽइति तदिन्द्रमेवाऽनु
वसूँश्च रुद्राँश्चाऽऽभज'तीन्द्राय त्वाऽऽदित्यवत' ऽइति तदि-
'न्द्रमेवाऽन्वादित्यानाभज'तीन्द्राय त्वाऽभिमातिघ्न' ऽइति
सपत्नो वा ऽअभिमातिरिन्द्राय त्वा सपत्नघ्न ऽइत्येवैतदाह
सोऽस्योद्धारो यथा श्रेष्ठस्योद्धार ऽएवमस्यैष ऽऋते देवेभ्यः
॥ ९ ॥ 'श्येनाय त्वा सोमभृत' ऽइति। तद्गायत्र्यै मिमीतेऽ-
ग्नये त्वा रायस्प्पोषद' ऽइत्यग्निर्वै गायत्री तद् गायत्र्यै
मिमीते स यद्गायत्री श्येनो भूत्वा दिवः सोममाहरत्तेन
सा श्येनः सोमभृत्तेनैवाऽस्या ऽएतद्वीर्य्येण द्वितीयं मिमीते
॥१०॥ अथ यत्पञ्चकृत्वो मिमीते। संवत्सरसम्मितो वै यज्ञः
पञ्च वा ऽऋतवः संवत्सरस्य तं पञ्चभिराप्नोति तस्मात्पञ्च-

* का० श्रौ० सू० ९ ४, ७।

(१) शु० सं० अ० ६ क० ३१,३२। (२) शु० सं० अ० ६ क० ३२। (३) शु० सं० अ० ६ क० ३२। (४) शु० सं० अ० ६ क० ३२। (५) शु० सं० अ० ६ क० ३२।

कृत्वो मिमीते ॥ ११ ॥ * तमभिमृशति । 'यत्ते सोम दिवि ज्योतिर्यत्पृथिव्यां यदुरावन्तरिक्षे । तेनाऽस्मै यजमाना-योरु राये कृध्यधि दात्रे वोच' ऽइति यत्र वा ऽएषोऽग्रे देवा-नाꣳ हविर्बभूव तद्देक्षाञ्चक्रे मैव सर्वेणेवाऽऽत्मना देवानाꣳ हविर्भूवमिति स ऽएतास्तिस्रस्तनूरेषु लोकेषु विन्यधत्त ॥ १२ ॥ तद्वै देवा ऽअस्पृणवत् । तेऽस्यैतेनैवैतास्तनूराप्नु-वन्त्स कृत्स्न ऽएव देवानाꣳ हविरभवत्तथो ऽएवाऽस्यैष ऽएतेनैवैतास्तनूराप्नोति स कृत्स्न ऽएव देवानाꣳ हविर्भ-वति तस्मादेवमभिमृशति ॥ १३ ॥ अथ निग्राभ्याभिरुप-सृजति । आपो ह वै वृत्रं जघ्नुस्तेनैवैतद्वीर्येणाऽऽपः स्यन्दन्ते तस्मादेनाः स्यन्दमाना न किश्चन [1] प्रतिधारयते ता ह स्वमेव वशश्चेरुः कस्मै नु वयं तिष्ठेमहि याभिर-स्माभिर्वृत्रो हत ऽइति सर्वं वा ऽइदमिन्द्राय तस्थाना-मास यदिदं किञ्चाऽपि योऽयं पवते ॥१४॥ स ऽइन्द्रोऽब्र-वीत् । सर्वं वै म ऽइदं तस्थानं यदिदं किञ्च तिष्ठध्वमेव म ऽइति ता होचुः किं नस्ततः स्यादिति प्रथमभक्ष ऽएव वः सोमस्य राज्ञ ऽइति तथेति ता ऽअस्मा ऽअतिष्ठन्त ता-स्तस्थाना ऽउरसि न्यगृह्णीत तद्यदेना ऽउरसि न्यगृह्णीत तस्मान्निग्राभ्या नाम ‡ तथैवैना ऽएतद्यजमान ऽउरसि निगृ-ह्णीते स ऽआसामेष प्रथमभक्षः सोमस्य राज्ञो यन्निग्रा-

* का. श्रौ. सू. ९. ४. ८ ।

(१) शु. यं. सं. ६ क. ११ ।

† 'प्रतिधारयति' इति 'च' पुस्तके ।

‡ 'तथैवैना' इति 'ग-च' पुस्तकयो. ।

भ्याभिरुपसृजति ॥ १५ ॥ * स ऽउपसृजति। 'श्वात्रा स्थ वृत्रतुर' ऽइति शिवा ह्यापस्तस्मादाह श्वात्रा स्थेति वृत्रतुर ऽइति वृत्रꣳ ह्येता ऽअघ्नन्'राधोगूर्त्ता ऽअमृतस्य पत्नीरि'त्यमृता ह्याप 'स्ता देवीर्देवत्रेमं यज्ञं नयते'ति नाऽत्र तिरोहितमिवाऽ'स्त्युपहूताः सोमस्य पिबते'ति तदुपहूता ऽएव प्रथमभक्षꣳ सोमस्य राज्ञो भक्षयन्ति ॥ १६ ॥ अथ [1]प्रहरिष्यन्। यं द्विष्यात्तं मनसा ध्यायेदमुष्मा ऽअहं प्रहरामि न तुभ्यमिति यो न्वेवेमं मानुषं ब्राह्मणꣳ हन्ति तं न्वेव परिचक्षतेऽथ किं य ऽएतं देवो हि सोमो घ्नन्ति वा ऽएनमेतद्यदभिषुण्वन्ति तमेतेन घ्नन्ति तथाऽत ऽउदेति तथा सञ्जीवति तथाऽनेनस्यं भवति यद्यु न द्विष्यादपि तृणमेव मनसा ध्यायेत्तथो ऽअनेनस्यं भवति ॥ १७ ॥ ‡स प्रहरति। 'मा भेर्म्मा संविक्था' ऽइति मा त्वं भैषीर्म्मा संविक्था ऽअमुष्मा ऽअहं प्रहरामि न तुभ्यमित्येवैतदा-'होर्ज्जं धत्स्वे'ति रसं धत्स्वेत्येवैतदाह 'धिषणे वीड्वी सती वीडयेथामूर्ज्जं दधाथामि'तीमे ऽएवैतत्फलके ऽआहुरित्यु हैक ऽआहुः किन्नु तत्र योऽप्येते फलके भिन्द्यादिमे ह वै द्यावापृथिवी ऽएतस्माद्वज्राद्उद्यतात्सꣳ रेजेते तदाभ्यामेवै-

(१) शु० सं० अ० ६ क० ३४। (२) शु० स० अ० ६ क० ३४। (३) शु० स० अ० ६ क० ३४। (४) शु० स० अ० ६ क० ३४। (५) शु० स० अ० ६ क० ३५ (६) शु० स० अ० ६ क० ३५।

* का० श्रौ० सू० ९. ४. १०।
† का० श्रौ० सू० ९. ४. ११, १२।
‡ का० श्रौ० सू० ९. ४. १३।

नमेतद् द्यावापृथिवीभ्याᳪं शमयति तथेमे शान्तो न हिन-स्त्यूर्जं दधाथामिति रसन्दधाथामित्येवैतदाह 'पाप्मा हतो-न सोम' ऽइति तदस्य सर्वं पाप्मानᳫं हन्ति ॥ १८ ॥ स वै *त्रिरभिपुणोति । त्रिᳫं सम्भरति चतुर्निग्राभमुपैति तद्दश दशाक्षरा वै विराड्वैराजᳫं सोमस्तस्माद्दशकृत्वᳫं सम्पा-दयति ॥ १९ ॥ अथ यन्निग्राभमुपैति । यत्र वा ऽएषोऽग्रे देवानाᳪं हविर्बभूव तद्धेमा दिशोऽभिदध्यावाभि-र्दिग्भिर्म्मिथुनेन प्रियेण धाम्ना सᳫंस्पृशेयेति तमे-तद्देवा ऽआभिर्दिग्भिर्म्मिथुनेन प्रियेण धाम्ना समस्पर्श-यन्यन्निग्राभमुपायँस्तथो ऽएवैनमेष ऽएतदाभिर्दिग्भिर्म्मिथु-नेन प्रियेण धाम्ना सᳫंस्पर्शयति यन्निग्राभमुपैति ॥ २० ॥ †स ऽउपैति । 'प्रागपागुदगधराक्सर्वतस्त्वा दिश-ऽआधावन्त्वि'ति तदेनमाभिर्दिग्भिर्म्मिथुनेन प्रियेण धा-म्ना सᳫंस्पर्शय'त्यम्ब निष्पर समरीर्विदामि'ति योषा वा ऽअम्बा योषा दिशस्तस्मादाहाऽम्ब निष्परेति समरीर्विदामिति प्रजा वा ऽअरीᳫं सम्प्रजा जानता-मित्येवैतदाह तस्माद्या ऽअपि विदूरमिव प्रजा भवन्ति समेव ता जानते तस्मादाह समरीर्विदामिति ॥ २१ ॥ अथ यस्मात्सोमो नाम । यत्र वा ऽएषोऽग्रे देवानाᳪं हविर्बभूव तदेक्षाञ्चक्रे मैव सर्वेणेवाऽऽत्मना देवानाᳪं

---

* का० श्रौ० सू० ९. ४. १४-१७।

† का० श्रौ० सू० ९. ४. १८।

(१) शु० सं० अ० ६ क० १९। (२) शु० सं० अ० ६ क० ३६। (३) शु० सं० अ० ६ क० ३६।

हविर्भूवमिति तस्य या जुष्टतमा तनूरास तामप निदधे
तद्वै देवा ऽअस्पृण्वत ते होचुरुपैवैतां प्रवृहस्व सहैव
न ऽएतया हविरेधीति तान्दूर ऽइवोपप्राऽवृहत स्वा वै म
ऽएषेति तस्मात्स्वोमो नाम ॥२२॥ अथ यस्माद्यज्ञो * नाम।
घ्नन्ति वा ऽएनमेतद्यदभिषुण्वन्ति तद्यदेनं तन्वते तदेनं
जनयन्ति स तायमानो जायते स यन् जायते तस्माद्यञ्ज्ञो
† यञ्ज्ञो ह वै नामैतद्यद्यज्ञ ऽइति ॥ २३ ॥ तत्रैतामपि वाच-
मुवाद । 'त्वमङ्ग प्रशꣳसिषो देवः शविष्ठ मर्त्यम्। न
त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वच' ऽइति
मर्त्यो हैवैतद्भवन्नुवाच त्वमेवेतो जनयिताऽसि नाऽन्यस्त्व-
दिति ॥ २४ ॥ अथ ‡ निग्राभ्यो ग्रहान्विगृह्णते । आपो
वै वृत्रं जघ्नुस्तेनैवैतद्वीर्येणाऽऽपः स्यन्दन्ते स्यन्दमानानां
वै वसतीवरीर्गृह्णाति वसतीवरीभ्यो निग्राभ्या निग्रा-
भ्याभ्यो ग्रहान्विगृह्णते तेनैवैतद्वीर्येण ग्रहान्विगृह्णते
होतृचमसाद्ध्योपा वा ऽऋग्घोता योपायै वा ऽइमाः प्रजाः

---

* "यज्ञः कस्मात्? प्रख्यातं यजतिकर्मेति नैरुक्ताः, याच्ञो भवतीति वा, यजुरुन्नो भवतीति वा, बहुकृष्णाजिन इत्यौपमन्यव, यजूंष्येन नयन्तीति वा" (निरु० ३. ४ २)

† स सोम तायमानः सन् जायते, अतो यत् परम्परया आहुतिभावं गच्छन् जायते पुन. पुन सम्भवति, अतो यन्नायत इति यज्ञ । अतो वस्तुतो यज्ञ इति तस्य नाम, तद्यज्ञ इति परोक्षेण व्यवहरति । (सा० भा० ९. ४. २३) 'यञ्ज्ञो' इति पदं नास्ति 'क-ग-च' पुस्तकेषु ।

‡ "अभिषवसमये सोमोपसर्गायोपयुक्ता आप 'निग्राभ्याः' इत्युच्यन्ते" (श० ब्रा० सा० भा० ७. ५ २५)

(१) शु० य० अ० ६ क० ३७ ।

प्प्रजायन्ते तदेनमेतस्यै योषाया ऽऋचो होतुः प्प्रजनयति तस्माद्धोतृचमसात् ॥ २५ ॥ (D)

नवमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथ ब्राह्मणे सप्तमः प्रपाठकः ॥७॥ कण्डिकासंख्या ॥११४॥

इति नवमोऽध्यायः ॥ ९ ॥

अध्वरनाम तृतीयं ‡ काण्डं समाप्तम् ॥ ३ ॥



‡ अस्मिन् काण्डे कण्डिकासंख्या ॥ ८५९ ॥

(D) एतद्ब्राह्मणस्थानि विना अन्यत्राऽप्युपलभ्यन्ते यथा— का॰ श॰ ४. ९. ४. मै॰ सं॰ ४. ६ ४, तै॰ सं॰ ६ ४. ४ ।

# अथ ग्रहनामकं चतुर्थं काण्डम् * ॥

अस्मिन् काण्डे प्रतिपाद्या विषयाः— सवनत्रयगतं कर्म, षोडश्यादिसंस्था, द्वादशाहः, त्रिरात्रा-हीनदक्षिणा, सत्रधर्माः ।

[ उपांशुग्रहः, क्षुल्लकाभिप्लवश्च ]

॥ ॐ ॥ प्राणो ह वा ऽअस्योपाꣳशुः । व्यान-ऽउपाꣳशुसवन ऽउदान ऽएवाऽन्तर्यामः ॥ १ ॥ अथ यस्मादुपाꣳशुर्नाम । अꣳशुर्वै नाम ग्रहः स प्रजापतिस्तस्यैष प्राणस्तद्यदस्यैष प्राणस्तस्मादुपाꣳशुर्नाम ॥ २ ॥ तं बहिष्पवित्राद् गृह्णाति । पराञ्चमेवाऽस्मिन्नेतत्प्राणन्दधाति सोऽस्याऽयं पराङेव प्राणो निर्दहति तमꣳशुभिः पावयति पूतोऽसदिति षड्भिः पावयति षड्वा ऽऋतव ऽऋतुभिरे-वैनमेतत्पावयति ॥३॥ तदाहुः । यदꣳशुभिरुपाꣳशुं पुनाति सर्वे सोमाः पवित्रपूता ऽअथ केनाऽस्याऽꣳशवः पूता भवन्तीति ॥ ४ ॥ † तानुप निवपति । [1]यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहेति तदस्य स्वाहाकारेणैवाऽꣳशवः पूता भवन्ति सर्वं वा ऽएष ग्रहः सर्वेषाꣳ हि सवनानाꣳ रूपम् ॥ ५ ॥

---

* काण्वशतपथे काण्डमिदं पञ्चमतया परिणतम् ।

† 'यत्त इत्यात्ताꣳशोमे निदधाति' ( का० श्रौ० सू० ९ ४ २६ )

( १ ) शु० सं० अ० ७ कं० २ । मन्त्रोऽयं ( तै० सं० ३ ३ ३ २ ) पठित ।

देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्य ऽआसङ्गा-द्बिभयाञ्चक्रुस्ते होचुः सꣳस्थापयाम यज्ञं यदि नोऽसुररक्षसान्यासजेयुः सꣳस्थित ऽएव नो यज्ञः स्यादिति ॥ ६ ॥ ते प्रातः सवन ऽएव । सर्वं यज्ञꣳ समस्थापयन्नेतस्मिन्नेव ग्रहे यजुष्टः प्रथमे स्तोत्रे सामतः प्रथमे शस्त्र ऽऋक्तस्तेन सꣳस्थितेनैवाऽत ऽऊर्द्ध्वं यज्ञेना-ऽऽचरन्त्स ऽएषोऽप्येतर्हि तथैव यज्ञः सन्तिष्ठत ऽएत-स्मिन्नेव ग्रहे यजुष्टः प्रथमे स्तोत्रे सामतः प्रथमे शस्त्र-ऽऋक्तस्तेन सꣳस्थितेनैवाऽत ऽऊर्द्ध्वं यज्ञेन चरति ॥ ७ ॥

* स वा ऽअष्टौकृत्वोऽभिषुणोति । अष्टाक्षरा वै गायत्री गायत्रं प्रातःसवनं प्रातःसवनमेवैतत्क्रियते ॥ ८ ॥ † स गृह्णाति । 'वाचस्पतये पवस्वे'ति प्राणो वै वाचस्पतिः प्राण ऽएष ग्रहस्तस्मादाह वाचस्पतये पवस्वेति 'वृष्णो-ऽअꣳशुभ्यां गभस्तिपूत' ऽइति सोमाऽꣳशुभ्याꣳ ह्येनं पावयति तस्मादाह वृष्णो ऽअꣳशुभ्यामिति गभस्ति-पूत ऽइति पाणी वै गभस्ती पाणिभ्याꣳ ह्येनं पावयति ॥ ९ ॥ अथैकादशकृत्वोऽभिषुणोति । एकादशाक्षरा वै त्रिष्टुप्त्रैष्टुभं माध्यन्दिनꣳ सवनं माध्यन्दिनमेवैतत्सवनं क्रियते ॥ १० ॥ स गृह्णाति । देवो देवेभ्यः पवस्वे'ति

---

* का० श्रौ० सू० ९ ४ १५ ।

† "उपांशु च गृह्णाति 'वाचस्पतये देवो देवेभ्यो मधुमती'रिति" (का० श्रौ० सू० ९ ४ २१)।

(१) यु० सं० अ० ७ क० १। (२) यु० सं० अ० ७ क० १। (३) यु० सं० अ० ७ क० १।

देवा ह्येष देवेभ्यः पवते 'येषां भागोऽसी'ति तेषामु ह्येष भागः ॥ ११ ॥ अथ द्वादशकृत्वोऽभिषुणोति । द्वादशाक्षरा वै जगती जागतं तृतीयसवनं तृतीयसवनमेवैतत्क्रियते ॥ १२ ॥ स गृह्णाति । 'मधुमतीर्न ऽइषस्कृधी'ति रसमेवाऽस्मिन्नेतद्दधाति स्वदयत्येवैनमेतद्देवेभ्यस्तस्मादेष हतो न पूयत्यथ यज्जुहोति सꣳस्थापयत्येवैनमेतत् ॥ १३ ॥ * अष्टावष्टौकृत्वः । ब्रह्मवर्चसकामस्याऽभिषुणुयादित्याहुरष्टाक्षरा वै गायत्री ब्रह्म गायत्री ब्रह्मवर्चसी हैव भवति ॥ १४ ॥ तच्चतुर्विꣳशतिं कृत्वोऽभिषुतं भवति । चतुर्विꣳशतिर्वै संवत्सरस्याऽर्द्धमासाः संवत्सरः प्रजापतिः प्रजापतिर्यज्ञः स यावानेव यज्ञो यावत्यस्य मात्रा तावन्तमेवैतत्सꣳस्थापयति ॥ १५ ॥ † पञ्च–पञ्चकृत्वः । पशुकामस्याऽभिषुणुयादित्याहुः पाङ्क्ताः पशवः पशूनेवाऽवरुन्धे पञ्च वा ऽऋतवः संवत्सरस्य संवत्सरः प्रजापतिः प्रजापतिर्यज्ञः स यावानेव यज्ञो यावत्यस्य मात्रा तावन्तमेवैतत्सꣳस्थापयति सो ऽएषा मीमाꣳसैवेतरं त्वेव क्रियते ॥ १६ ॥ ‡ तं गृहीत्वा परिमार्ष्टि । नेद्वयवश्चोतदिति तन्न सादयति प्राणो ह्यस्यैष तस्मादयमसन्नः प्राणः सञ्चरति यदीत्वभिचरेदथैनꣳ सादये'दमुष्य त्वा प्राणꣳ सादयामी'ति तथाऽऽह तस्मिन्न पुनरस्ति यन्ना-

(१) शु० सं० अ० ७ क० १। (२) शु० सं० अ० ७ क० २।

* का० श्रौ० सू० ९ ४ १५।

† का० श्रौ० सू० ९ ४ १६।

‡ का० श्रौ० सू० ९ ४ २७–२८।

ऽनुसृजति तेनो ऽअद्ध्वर्य्युश्च यजमानश्च ज्योग्जीवतः ॥ १७ ॥ अथो ऽअप्प्येवैनं दध्यात् । अमुष्य त्वा प्राणमपिदधामीति तथाऽऽह तस्मिन्न पुनरस्ति यन्न सादयति तेनो प्प्राणान्न लोभयति ॥ १८ ॥ स वा ऽअन्तरेव स'न्त्स्वाहे'ति करोति । देवा ह वै बिभयाञ्चक्रुर्य्यद्वै नः पुरैवाऽस्य ग्रहस्य होमादसुररक्षसानीमं ग्रहं न हन्युरिति तमन्तरेव सन्तः स्वाहाकारेणाऽऽजुहवुस्तः हुतमेव सन्त-मग्नावजुहवुस्तथो ऽएवैनमेष ऽएतदन्तरेव सन्त्स्वाहाकारेण जुहोति तः हुतमेव सन्तमग्नौ जुहोति ॥ १९ ॥ अथोप-* निष्क्रामति । 'उर्व्वन्तरिक्षमन्वेमी'त्यन्तरिक्षं वा ऽअनु रक्षश्चरत्यमूलमुभयतः परिच्छिन्नं यथाऽयं पुरुषोऽमूल-ऽउभयतः परिच्छिन्नोऽन्तरिक्षमनुचरत्येतद्वै यजुर्ब्रह्म रक्षोहा स ऽएतेन ब्रह्मणाऽन्तरिक्षमभयमनाष्ट्रं कुरुते ॥ २० ॥ अथ वरं वृणीते । बलवद्ध वै देवा ऽएतस्य ग्रहस्य होमं प्रेप्सन्ति तेऽस्मा ऽएतं वरः समर्द्धयन्ति क्षिप्रे न ऽइमं गृहं जुहवदिति तस्माद्वरं वृणीते ॥ २१ ॥ † स जुहोति । 'स्वाङ्कृतोऽसी'ति प्राणो वा ऽअस्यैष ग्रहः स स्वयमेव कृतः स्वयं जातस्तस्मादाह स्वाङ्कृतोऽसीति 'विश्वेभ्य ऽइन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्य' ऽइति सर्वाभ्यो ह्येष प्रजाभ्यः स्वयं जातो 'मनस्त्वाष्ट्वि'ति प्रजापतिर्वै

* का० श्रौ० सू० ९ ४ ३० ।

† का० श्रौ० सू० ९ ४ ३३-३४ ।

(१) शु० सं० अ० ७ क० ३। (२) शु० सं० अ० ७ क० ३। (३) शु० सं० अ० ७ क० ३। (४) शु० सं० अ० ७ क० ३। (५) शु० सं० अ० ७ क० ३।

मनः प्रजापतिष्षष्ठ्वाऽअनुतासित्त्येवैतदाह 'स्वाहा त्वा सुभव सूर्यायेति तदवरथ्ठं स्वाहाकारं करोति परां देवताम् ॥ २२ ॥ अमुष्मिन्त्वा ऽएतमहौषीत् । य ऽएष तपति सर्वं वा ऽएष तदेनः सर्वस्यैव पराद्ध्यं करोत्यथ यदवरां देवतां कुर्यात्परथ्ठं स्वाहाकारथ्ठं स्याद् हैवाऽमुष्मादादित्यात्परं तस्मादवरथ्ठं स्वाहाकारं करोति परां देवताम् ॥२३॥ अथ हुत्वोर्द्ध्वं ग्रहमुन्मार्ष्टि । पराञ्चमेवाऽस्मिन्नेतत्प्राणं दधात्यथोत्तानेन पाणिना मध्यमे परिधौ प्रागुपमार्ष्टि । पराञ्चमेवाऽस्मिन्नेतत्प्राणं दधाति 'देवेभ्यस्त्वा मरीचिपेभ्य' ऽइति ॥ २४ ॥ अमुष्मिन्त्वा ऽएतं मण्डलेऽहौषीत् । य ऽएष तपति तस्य ये रश्मयस्ते देवा मरीचिपास्तानेवैतत्प्रीणाति त ऽएनं देवाः प्रीताः स्वर्गं लोकमभिवहन्ति ॥ २५ ॥ तस्य वा ऽएतस्य ग्रहस्य । नाऽनुवाक्याऽस्ति न याज्या तम्मन्त्रेण जुहोत्येतेनो हाऽस्यैषोऽनुवाक्यवाञ्भवत्येतेन याज्यवानथ यद्यभिचरेद्योऽस्याऽथ्ठंशुराश्लिष्टः स्याद्वाह्वोर्वोरसि वा वाससि वा * तं जुहुया'देवाथ्ठंशो यस्मै त्वेडे तत्सत्यमुपरिप्रुता भङ्गेन हतोऽसौ फडि'ति यथा ह वै हन्न्यमानानामपधावेदेवमेपोऽभिपूयमाणानाथ्ठं स्कन्दति तथा ह तस्य नैव धावन्नाऽपधावत्परिशिष्यते

---

(१) शु० सं० अ० ७ क० ३। (२) शु० सं० अ० ७ क० ३।

* "यास उरो बाहुषु श्लिष्टमंशुमभिचरन् जुहुयादेवांशविति" (का० श्रौ० सू० ९, ४ ३५)।

(३) शु० सं० अ० ७ क० ३।

यस्मा ऽएवं करोति * तꣳ सादयति 'प्राणाय त्वे'ति प्राणो ह्यस्यैषꣳ ॥ २६ ॥ दक्षिणार्द्धे हैके सादयन्ति । एताꣳ ह्येष दिशमनु सञ्चरतीति तदु तथा न कुर्य्यादुत्तरार्द्ध-ऽएवैनꣳ सादयेन्नो ह्येतस्या ऽआहुतेः का चन पराऽस्ति तꣳ सादयति प्राणाय त्वेति प्राणो ह्यस्यैषः ॥ २७ ॥ † अथोपाꣳशुसवनमादत्ते । ते न दशाभिर्न पवित्रेणोप-स्पृशति यथा ह्यद्भिः प्राणिक्तमेवं तद्यद्यꣳशुराश्लिष्टꣳ स्यात्पाणिनैव प्रध्वꣳस्योदञ्चमुपनिपादयेद् 'व्यानाय त्वे'ति व्यानो ह्यस्यैषः ॥ २८ ॥ (A)

प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

[ अन्तर्यामग्रहः ]

प्राणो ह वा ऽअस्योपाꣳशुः । व्यान ऽउपाꣳशुस-वन ऽउदान ऽएवाऽन्तर्य्याम् ॥ १ ॥ अथ यस्मादन्तर्य्यामो नाम । यो वै प्राणः स ऽउदानः स व्यानस्तमेवाऽस्मि-न्नेतत्पराञ्चं प्राणं दधाति यदुपाꣳशुं गृह्णाति तमेवाऽस्मिन्ने-तत्प्रत्यञ्चमुदानं दधाति यदन्तर्य्यामं गृह्णाति सोऽस्या-ऽयमुदानोऽन्तरात्मन्यतस्तद्यदस्यैषोऽन्तरात्मन्यतो यद्धे-नेनेमाः प्रजा यतास्तस्मादन्तर्य्यामो नाम ॥ २ ॥ तमन्तः

* का० श्रौ० सू० ९.४.३७ ।

( १ ) शु० सं० अ० ७ कं० ३ ।

† का० श्रौ० सू० ९.४.३८ ।

( २ ) शु० सं० अ० ७ कं० ३ ।

(A) एतद्ब्राह्मणस्था त्रिसया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५.१.१, क० सं० २६.१, कपि० सं० ४१.४, तै० स० ६.४.५ । मै० सं० ४.५.५ ।

पवित्राद्गृह्णाति। प्रत्युश्चमेवाऽस्मिन्नेतदुदानं दधाति सोऽस्या-ऽयमुदानोऽन्तरात्मन्हि त ऽएतेनो ह्यस्याऽऽप्युपाꣳशुरन्तः पवित्राद्गृहीतो भवति समानꣳ ह्येतद्यदुपाꣳश्वन्तर्यामौ प्राणोदानौ ह्येतेनो हैवाऽस्यैषोऽपीतरेषु ग्रहेष्वनाक्षिन्नवति ॥ ३ ॥ अथ यस्मात्सोमं पवित्रेण पावयति। यत्र वै सोमः स्वं पुरोहितं बृहस्पतिं जिज्यौ तस्मै पुनर्ददौ तेन सꣳश-शाम तस्मिन्पुनर्ददुष्यासेवाऽतिशिष्टमेनो यदीत्वनं ब्रह्म-ज्यानायाऽभिदध्यौ ॥ ४ ॥ तं देवाः पवित्रेणाऽपावयन्। स मेध्यः पूतो देवानाꣳ हविरभवत्तथो ऽएवैनमेष ऽएतत्प-वित्रेण पावयति स मेध्यः पूतो देवानाꣳ हविर्भवति ॥ ५ ॥ तद्यदुपयामेन ग्रहा गृह्यन्ते। इयं वा ऽअदितिस्त-स्या ऽअदः प्रायणीयः ऽहविरसावादित्यश्चरुस्तद्वैतत्पुरेव सुत्यायै सा हेयं देवेषु सुत्यायामपि त्वमीपेऽस्त्वेव मेऽपि प्रसुते भाग ऽइति ॥ ६ ॥ ते ह देवा ऽऊचुः। व्यादि-ष्टोऽयं देवताभ्यो यज्ञस्त्वयैव ग्रहा गृह्यन्तां देवताभ्यो हूयन्तामिति तथेति सोऽस्या ऽएष प्रसुते भागः ॥ ७ ॥ तद्यदुपयामेन ग्रहा गृह्यन्ते। इयं वा ऽउपयाम ऽइयं वा-ऽइदमन्नाद्यमुपयच्छति पशुभ्यो मनुष्येभ्यो वनस्पतिभ्य-ऽइतो वा ऽऊर्ध्वा देवा दिवि हि देवाः ॥ ८ ॥ तद्यदुप-यामेन ग्रहा गृह्यन्ते। अनयैव तद्गृह्णन्तेऽथ यद्योनौ साद-यतीयं वा ऽअस्य सर्वस्य योनिरस्यै वा ऽइमाः प्रजाः प्रजाताः ॥ ९ ॥ तं वा ऽएतः। रेतो भूतः सोममृत्विजो बिभ्रति यदा ऽअयोनौ रेतः सिच्यते प्र वै तन्मी-

यतेऽथ यद्योनौ सादयत्यस्यामेव तत्सादयति ॥ १० ॥ प्राणोदानौ ह वा ऽअस्यैतौ ग्रहौ । तयोरुदितेऽन्यतरं जुहोत्यनुदितेऽन्यतरं प्राणोदानयोर्व्यावृत्त्यै प्राणोदानावेवैतद्व्याकरोति तस्मादेतौ समानावेव सन्तौ नानेवाऽऽचक्षते प्राण ऽइति चोदान ऽइति च ॥ ११ ॥ अहोरात्रे ह वाऽअस्यैतौ ग्रहौ । तयोरुदितेऽन्यतरं जुहोत्यनुदितेऽन्यतरमहोरात्रयोर्व्यावृत्त्या ऽअहोरात्रे ऽएवैतद्व्याकरोति ॥ १२ ॥ अहः सन्तमुपांशुम् । तꣳ रात्रौ जुहोत्यहरेवैतद्रात्रौ दधाति तस्मादपि सुतमिस्रायामुपैव किञ्चित्ख्यायते ॥ १३ ॥ रात्रिꣳ सन्तमन्तर्यामम् । तमुदिते जुहोति रात्रिमेवैतदहन्दधाति तेनो हाऽसावादित्य ऽउद्यन्नेवेमाः प्रजा न प्रदहति तेनेमाः प्रजास्त्राताः ॥ १४ ॥ * अथाऽतो गृह्णात्येव । 'उपयामगृहीतोऽसी'त्युक्त ऽउपयामस्य बन्धु'रन्तर्यच्छ मघवन्पाहि सोममि'तीन्द्रो वै मघवानिन्द्रो यज्ञस्य नेता तस्मादाह मघवन्निति पाहि सोममिति गोपाय सोममित्येवैतदा'होरुष्य राय ऽएषो यजस्वे'ति पशवो वै रायो गोपाय पशूनित्येवैतदाहेषो यजस्वेति प्रजा वाऽइषस्ता ऽएवैतद्यायजूकाः करोति ता ऽइमाः प्रजा यजमाना ऽअर्चन्त्यः श्राम्यन्त्यश्चरन्ति ॥ १५ ॥ 'अन्तस्ते द्यावापृथिवी दधामि । 'अन्तर्दधाम्युर्वन्तरिक्षम् । सजू-

---

* "उदितेऽन्तर्यामग्रहणमुपयामगृहीत इति" ( का० श्रौ० सू० ९. ६. १ )

( १ ) शु० सं० अ० ७ क० ४ । ( २ ) शु० सं० अ० ७ क० ४ । ( ३ ) शु० सं० अ० ७ क० ४ । ( ४ ) शु० सं० अ० ७ क० ५ । ( ५ ) शु० सं० अ० ७ क० ५ ।

देवैभिरवरैः परैश्चे॑ति तदेनं वैश्वदेवं करोति तद्यदेनेनेमाः प्रजाः प्राणन्त्यश्चोदनन्त्यश्चाऽन्तरिक्षमनुचरन्ति तेन वैश्वदेवो॑ऽन्तर्य्यामे मघवन्मादयस्वे॑तीन्द्रो वै मघवानिन्द्रो यज्ञस्य नेता तस्मादाह मघवन्नित्यथ यदन्तरिति गृह्णात्यन्तस्त्वाऽऽमन्दध ऽइत्येवैतदाह ॥ १६ ॥ तं गृहीत्वा * परिमार्ष्टि। नेद्व्यवश्चोतदिति तं न सादयत्युदानो ह्यस्यैष तस्मादयमसन्न ऽउदानः सञ्चरति यदीत्वभिचरेदुथैनः सादयेदमुष्यत्वोदानः सादयामीति ॥ १७ ॥ स यद्युपाᳫंशुः सादयेत्। अथैनः सादयेद्यद्युपाᳫंशुं न सादयेन्नैनः सादयेद्यद्युपाᳫंशुमपिदध्यादप्येनं दध्याद्यद्युपाᳫंशुं नाऽपिदध्यान्नैनमपिदध्याद्यथोपाᳫंशोः कर्म्म तथैतस्य समानᳫं ह्येतद्यदुपाᳫंश्वन्तर्य्यामौ प्राणोदानौ हि ॥ १८ ॥ † ताऽउ ह चरकाः। नानैव मन्त्राभ्यां जुह्वति प्राणोदानौ वाऽअस्यैतौ नानावीर्य्यौ प्राणोदानौ कुर्म्म ऽइति वदन्तस्तदु तथा न कुर्य्यान्मोहयन्ति ह ते यजमानस्य प्राणोदानावपीद्वा ऽएनं तूष्णीं जुहुयात् ॥१९॥ स यद्वा ऽउपाᳫंशुं मन्त्रेण जुहोति। तदेवाऽस्यैषोऽपि मन्त्रेण हुतो भवति किमु तत्तूष्णीं जुहुयात्समानᳫं ह्येतद्यदुपाᳫंश्वन्तर्यामौ प्राणोदानौ हि ॥ २० ॥ स येनैवोपाᳫंशुं मन्त्रेण जुहोति।

---

(१) शु॰ सं॰ अ॰ ७ क॰ ५।

* का॰ श्रौ॰ सू॰ ९ ६ ३।

† तै॰ सं॰ १ ४. २. ३, मै॰ सं॰ १ ३. ४, काठ॰ ४. १, संहितासु पृथगेव होममन्त्रा उक्ताः।

तेनैवैतं मन्त्रेण जुहोति 'स्वाङ्कृतोऽसि विश्वेभ्य ऽइन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाष्टु स्वाहा त्वा सुभव सूर्यायेत्युक्तो यजुषो बन्धुः ॥२१॥ अथ हस्ताऽवाश्वं ग्रहमवमार्ष्टि । इदं वा ऽउपाᳬशुᳬ हुत्वोर्द्ध्वमुन्माष्टेर्यथाऽत्राऽवाश्वमवमार्ष्टि प्रत्यञ्चमेवाऽस्मिन्नेतदुदानं दधाति ॥ २२ ॥ अथ नीचा पाणिना । मध्यमे परिधौ प्रत्यगुपमार्ष्टीदं वा ऽउपाᳬशुᳬ हुत्वोत्तानेन पाणिना मध्यमे परिधौ प्रागुपमाष्टेर्यथाऽत्र नीचा पाणिना मध्यमे परिधौ प्रत्यगुपमार्ष्टि प्रत्यञ्चमेवाऽस्मिन्नेतदुदानं दधाति 'देवेभ्यस्त्वा मरीचिपेभ्य' ऽइति सोऽसावेव बन्धुः ॥ २३ ॥ तं प्रत्याक्रम्य * सादयति । 'उदानाय त्वे'त्युदानो ह्यस्यैष तानि वै सᳬस्पृष्टानि सादयति प्राणोदानावेवैतत्सᳬस्पर्शयति प्राणोदानान्सन्दधाति ॥ २४ ॥ तानि वा ऽअनिड्व्यमानानि शेरे । आ तृतीयसवनात्तस्मादिमे मनुष्याः स्वपन्ति तानि पुनस्तृतीयसवने प्रयुज्यन्ते तस्मादिमे मनुष्याः सुप्त्वा प्रबुध्यन्ते तेऽनिशिताश्चराऽचरा यज्ञस्यैवैतद्विधामनु वयऽइव ह वै यज्ञो विधीयते तस्योपाᳬश्वन्तर्य्यामावेव पक्षावात्मोपाᳬशुसवनः ॥ २५ ॥ तानि वा ऽअनिड्व्यमानानि शेरे । आ तृतीयसवनात्तायते यज्ञ ऽएति वै तद्यत्तायते तस्मादिमानि वयाᳬसि विगृह्य पक्षावनायुवानानि पतन्ति

(१) शु० सं० अ० ७ क० ६ । (२) शु० सं० अ० ७ क० ६ ।
* का० श्रौ सू० ९ । ६ । ५ ।
(३) शु० सं० अ० ७ क० ६ ।

तानि पुनस्तृतीयसवने प्रयुज्यन्ते तस्मादिमानि वयाᳪंसि समासं पक्षावायुवानानि पतन्ति यज्ञस्यैवैतद्विधामनु ॥ २६ ॥ *इयद्ध ह वा उपाᳪंशुः । प्राणो ह्युपाᳪंशुरिमाᳪं ह्येव प्राणन्नभिप्राणित्यसावेवान्तर्याम उदानो ह्यन्तर्यामोऽमुᳪं ह्येव लोकमुदनन्नभ्युदनित्यन्तरिक्षमेवोपाᳪंशुसवनो व्यानो ह्युपाᳪंशुसवनोऽन्तरिक्षᳪं ह्येव व्यनन्नभिव्यनिति ॥ २७ ॥ (B)

प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ ऐन्द्रवायवग्रहः ]

वाग्घ वा अस्यैन्द्रवायवः । एतन्न्वध्यात्ममिन्द्रो ह यत्र वृत्राय वज्रं प्रजहार सोऽबलीयान्मन्यमानो नाऽस्तृपीतीव विभ्यन्निलयाञ्चक्रे तदेवाऽपि देवा अपन्न्यलयन्त ॥ १ ॥ ते ह देवा ऊचुः । न वै हतं वृत्रं विद्म न जीवं हन्त न एको वेत्तु यदि हतो वा वृत्रो जीवति वेति ॥ २ ॥ ते वायुमब्रुवन् । अयं वै वायुर्योऽयं पवते वायो त्वमिदं विद्धि यदि हतो वा वृत्रो जीवति वा त्वं वै नऽआशिष्ठोऽसि यदि जीविष्यति त्वमेव क्षिप्रं पुनरागमिष्यसीति ॥ ३ ॥ स होवाच । किम्मे ततः स्यादिति प्रथमवषट्कार एव ते सोमस्य राज्ञ इति तथेत्येयाय वायुरैद्धतं

* अत्र शतम् २३०० ।

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ५ १ २, कठ० सं० २७ १. २, कपि० सं० ४१. ९, तै० सं० ६. ४. ६, मै० सं० ४ ५. ६ ।

व्वृत्रः स होवाच हतो व्वृत्रो यद्ध ते कुर्य्यात तत्कुरुतेति ॥ ४ ॥ ते देवा ऽअभ्यसृज्यन्त । यथा वित्तिं वेत्स्यमाना-ऽएवः स यमेकोऽलभते स ऽएकदेवत्योऽभवद्यं द्वौ स द्विदेवत्यो 'यं बहवः स बहुदेवत्यस्तद्यदेनं 'पात्रैर्व्यगृह्णत तस्माद्ग्रहा नाम ॥ ५॥ स ऽएषामापूयत् । स ऽएनाञ्छुक्तः पूतिरभिववौ स नाऽलमाहुत्या ऽआस नाऽलं भक्षाय ॥ ६ ॥ ते देवा व्वायुमब्रुवन् । व्वायविमं नो व्विवाहीमं नः स्वदयेति स होवाच किम्मे ततः स्यादिति त्वय्यैवैतानि पात्राण्याचक्षीरन्निति तथेति होवाच यूयं तु मे सच्च्युप-वातेति ॥ ७ ॥ तस्य देवाः । यावन्मात्रमिव गन्धस्याऽप-जघ्नुस्तं पशुष्वदधुः स ऽएष पशुषु कुणपगन्धस्तस्मात्कुण-पगन्धान्नाऽपिगृह्णीत सोमस्य हैष राज्ञो गन्धः ॥ ८ ॥ नो ऽएव निष्ठीवेत् । तस्माद्यद्यप्यासक्त ऽइव मन्येता-ऽभिवातं परीयाच्छ्रीर्वै सोमः पाप्मा यक्ष्मः स यथा श्रेयस्यायति पापीयान्प्रत्यवरोहेदेवः हाऽस्मा-द्यक्ष्मः प्रत्यवरोहति ॥ ९ ॥ अथेतरं व्वायुर्व्यवात् । तद-स्वदयत्ततोऽलमाहुत्या ऽआसालं भक्षाय तस्मादेतानि नानादेवत्यानि सन्ति व्वायव्यानीत्याचक्षते सोऽस्यैष प्रथमवषट्कारश्च सोमस्य राज्ञ ऽएतान्यु ऽएनेन पात्राण्याचक्षते ॥ १० ॥ इन्द्रो ह व्वा ऽईक्षाञ्चक्रे । व्वायुर्वै नोऽस्य यज्ञस्य भूयिष्ठभाग्यस्य प्रथमवषट्कारश्च सो-मस्य राज्ञ ऽएतान्यु ऽएनेन पात्राण्याचक्षते हन्ताऽस्मिन्न-पित्वमिच्छा ऽइति ॥ ११ ॥ स होवाच । व्वायवा

माऽस्मिन्गृहे भजेति किं ततः स्यादिति निरुक्तमेव ब्राग्वदेदिति निरुक्तश्चेद्वाग्वदेदात्वां भजामीति तत ऽएष ऽऐन्द्रवायवो गृहोऽभवद्वायव्यो हैव ततः पुरा ॥ १२ ॥ स ऽइन्द्रोऽब्रवीत् । अर्द्धम्मेऽस्य गृहस्येति तुरीयमेव त ऽइति वायुरर्द्धमेव म ऽइतीन्द्रस्तुरीयमेव त ऽइति वायुः ॥ १३ ॥ [ अर्धप्रपाठकः ॥ ६८ ॥ ] तौ प्रजापतिं प्रतिप्रश्नमेयतुः । स प्रजापतिर्गृहं द्वेधा चकार स होवाचेदं वायोरित्यथ पुनरर्द्धं द्वेधा चकार स होवाचेदं वायोरितीदं तवेतीन्द्रं तुरीयमेव भाजयाञ्चकार यद्वै चतुर्थं तत्तुरीयं ततऽएष ऽऐन्द्रतुरीयो गृहोऽभवत् ॥ १४ ॥ तस्य वा ऽएतस्य गृहस्य द्वे पुरोरुचौ वायव्यैव पूर्वैन्द्रवायव्युत्तरा द्वे ऽअनुवाक्ये वायव्यैव पूर्वैन्द्रवायव्युत्तरा द्वौ प्रैषौ वायव्य ऽएव पूर्व ऽऐन्द्रवायव ऽउत्तरो द्वे याज्ये वायव्यैव पूर्वैन्द्रवायव्युत्तरैवमेनं तुरीयं–तुरीयमेव भाजयाञ्चकार ॥ १५ ॥ स होवाच । तुरीयं-तुरीयं चेन्मामभीभजुस्तुरीयमेव तर्हि वाङ्निरुक्तं वदिष्यतीति तदेतत्तुरीयं वाचो निरुक्तं यन्मनुष्या वदन्त्यथैतत्तुरीयं वाचोऽनिरुक्तं यत्पशवो वदन्त्यथैतत्तुरीयं वाचोऽनिरुक्तं यद्वयाꣳसि वदन्त्यथैतत्तुरीयं वाचोऽनिरुक्तं यदिदं क्षुद्रꣳ सरीसृपं वदति ॥ १६ ॥ तस्मादेतदृषिणाभ्यनूक्तम् । 'चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता

(१) ऋ० सं० २. ३. २२ ।

नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ती'ति ॥१७॥ * अथाऽतो गृह्णात्येव । '(१)आ वायो भूप शुचिपा ऽउप नः सहस्रं ते नियुतो विश्ववार । उपो ते ऽअन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयं वायवे त्वे'ति ॥ १८ ॥ † अथाऽपगृह्य पुनरानयति । '(२)इन्द्रवायू ऽइमे सुता ऽउप प्रयोभिरागतम् । इन्दवो वामुशन्ति हि । उपयामगृहीतोऽसि वायव ऽइन्द्र वायुभ्यान्त्वैष ते योनिः सजोषोभ्यान्त्वे'ति सादयति स यदाह सजोषोभ्यान्त्वेति यो वै वायुः स ऽइन्द्रो य ऽइन्द्रः स वायुस्तस्मादाहैष ते योनिः सजोषोभ्यान्त्वेति ॥१९॥(C)

प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ मैत्रावरुणग्रहः ]

क्रतुदक्षौ ह वा ऽअस्य मित्रावरुणौ । एतन्न्वध्यात्मं स यदेव मनसा कामयत ऽइदं मे स्यादिदं कुर्वीयेति स ऽएव क्रतुरथ यदस्मै तत्समृध्यते स दक्षो मित्र ऽएव क्रतुर्वरुणो दक्षो ब्रह्मैव मित्रः क्षत्रं वरुणोऽभिगन्तैव ब्रह्म कर्त्ता क्षत्रियः ॥ १ ॥ ते हैते ऽअग्रे नानेवाऽऽसतुः । ब्रह्म च क्षत्रं च ततः शशाकैव ब्रह्म मित्र ऽऋते क्षत्राद्वरुणात्स्थातुम् ॥ २ ॥ ऋते ब्रह्मणो मित्राद्यद्ध किंच वरुणः कर्म्म

* का० श्रौ० सू० ९ ६ ६ ।
† का० श्रौ० सू० ९ ६ ७ ।
(१) शु० ग० अ० ७ क० ७ । (२) शु० सं० अ० ७ क० ८ ।
(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—काण्व० ब्रा० ५. १. १, का० सं० २७. १, कपि० सं० ६. ४. ७, मै० सं० ४ ५ ८ ।

चक्रेऽप्रसूतं ब्रह्मणा मित्रेण न हैवाऽस्मै तत्समानृधे ॥ ३ ॥ स क्षत्रं वरुणः । ब्रह्म मित्रमुपमन्त्रयाञ्चक्र उप-मावर्त्तस्व, संसृजावहै पुरस्त्वा करवै त्वत्प्रसूतः कर्म्म करवा इति तथेति तौ समसृजेतां तत एष मैत्रावरुणो ग्रहोऽभवत् ॥ ४ ॥ सो एव पुरोधा । तस्मान्न ब्राह्मणः सर्वस्येव क्षत्रियस्य पुरोधां कामयेत सं ह्येतौ सृजेते सुकृतं च दुष्कृतञ्च नो एव क्षत्रियः सर्वमिव ब्राह्मणं पुरोदधीत सं ह्येवैतौ सृजेते सुकृतञ्च दुष्कृतञ्च स यत्ततो वरुणः कर्म्म चक्रे प्रसूतं ब्रह्मणा मित्रेण सं हैवाऽस्मै तदानृधे ॥ ५ ॥ तत्तदुवक्लृप्तमेव । यद् ब्राह्मणोऽराजन्यः स्याद्यद्यु राजानं लभेत समृद्धं तदेतद्ध त्वेवाऽनवक्लृप्तं यत्क्षत्रियो-ऽब्राह्मणो भवति यद्ध किञ्च कर्म्म कुरुतेऽप्रसूतं ब्रह्मणा मित्रेण न हैवाऽस्मै तत्समृध्यते तस्माद् क्षत्रियेण कर्म्म करिष्यमाणेनोपसर्त्तव्य एव ब्राह्मणः सं हैवाऽस्मै तद् ब्रह्मप्रसूतं कर्म्मर्ध्यते ॥ ६ ॥ अथाऽतो * गृह्णात्येव । 'अयं वाम्मित्रावरुणा सुतः सोम ऋतावृधा । ममेदिह श्रुतः हवम् । उपयामगृहीतोऽसि मित्रावरुणाभ्यान्त्वे'ति ॥ ७ ॥ तं पयसा श्रीणाति । तद्यत्पयसा श्रीणाति वृत्रो वै सोम आसीत्तं यत्र देवा अघ्नँस्तं मित्रमब्रुवँस्त्वमपि हँसीति स न चकमे सर्वस्य वा अहं मित्रमस्मि न मित्रः सन्नमित्रो भविष्यामीति तं वै त्वा यज्ञादन्तरेष्याम-

---

* 'मैत्रावरुणमयं वामिति" (का० श्रौ० सू० ९. ६ ८)।

(१) शु० य० सं० ७ कं० ९।

ऽइत्यहमपि हनिष्मीति होवाच तस्मात्पशवोऽपाऽक्रामन्मित्रः सन्नमित्रोऽभूदिति स पशुभिर्व्यार्ध्यत तमेतद्देवाः पशुभिः समार्धयन्यत्पयसा श्रीणँस्तथो ऽएवैनमेष ऽएतत्पशुभिः समर्धयति यत्पयसा श्रीणाति ॥ ८ ॥ तदाहुः । शश्वद्ध नैव चकमे हन्तुमिति तद्यदेवाऽत्र पयस्तन्मित्रस्य सोम ऽएव वरुणस्य तस्मात्पयसा श्रीणाति ॥ ९ ॥ * स श्रीणाति । 'राया वयꣳ ससवाꣳसो मदेम हव्येन देवा यवसेन गावः । तां धेनुम्मित्रावरुणा युवन्नो विश्वाहा धत्तमनपस्फुरन्तीमेष ते योनिर्ऋतायुभ्यान्त्वे'ति सादयति स यदाहर्त्तायुभ्यान्त्वेति ब्रह्म वा ऽऋतं ब्रह्म हि मित्रो ब्रह्मो ह्यृतं वरुण ऽएवाऽऽयुः संवत्सरो हि वरुणः संवत्सरऽआयुस्तस्मादाहैष ते योनिर्ऋतायुभ्यान्त्वेति ॥१०॥ (D)

प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ आश्विनग्रहः ]

श्रोत्रꣳ ह वा ऽअस्याऽऽश्विनः । तस्मात्सर्वतः परिहारं भक्षयति सर्वतो ह्यनेन श्रोत्रेण शृणोति यत्र वै भृगवो वाऽङ्गिरसो वा स्वर्गं लोकꣳ समाश्नुवत तच्च्यवनो वा † भार्गवश्च्यवनो वाऽङ्गिरसस्तदेव जीर्णिः कृत्यारूपो जहे ॥ १ ॥ शर्यातो ह वा ऽइदं मानवो ग्रामेण

---

* का० श्रौ० सू० ९. ६. ९ ।

( १ ) शु० य० अ० ७ क० १० ।

(D) एतद्ब्राह्मणस्था ऋचः अन्यत्राप्युपलभ्यन्ते यथा— का० सं० ५. १. ४; कठ० सं० २७. ४, कपि० सं० ४२. ४, तै० सं० ६. ४, ८; मै० सं० ४. ५ ।

† अत्राख्यायिकेयं महाभारतस्य वनपर्वण्यप्युपलभ्यते ( अ० १२२-१२५ पृ० १६२-१९६ चि० शा० पूना ) ।

चचार । स तदेव प्रतिवेशो निविविशे तस्य कुमाराः क्रीडन्त इमं जीर्णिं कृत्यारूपमनर्थ्यं मन्यमाना लोष्टैर्विपिपिषुः ॥ २ ॥ स शर्यातिभ्यश्चुक्रोध । तेभ्योऽसंज्ञाश्चकार पितैव पुत्रेण युयुधे भ्राता भ्रात्रा ॥३॥ शर्यातो ह वा ईक्षाश्चक्रे । यत्किमकरं तस्मादिदमापदीति स गोपालाँश्चाविपालाँश्च सह्वयितवा उवाच ॥ ४ ॥ स होवाच । को वोऽद्येह किञ्चिदद्राक्षीदिति ते होचुः पुरुष एवाऽयं जीर्णिः कृत्यारूपः शेते तमनर्थ्यं मन्यमानाः कुमारा लोष्टैर्व्यपिक्षन्निति स विदाश्चकार स वै च्यवन इति ॥ ५ ॥ स रथं युक्त्वा । सुकन्यां शार्यातीमुपाऽधाय प्रसिष्यन्द स आजगाम यत्रर्षिरास तत् ॥ ६ ॥ स होवाच । ऋषे नमस्ते यन्नावेदिषं तेनाहिंसिषमियं सुकन्या तया तेऽपह्नुवे सञ्जानीतां मे ग्राम इति तस्य ह तत एव ग्रामः सञ्जज्ञे स ह तत एव शर्यातो मानव उद्युयुजे नेदपरं हिनसानीति ॥ ७ ॥ अश्विनौ ह वा इदं भिषज्यन्तौ चेरतुः । तौ सुकन्यामुपेयतुस्तस्यां मिथुनमीषाते तन्न जज्ञौ ॥ ८ ॥ तौ होचतुः । सुकन्ये कमिमं जीर्णिं कृत्यारूपमुपशेष आवामनुप्रेहीति सा होवाच यस्मै मां पिताऽदात्नैवाऽहं तं जीवन्तं हास्यामीति तद्धाऽयमृषिराजज्ञौ ॥ ९ ॥ स होवाच । सुकन्ये किं त्वैतदवोचतामिति तस्मा एतद्व्याचचक्षे स ह व्याख्यात उवाच यदि * त्वैतत्पुनर्ब्रवतः सा त्वं ब्रूतान्न वै सुसर्वाविव

* 'त्वैतत्पुनर्ब्रुवत' इति पाठ 'ग घ' पुस्तकयो ।

स्त्थो न सुसमृद्धाविवाऽथ मे पतिं निन्दथ ऽइति तौ यदि त्वाऽब्रवतः केनाऽवमसर्वौ स्वः केनाऽसमृद्धाविति सा त्वं ब्रूतात्पतिं नु मे पुनर्युवाणं कुरुतमथ वां वक्ष्यामीति तां पुनरुपेयतुस्ताᳬ हैतद्देवोचतुः ॥ १० ॥ सा होवाच । न वै सुसर्वाविव स्त्थो न सुसमृद्धाविवाऽथ मे पतिं निन्दथ ऽइति तौ होचतुः केनाऽवमसर्वौ स्वः केनाऽसमृद्धाविति सा होवाच पतिं नु मे पुनर्युवाणं कुरुतमथ वां वक्ष्यामीति ॥ ११ ॥ तौ होचतुः । एतᳬ ह्रदमभ्यवहर स येन वयसा कमिष्यते तेनोदैष्यतीति तᳬ ह्रदमभ्यवजहार स येन वयसा चकमे तेनोदेयाय ॥ १२ ॥ तौ होचतुः । सुकन्ये केनाऽवमसर्वौ स्वः केनाऽसमृद्धाविति तौ हर्षिरेव प्रत्युवाच कुरुक्षेत्रेऽमी देवा यज्ञं तन्वते ते वां यज्ञादन्तर्यन्ति तेनाऽसर्वौ स्त्थस्तेनाऽसमृद्धाविति तौ ह तत ऽएवाऽश्विनौ प्रेयतुस्तावाजग्मतुर्देवान्यज्ञं तन्वानान्त्स्तुते बहिष्पवमाने ॥ १३ ॥ तौ होचतुः । उप नौ ह्वयध्वमिति ते ह देवा ऽऊचुर्न वामुपह्वयिष्यामहे बहु मनुष्येषु सᳬसृष्टमचारिष्टं भिषज्यन्ताविति ॥ १४ ॥ तौ होचतुः । विशीर्ष्णा वै यज्ञेन यजध्व ऽइति कथं विशीर्ष्णेत्युप नु नौ ह्वयध्वमथ वो वक्ष्याव ऽइति तथेति ता ऽउपाऽऽह्वयन्त ताभ्यामेतमाश्विनं ग्रहमगृह्णंस्तावध्वर्यू यज्ञस्याऽभवतां तावेतद्यज्ञस्य शिरः प्रत्यधत्तां तददस्तद्दिवाकीर्त्यानां ब्राह्मणे व्याख्यायते यथा तद्यज्ञस्य शिरः प्रतिदधतुस्तस्मादेष स्तुते

बहिष्पवमाने ग्रहो गृह्यते स्तुते हि बहिष्पवमान ऽआगच्छ-ताम् ॥ १५ ॥ तौ होचतुः । मुख्यौ वा ऽआवां यज्ञस्य स्वो यावद्धूर्य्यौ ऽइह नाविमं पुरस्ताद् ग्रहं पर्य्याहरता-ऽभि द्विदेवत्यानिति ताभ्यामेतं पुरस्ताद् ग्रहं पर्य्याजह्रु-रभि द्विदेवत्याँस्तस्मादेष दशमो ग्रहो गृह्यते तृतीय ऽएव वषट्क्रियतेऽथ यदश्विनावितीमे ह वै द्यावापृथिवी प्रत्य-क्षमश्विनाविमे हीदᳲ सर्वमाश्नुवातां पुष्करस्रजावित्यग्निरे-वाऽस्यै पुष्करमादित्योऽमुष्यै ॥ १६ ॥ अथाऽतो गृह्णात्येव । 'या वां कशा मधुमत्यश्विना सूनृतावती । तया यज्ञं मिमिक्षतम् । उपयामगृहीतोऽस्यश्विभ्यान्त्वैष ते योनि-र्म्माध्वीभ्यान्त्वे'ति सादयति तं वै मधुमत्यर्चा गृह्णाति माध्वीभ्यान्त्वेति सादयति तद्यन्मधुमत्यर्चा गृह्णाति माध्वीभ्यान्त्वेति सादयति ॥ १७ ॥ दध्यङ् ह वा-ऽआभ्यामाथर्वणः । मधु नाम ब्राह्मणमुवाच तदेनयोः प्रियं धाम तदेवैनयोरेतेनोपगच्छति तस्मान्मधुमत्यर्चा गृह्णाति माध्वीभ्यान्त्वेति सादयति ॥ १८ ॥ तानि वा-ऽएतानि । श्लक्ष्णानि पात्राणि भवन्ति * रास्नावमैन्द्रवाय-वपात्रं तत्तस्य द्वितीयᳲ रूपं तेन तद् द्विदेवत्यमजकावं मैत्रा-वरुणपात्रं तत्तस्य द्वितीयᳲ रूपं तेन तद् द्विदेवत्यमौष्ठ्र-माश्विनपात्रं तत्तस्य द्वितीयᳲ रूपं तेन तद् द्विदेवत्यमथ यद-

---

( १ ) शु० सं० अ० ७ क० ११ ।

* का० श्रौ० सू० ९ २. ५-७ ।

श्विनाविति मुख्यौ वा ऽअश्विनावौष्ठ्यमिव वा ऽइदं मुखं तस्मादौष्ठ्यमाश्विनपात्रं भवति ॥ १९ ॥ (E)

प्रथमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति प्रथमोऽध्यायः ॥ १ ॥



[ शुक्रामन्थिग्रहौ ]

चक्षुषी ह वा ऽअस्य शुक्रामन्थिनौ। तद्वा ऽएष ऽएव शुक्रो य ऽएष तपति तद्यदेष ऽएतत्तपति तेनैष शुक्रश्चन्द्रमा ऽएव मन्थी ॥ १ ॥ तछ सक्तुभिः श्रीणाति। तदेनं मन्थं करोति तेनो ऽएष मन्थ्येतौ ह वा ऽआसां प्रजानां चक्षुषी स यद्धैतौ नोदियातां न हैवेह स्वौ चन पाणी निर्जानीयुः ॥ २ ॥ तयोरत्त्वैवाऽन्यतरः। आद्योऽन्यतरोऽस्त्वेव शुक्र ऽआद्यो मन्थी ॥ ३ ॥ तयोरत्त्वैवाऽन्यतरमनु। आद्योऽन्यतरमन्वत्त्वैव शुक्रमन्वाद्यो मन्थिनमनु तौ वा ऽअन्यस्मै गृह्येते ऽअन्यस्मै हूयेते शण्डामर्कावित्यसुररक्षसे ताभ्यां गृह्येते देवताभ्यो हूयेते तद्यथा ॥ ४ ॥ यत्र वै देवाः। असुररक्षसान्यपजघ्निरे तदेतावेव न शेकुरपहन्तुं यद्ध स्म देवाः किञ्च कर्म्म कुर्वते तद्ध स्म मोहयित्वा क्षिप्र ऽएव पुनरपद्रवतः ॥ ५ ॥ ते ह देवा ऊचुः। उपजानीत यथेमावपहनामहाऽइति ते होचुर्गृह्णानेवाऽऽभ्यां ग्रहाम तावभ्युपैव्यतस्तौ

(1) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५ १ ५, काठ० सं० १७ ५, कपि० सं० ४२ ५, तै० सं० ६.४ ६, मै० सं० ४ ६ १।

स्वीकृत्याऽपहनिष्यामह ऽइति ताभ्यां गृहौ जगृहुस्तावभ्यवैतां तौ स्वीकृत्याऽपाऽघ्नत तस्माच्छण्डामर्काभ्यामिति गृह्येते देवताभ्यो ह्रूयेते ॥ ६ ॥ अपि होवाच याज्ञवल्क्यः । नो स्विद्देवताभ्य ऽएव गृह्णीयामा३ विजितरूपमिव हीदमिति तद्वै स तन्मीमाꣳसामेव चक्रे नेत्तु चकार ॥ ७ ॥ इमामु हैके शुक्रस्य पुरोरुचं कुर्वन्ति । 'अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमान' ऽइति तदेतस्य रूपं कुर्म्मो य ऽएष तपतीति यदाह ज्योतिर्जरायुरिति ॥ ८ ॥ इमां त्वेव शुक्रस्य पुरोरुचं कुर्यात् । *'तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदꣳ स्वर्विदमि'त्यत्ता ह्येतमन्वत्ता हि ज्येष्ठस्तस्मादाह ज्येष्ठतातिं बर्हिषदꣳ स्वर्विद'म्प्रतीचीनं वृजनं दोहसे धुनिमाशुं जयन्तमनु यासु वर्द्धसे । उपयामगृहीतोऽसि शण्डाय त्वैष ते योनिर्वीरतां पाही'ति सादयत्यत्ता ह्येतमन्वत्ता हि वीरस्तस्मादाहैष ते योनिर्वीरतां पाहीति दक्षिणार्द्धे सादयत्येताꣳ ह्येष दिशमनु सञ्चरति ॥ ९ ॥ अथ मन्थिनं गृह्णाति । 'अयं वेनश्चोदयत्पृश्निगर्भा ज्ज्योतिर्जरायू रजसो विमाने । इममपाꣳ सङ्गमे सूर्य्यस्य

* "शुक्रं वैल्वेन तम्प्रत्नथेति" "अयं वेन इत्येके" का० श्रौ० सू० ९ ६ ११, १२, "अयं वेनश्चोदयदिति शुक्रं गृहीत्वा" "तम्प्रत्नथेति मन्थिनं गृहीत्वा" आप० श्रौ० सू० १२ १४ १४–१५, तैत्तिरीय–मैत्रायणीय–कठशाखासु प्रथमत 'अयं वेन' ततः 'तम्प्रत्नथा' इत्येव क्रम स्वीकृत । काण्व-माध्यन्दिनसहितयोस्तु तद्वैपरीत्येन आदृत तै० स० १ ४ ८ ९, मै० स० १ ३ १० ११, कठ० स० ४ ३, काण्व० स० १. ७ ७ ।

( १ ) शु० स० अ० ६ क० १२ । ( २ ) शु० स० अ० ६ क० १२ । ( ३ ) शु० स० अ० ६ क० १६ ।

श्विनाविति मुख्यौ वा ऽअश्विनावौष्ठमिव वा ऽइदं मुखं तस्मादौष्ठमाश्विनपात्रं भवति ॥ १९ ॥ (E)

प्रथमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति प्रथमोऽध्यायः ॥ १ ॥



[ शुक्रामन्थिग्रहौ ]

चक्षुषी ह वा ऽअस्य शुक्रामन्थिनौ। तद्वा ऽएष ऽएव शुक्रो य ऽएष तपति तद्यदेष ऽएतत्तपति तेनैष शुक्रश्चन्द्रमा ऽएव मन्थी ॥ १ ॥ तं सक्तुभिः श्रीणाति। तदेनं मन्थं करोति तेनो ऽएष मन्थ्येतौ ह वा ऽआसां प्रजानां चक्षुषी स यद्धैतौ नोदियातां न हैवेह स्वौ चन पाणी निर्जानीयुः ॥ २ ॥ तयोरत्तैवाऽन्यतरः। आद्योऽन्यतरोऽत्तैव शुक्र ऽआद्यो मन्थी ॥ ३ ॥ तयोरत्तैवाऽन्यतरमनु। आद्योऽन्यतरमन्वत्तैव शुक्रमन्वाद्यो मन्थिनमनु तौ वा ऽअन्यस्मै गृह्येते ऽअन्यस्मै हूयेते शण्डामर्कावित्यसुररक्षसे ताभ्यां गृह्येते देवताभ्यो हूयेते तद्यथा ॥ ४ ॥ यत्र वै देवाः। असुररक्षसान्यपजघ्निरे तदेतावेव न शेकुरपहन्तुं यद्ध स्म देवाः किञ्च कर्म्म कुर्वते तद्ध स्म मोहयित्वा क्षिप्रं ऽएव पुनरपद्रवतः ॥ ५ ॥ ते ह देवा ऽऊचुः। उपजानीत यथेमावपहनामहा ऽइति ते होचुर्ग्रहावेवाऽऽभ्यां गृह्णाम तावभ्युपैष्यतस्तौ

(E) एतद्ब्राह्मणस्था श्रियमा अन्यथाऽप्युपलभ्यन्ते यथा— का० श० ५. १. ५; कठ० सं० २७ ५, कपि० सं० ४२. ५; तै० सं० ६. ४. ९; मै० सं० ४, ६. १।

प्रणयन्त्वि'ति प्रतिप्रस्थाता तदेनौ देवताभ्य ऽएव प्रणयतः ॥१४॥ तौ जघनेनाऽऽहवनीयमरत्नी * सन्धत्तः । ता ऽउत्तरवेदौ सादयतो दक्षिणायामेव श्रोणावध्वर्युः सादयत्युत्तरायां प्रतिप्रस्थाताऽननुसृजन्तावेवा'ऽनाधृष्टासी'ति तद्रक्षोभिरेवैतदुत्तरवेदिमनाधृष्टां कुरुतो विपर्यस्यन्तौ वा ऽएतावग्निं भवतोऽत्येष्यन्तौ तस्मा ऽएवैतन्निह्नुवाते तथो हैनौ विपरियन्तावग्निर्न हिनस्ति ॥ १५ ॥ सोऽध्वर्युः † पर्येति । 'सुवीरो वीरान्प्रजनयन्परी'हीत्यत्ता ह्येतमन्वत्ता हि वीरस्तस्मादाह सुवीरो वीरान्प्रजनयन्परीही'त्यभि रायस्पोषेण यजमानमि'ति तद्यजमानायाऽऽशिषमाशास्ते यदाहाऽभि रायस्पोषेण यजमानमिति ॥ १६ ॥ अथ प्रतिप्रस्थाता ‡ पर्येति । 'सुप्रजाः प्रजाः प्रजनयन्परीही'त्याद्यो ह्येतमन्वाद्या हीमाः प्रजा विशस्तस्मादाह सुप्रजाः प्रजाः प्रजनयन्परीही'त्यभि रायस्पोषेण यजमानमि'ति तद्यजमानायाऽऽशिषमाशास्ते यदाहाऽभि रायस्पोषेण यजमानमिति ॥ १७ ॥ तावपिधाय निष्क्रामतः । तिर ऽएवैनावेतत्कुरुतस्तस्मादिमौ सूर्याचन्द्रमसौ प्राञ्चौ यन्तौ न कश्चन पश्यति तौ पुरस्तात्परीत्याऽपोपर्णुतः पुरस्तात्तिष्ठन्तौ जुहुत ऽआविरेवैनावे-

* का० श्रौ० सू० ९. १०. ६ ।

( १ ) शु० सं० अ० ७ क० १७ । ( २ ) शु० सं० अ० ७ क० १२, १७ ।

† "सुवीर इति दक्षिणं यूपदेशं गच्छत्यध्वर्युः" ( का० श्रौ० सू० ९. १०. ७ क ) ।

( ३ ) शु० सं० अ० ७ क० १३ । ( ४ ) शु० सं० अ० ७ क० १३ ।

‡ "सुप्रजा इति प्रतिप्रस्थातोत्तरम्" ( का० श्रौ० सू० ९ १०. ७ ख ) ।

( ५ ) शु० सं० अ० ७ क० १८ । ( ६ ) शु० सं० अ० ७ क० १८ ।

शिशुं न विप्रा मतिभी रिहन्ति । उपयामगृहीतोऽसि मर्काय त्वे'ति ॥ १० ॥ तं सक्तुभिः श्रीणाति । तद्यत्सक्तुभिः श्रीणाति वरुणो ह वै सोमस्य राज्ञोऽभीवाऽक्षि प्रतिपिपेष तदश्वयत्ततोऽश्वः समभवत्तद्यच्छ्वयथात्समभवत्तस्मादश्वो नाम तस्याऽश्रु प्राऽस्कन्दत्ततो यवः समभवत्तस्मादाहुर्वरुण्यो यव ऽइति तद्यदेवाऽस्याऽत्र चक्षुषोऽमीयत तेनैवैनमेतत्समर्द्धयति कृत्स्नं करोति तस्मात्सक्तुभिः श्रीणाति ॥ ११ ॥ स * श्रीणाति । 'मनो न येषु हवनेषु तिग्मं विपः शच्या वनुथो द्रवन्ता । आयः शर्य्याभिस्तुविनृम्णो ऽअस्याश्रीणीताऽऽदिशं गभस्तावेष ते योनिः प्रजाः पाही'ति सादयत्यायो ह्येतमन्वाद्या हीमाः प्रजा विशस्तस्मादाहैष ते योनिः प्रजाः पाहीति ॥ १२ ॥ † द्वौ प्रोक्षितौ यूपशकलौ भवतः । द्वावप्रोक्षितौ प्रोक्षितं चैवाऽद्ध्वर्य्युरादत्तेऽप्रोक्षितं चैवमेव प्रतिप्रस्थाता प्रोक्षितं चैवाऽऽदत्तेऽप्रोक्षितं च शुक्रमेवाऽद्ध्वर्य्युरादत्ते मन्थिनं प्रतिप्रस्थाता ॥ १३ ॥ सोऽद्ध्वर्य्युः । अप्रोक्षितेन यूपशकलेनाऽपमा'ष्टर्यपमृष्टः शण्ड' ऽइत्येवमेव प्रतिप्रस्थाता'ऽपमृष्टो मर्क' ऽइति तदादुदानावेवाऽसुररक्षसे ऽअपहतो 'देवास्त्वा शुक्रपाः प्रणयन्त्वि'त्येवाऽद्ध्वर्य्युर्निष्क्रामति 'देवास्त्वा मन्थिपाः

---

* का० श्रौ० सू० ९. ६. ११।

† का० श्रौ० सू० ९. १०. १-३।

(१) शु० सं० अ० ७ क० १६। (२) शु० सं० अ० ७ क० १७। (३) शु० सं० अ० ७ क० १२। (४) शु० सं० अ० ७ क० १७। (५) शु० सं० अ० ७ क० १२।

प्रणयन्त्वि'ति प्रतिप्रस्थाता तदेनौ देवताभ्य एव प्रणयतः ॥१४॥ तौ जघनेनाऽऽहवनीयमरत्नी * सन्धत्तः । ता उत्तरवेद्यो सादयतो दक्षिणायामेव श्रोणावध्वर्युः सादयत्युत्तरायां प्रतिप्रस्थाताऽननुसृजन्तावेवा'ऽनाधृष्टासी'ति तद्रक्षोभिरेवैतदुत्तरवेदिमनाधृष्टां कुरुतो विपर्ययन्तौ वा एतावग्निं भवतोऽत्येष्यन्तौ तस्मा एवैतन्निह्नुवाते तथो हैनौ विपरियन्तावग्निर्न हिनस्ति ॥ १५ ॥ सोऽध्वर्युः † पर्येति । 'सुवीरो वीरान्प्रजनयन्परी'हीत्यत्ता ह्येतमन्वत्ता हि वीरस्तस्मादाह सुवीरो वीरान्प्रजनयन्परीही'त्यभि रायस्पोषेण यजमानमि'ति तद्यजमानायाऽऽशिषमाशास्ते यदाहाऽभि रायस्पोषेण यजमानमिति ॥ १६ ॥ अथ प्रतिप्रस्थाता ‡ पर्येति । 'सुप्रजाः प्रजाः प्रजनयन्परीही'त्याद्यो ह्येतमन्वाद्या हीमाः प्रजा विशस्तस्मादाह सुप्रजाः प्रजाः प्रजनयन्परीही'त्यभि रायस्पोषेण यजमानमि'ति तद्यजमानायाऽऽशिषमाशास्ते यदाहाऽभि रायस्पोषेण यजमानमिति ॥ १७ ॥ तावपिधाय निष्क्रामतः । निर् एवैनावेतत्कुरुतस्तस्मादिमौ सूर्याचन्द्रमसौ प्राञ्चौ यन्तौ न कश्चन पश्यति तौ पुरस्तात्परीत्याऽपोघ्णुतः पुरस्तात्तिष्ठन्तौ जुहत आविरेवैनावे-

* का० श्रौ० सू० ९. १०. ६ ।

(१) शु० सं० अ० ७ क० १७ । (२) शु० सं० अ० ७ क० १२, १७ ।

† "सुवीर इति दक्षिणं यूपदेशं गच्छत्यध्वर्युः" ( का० श्रौ० सू० ९. १० ७क )।

(३) शु० सं० अ० ७ क० १३ । (४) शु० सं० अ० ७ क० १३ ।

‡ "सुप्रजा इति प्रतिप्रस्थातोत्तरम्" ( का० श्रौ० सू० ९ १०. ७ ख )।

(५) शु० सं० अ० ७ क० १८ । (६) शु० सं० अ० ७ क० १८ ।

तत्कुरुतस्तस्मादिमौ सूर्य्याचन्द्रमसौ प्रत्यञ्चौ यन्तौ सर्व्वऽएव पश्यति तस्मात्पराग्गेतः सिच्यमानं न कश्चन पश्यति तदु पश्चात्प्रजायमानः सर्व्वऽएव पश्यति ॥ १८ ॥ तौ जघनेन * यूपमरत्नी सन्धत्तः। यद्यग्निर्न्नोद्राधेत यद्यु ऽअग्निरुद्राधेताऽप्यग्रेणैव यूपमरत्नी सन्दध्याताᳫं 'सञ्जग्मानो दिवा पृथिव्या शुक्रः शुक्रशोचिषे'त्येवाऽध्वर्य्युः 'सञ्जग्मानो दिवा पृथिव्या मन्थी मन्थिशोचिषे'ति प्रतिप्रस्थाता चक्षुषोर्वैते ऽआरमणे कुरुतश्चक्षुषीऽएवैतत्सन्धत्तस्तस्मादिमे ऽअभितोऽस्थिनी चक्षुषी सᳫंहिते ॥१९॥ सोऽध्वर्य्युः। † अप्रोक्षितं यूपशकलं निरस्यति 'निरस्तः शण्ड' ऽइत्येवमेव प्रतिप्रस्थाता 'निरस्तो मर्क' ऽइति तत्पुराऽऽहुतिभ्योऽसुररक्षसे ऽअपहतः ॥ २० ॥ अथाऽध्वर्य्युः । ‡ प्रोक्षितं यूपशकलमाहवनीये प्रास्यति 'शुक्रस्याऽधिष्ठानमसी'त्येवमेव प्रतिप्रस्थाता 'मन्थिनोऽधिष्ठानमसी'ति चक्षुषोर्वैते समिधौ चक्षुषी ऽएवैतत्समिन्धे तस्मादिमे समिद्धे चक्षुषी ॥ २१ ॥ तत्र $ जपति । 'अच्छिन्नस्य ते देव सोम सुवीर्य्यस्य रायस्पोषस्य ददितारः स्यामे'त्याशीरेवैषैतस्य कर्म्मण ऽआशिषमेवैतदा

---

* का० श्रौ० सू० ९. १०. ८, ९।

(१) शु० सं० अ० ७ क० १३। (२) शु० सं० अ० ७ क० १८।

† का० श्रौ० सू० ९. १०. १०।

‡ का० श्रौ० सू० ९. १०. ११।

$ का० श्रौ० सू० ९. १०. १२ क।

(३) शु० सं० अ० ७ क० १३। (४) शु० सं० अ० ७ क० १८। (५) शु० सं० अ० ७ क० १३। (६) शु० सं० अ० ७ क० १८। (७) शु० सं० अ० ७ क० १४।

शास्ते ॥२२॥ अथाऽऽश्राव्याऽऽह । * प्रातः–प्प्रातः सवस्य शुक्रवतो मधुश्चुत ऽइन्द्राय सोमान्प्रस्थितान्प्रेष्येति वषट्कृते ऽध्वर्युर्जुहोति तदनु प्प्रतिप्रस्थाता तदनु चमसाध्वर्यवः ॥ २३ ॥ तौ वै पुरस्तात्तिष्ठन्तौ जुहुतः । चक्षुषी वा ऽएतौ तत्पुरस्तादेवैतच्चक्षुषी धत्तस्तस्मादिमे पुरस्ताच्चक्षुषी ॥ २४ ॥ अभितो यूपं तिष्ठन्तौ जुहुतः । यथा वै नासिकैवं यूपस्तस्मादिमे ऽअभितो नासिकां चक्षुषी ॥ २५ ॥ तौ वै वषट्कृतौ सन्तौ मन्त्रेण हूयेते । एतेनो हैतौ तदुदश्नुवाते यदेनौ सर्वः सवनमनुहूयते यद्वेवैतौ सर्वः सवनमनुहूयत ऽएतौ वै प्प्रजापतेः प्प्रत्यक्षतमां चक्षुषी ह्येतौ सत्यं वै चक्षुः सत्यः हि प्प्रजापतिस्तस्मादेनौ सर्वः सवनमनुहूयते ॥ २६ ॥ † स जुहोति । 'सा प्प्रथमा संस्कृतिर्विश्ववारा स प्प्रथमो वरुणो मित्रो ऽअग्निः । स प्प्रथमो बृहस्पतिश्चिकित्वाँस्तस्मा ऽइन्द्राय सुतमाजुहोत स्वाहे'ति ॥ २७ ॥ स यज्जुहोति । सा प्प्रथमा स प्प्रथम ऽइति शश्वद्ध वै रेतसः सिक्तस्य चक्षुषी ऽएव प्प्रथमे सम्भवतस्तस्माज्जुहोति सा प्प्रथमा स प्प्रथम ऽइति ॥ २८ ॥ अथ ‡ सम्प्रेष्यति । प्प्रैतु होतुश्चमसः प्प्र ब्रह्मणः प्प्रोद्गातॄणां प्र यजमानस्य प्प्रयन्तु सदस्यानाः

---

* "आश्राव्याऽऽह प्रात॰ प्रातः सवस्य शुक्रवतो मधुश्चुत इन्द्राय सोमान् प्रस्थितान् प्रेष्येति" ( का॰ श्रौ॰ सू॰ ९. १० १२ स )।

† का॰ श्रौ॰ सू॰ ९ ११ १,२ ।

( १ ) शु॰ सं॰ अ॰ ७ क॰ १४–१५ ।

‡ का॰ श्रौ॰ सू॰ ९. ११ २ ।

होत्राणां चमसाध्वर्य्यव ऽउपावर्त्तन्ते शुक्रस्याऽभ्युन्नय-न्निति सम्प्रैष ऽएवैष पर्य्येत्य प्रतिप्रस्थाताऽध्वर्य्योः पात्रे सꣳस्रवमवनयत्यत्र ऽएवैतद्दायं वलिं हारयति तमध्वर्य्युर्होतृचमसेऽवनयति भक्षाय * वषट्कर्त्तुर्हि भक्षः प्राणो वै वषट्कारः सोऽस्मादेतद्वषट्कुर्वतः पराङिवाऽभू-त्प्राणो वै भक्षस्तत्प्राणं पुनरात्मन्धत्ते ॥ २९ ॥ † अथ यदेते प्रतीची पात्रे न हरन्ति। हरन्त्यन्यान्ग्रहाँश्च-क्षुषी ह्येते सꣳस्रवमेव होतृचमसेऽवनयति ॥ ३० ॥ अथ होत्राणां ‡ चमसानभ्युन्नयन्ति। हुतोच्छिष्टा वा ऽएते सꣳस्रवा भवन्ति नाऽलमाहुत्यै तानेवैतत्पुनराप्याययन्ति तथाऽलमाहुत्यै भवन्ति तस्माद्धोत्राणां चमसानभ्युन्नय-न्ति ॥ ३१ ॥ अथ होत्राः संय्याजयन्ति। होत्रा ह वै युक्ता देवेभ्यो यज्ञं वहन्ति ता ऽएवैतत्सन्तर्पयन्ति तृप्ताः प्रीता देवेभ्यो यज्ञं वहानिति तस्माद्धोत्राः संय्याजयन्ति ॥ ३२ ॥ स प्रथमायां वा होत्रायाम्। इष्टा-यामुत्तमायां ‡‡ वाऽनुमन्त्रयते 'तृम्पन्तु होत्रा मध्वो याः स्विष्टा याः सुप्रीताः सुहुता यत्स्वाहे'ति होत्राणामेवैषा

---

* अथ भक्षपरिभाषा—प्रतिप्रस्थातो सर्वत्र होमाभिषवनिमित्त सकृद्भक्ष, अनुवषट्कार-प्रयुक्तस्य होमस्य प्रतिपत्तिकर्मत्वात्तन्निमित्तभक्षणाभावस्तयो। वषट्कर्तुस्तु प्रतिवषट्कारं भक्षणम्, तेनाऽनुवषट्कारसत्त्वे द्विर्भक्ष, तदभावे सकृत्। 'उद्गातृचमसं नाऽन्यो भक्षयेत्' इति निषेधात् त चमस तदन्यो न भक्षयेत् ( का० श्रौ० ...

तृप्तिरथैत्य प्प्रत्यङ्ङुपविश्य॑त्यग्नीदि॑त्यग्नीद्धत्र युजता-मुत्तमः संय्युजति तस्माद्दाहाऽग्नीदिति ॥ ३३ ॥

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥ (A)

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥
कण्डिकासंख्या ॥ १३६ ॥



[ आग्रयणग्रहः ]

आत्मा ह वा ऽअस्याऽऽग्रयणः । सोऽस्यैष सर्वमेव सर्वंह्ययमात्मा तस्मादनया गृह्णात्यस्यै हि स्थाली भवति स्थाल्या ह्येनं गृह्णाति सर्वं वा ऽइयः सर्वमेष ग्रह-स्तस्मादनया गृह्णाति ॥१॥ पूर्ण्णं गृह्णाति । सर्वं वै पूर्ण्णः सर्वमेष ग्रहस्तस्मात्पूर्ण्णं गृह्णाति ॥ २ ॥ विश्वेभ्यो देवे-भ्यो गृह्णाति । सर्वं वै विश्वे देवाः सर्वमेष ग्रहस्तस्मा-द्विश्वेभ्यो देवेभ्यो गृह्णाति ॥ ३ ॥ सर्वेषु सवनेषु गृह्णाति । सर्वं वै सवनानि सर्वमेष ग्रहस्तस्मात्सर्वेषु सवनेषु गृह्णाति ॥ ४ ॥ स यदि राजोपदस्येत् । तमत ऽएव तन्वीरन्नतः प्प्रभावयेयुरात्मा वा ऽआग्रयण ऽआत्मनो वा ऽइमानि सर्वाण्यङ्गानि प्प्रभवन्त्येतस्मादन्ततो हारियोजनं ग्रहं गृह्णाति तदात्मन्न्येवाऽस्यां प्रतिष्ठायामन्ततो यज्ञः प्प्रति-तिष्ठति ॥ ५ ॥ अथ यस्मादाग्रयणो नाम । यां वा ऽअमूं

( १ ) शु० सं० अ० ७ कं० १५ ।

(A) एतद्ब्राह्मणस्य विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श्रौ० ९ २. १, काठ० २७. ७. ८, मै० सं० ४. ६. ३, तै० सं० २७. ७. ८ ।

ग्रावाणमादुदानो व्वाचं यच्छत्यत्र वै साऽग्नेऽवदत्तद्यत्साऽत्राऽग्नेऽवदत्तस्मादाग्रयणो नाम ॥ ६ ॥ रक्षोभ्यो वै तां भीषा व्वाचमयच्छन् । पञ्चा ऽअतः प्प्राचो ग्रहान्गृह्णात्यथैष सप्तमः पञ्चा ऽऋतवः संवत्सरस्य सर्वं वै संवत्सरः ॥ ७ ॥ तान्देवाः । सर्वस्मिन्न्विजितेऽभयेऽनाष्ट्रेऽत्राऽग्रे व्वाचमवदँस्तथो ऽएवैष ऽएताᳬं सर्वस्मिन्न्विजितेऽभयेऽनाष्ट्रेऽत्राऽग्रे व्वाचं वदति ॥ ८ ॥ अथाऽतो * गृह्णात्येव । '[1]ये देवासो दिव्व्येकादश स्थ पृथिव्यामध्येकादश स्थ । अप्सुक्षितो महिनैकादश स्थ ते देवासो यज्ञमिमं जुषद्ध्वम् । उपयामगृहीतोऽस्याऽऽग्रयणोऽसि स्वाग्रयण' ऽइति व्वाचमेवैतदयातयाम्नीं करोति तस्मादनया समानः सद्विपर्य्यासं वदत्यजामितायै जामि ह कुर्य्याद्यदाग्रयणोऽस्याग्रयणोऽसीति गृह्णीयात्तस्मादाहाऽऽग्रयणोऽसि स्वाग्रयण ऽइति ॥ ९ ॥ '[2]पाहि यज्ञं पाहि यज्ञपतिमि'ति । व्वाचमेवैतदुत्सृष्टामाह गोपाय यज्ञमिति पाहि यज्ञपतिमिति व्वाचमेवैतदुत्सृष्टामाह गोपाय यजमानमिति यजमानो हि यज्ञपति'[3]र्व्विष्णुस्त्वामिन्द्रियेण पातु व्विष्णुं त्वं पाही'ति व्वाचमेवैतदुत्सृष्टामाह यज्ञो वै व्विष्णुर्य्यज्ञस्त्वा व्वीर्य्येण गोपायत्विति व्विष्णुं त्वं पाहीति व्वाचमेवैतदुत्सृष्टामाह यज्ञं त्वं गोपाये'[4]त्यभि सवनानि पाही'ति तदेतं

(१) शु० सं० अ० ७ क० १९-२० ।

* "आग्रयणं द्वयोर्धारयोर्ये देवास इति" का० श्रौ० सू० ९. ६. १४ ।

(२) शु० सं० अ० ७ क० २० । (३) शु० सं० अ० ७ क० २० । (४) शु० सं० अ० ७ क० २० ।

ग्रहमाह सर्वाणि ह्येष सवनानि प्प्रति ॥ १० ॥ अथ
* दशापवित्रमुपगृह्य हिङ्करोति । सा हैषा वागनुद्यमाना
ततास तस्यां देवा वाचि तान्तायाᳬं हिङ्कारेणैव प्प्राणम-
दधुः प्प्राणो वै हिङ्कारः प्प्राणो हि वै हिङ्कारस्तस्मादपि
गृह्य नासिके न हिङ्कर्त्तुᳲ शक्नोति सैतेन प्प्राणेन सम-
जिहीत यदा वै तान्तः प्प्राणं लभतेऽथ स सञ्जिहीते
तथो ऽएवैष ऽएतद्वाचि तान्तायाᳬं हिङ्कारेणैव प्प्राणं
दधाति सैतेन प्प्राणेन सञ्जिहीते त्रिष्कृत्वो हिङ्करोति
त्रिवृद्धि यज्ञः ॥ ११ ॥ अथाऽऽह 'सोमः पवत' ऽइति ।
स यामेवाऽमूं भीषाऽसुररक्षसेभ्यो न निरब्रुवँस्तामेवै-
तत्सर्वस्मिन्निर्जितेऽभयेऽनाष्ट्रेऽत्र निराह तामाविष्करोति
तस्मादाह सोमः पवत ऽइति ॥१२॥ 'अस्मै ब्रह्मणेऽस्मै
क्षत्राये'ति । तद् ब्रह्मणे च क्षत्राय चाऽऽहा'ऽस्मै सुन्वते
यजमानाय पवत' ऽइति तद्यजमानायाऽऽह ॥ १३ ॥'
तदाहुः । एतावदेवोक्त्वा सादयेदेतावद्वा ऽइदᳲ सर्वं
स्याद् ब्रह्म क्षत्रं विडिन्द्राग्नी वा ऽइदᳲ सर्वं तस्मादेता-
वदेवोक्त्वा सादयेदिति ॥ १४ ॥ तदु ब्रूयादेव भूयः ।
'इष ऽऊर्जे पवत' ऽइति वृष्टयै तदाह यदाहेष ऽइत्यूर्जे-
ऽइति यो वृष्टादूर्ग्रसो जायते तस्मै तदा'हाऽद्भ्य-

* "दशापवित्रेणाऽऽग्रयणमुपगृह्य त्रिर्हिङ्कृत्य सोम' पवत इति सकृच्छेषम्" ( का० श्रौ० सू० ९ ६ १५ )

( १ ) शु० स० अ० ७ क० २१ । ( २ ) शु० स० अ० ७ क० २१ । ( ३ ) शु० स० अ० ७ क० २१ । ( ४ ) शु० स० अ० ७ क० २१ । ( ५ ) शु० स० अ० ७ क० २१ ।

ऽओषधीभ्यः पवत' ऽइति तदन्नयश्चौषधिभ्यश्चाऽऽह 'द्यावापृथिवीभ्यां पवत' ऽइति तदाभ्यां द्यावापृथिवीभ्यामाह यायोरिदꣳ सर्वमधि 'सुभूताय पवत' ऽइति साधवे पवत ऽइत्येवैतदाह ॥ १५ ॥ तदु हैक ऽआहुः । 'ब्रह्मवर्चसाय पवत' ऽइति तदु तथा न ब्रूयाद्यद्वा ऽआहाऽस्मै ब्रह्मण ऽइति तदेव ब्रह्मवर्चसायाऽऽह 'विश्वेभ्यस्त्वा देवेभ्य ऽएष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य' ऽइति सादयति विश्वेभ्यो ह्येनं देवेभ्यो गृह्णाति तं वै मध्ये सादयेत्यात्मा ह्यस्यैष मध्य ऽइव ह्ययमात्मा दक्षिणोक्थ्यस्थाली भवत्युत्तराऽऽदित्यस्थाली ॥ १६ ॥

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥ (B)

[ उक्थ्यग्रहः ]

अयꣳ ह वा ऽअस्यैषोऽनिरुक्त ऽआत्मा यदुक्थ्यः । सोऽस्यैष ऽआत्मैवाऽऽत्मा ह्ययमनिरुक्तः प्राणः सोऽस्यैष ऽआयुरेव तस्मादनया गृह्णात्यस्ये हि स्थाली भवति स्थाल्या ह्येनं गृह्णात्यजरा हीयममृताऽजरꣳ ह्यमृतमायुस्तस्मादनया गृह्णाति ॥१॥ तं वै पूर्णं गृह्णाति । सर्वं वै तद्यत्पूर्णꣳ सर्वं तद्यदायुस्तस्मात्पूर्णं गृह्णाति ॥२॥ * तस्या-

(१) शु० य० अ० ७ क० २१। (२) शु० य० अ० ७ क० २१। (३) आप० श्रौ० सू० १२. १५ ८। (४) शु० य० अ० ७ क० २१।

(B) एतद्ब्राह्मणगता विषया अन्यशाखास्वप्युपलभ्यन्ते यथा— का० श० ५, २, ३; क० सं० २७. ९; मै० सं० ४. ६ ४; तै० सं० ६. ४. ११।

* अत्र शतम् २४०० ॥

सावेव ध्रुव ऽआयुः । आत्मैवाऽस्यैतेन सहहितः पर्वाणि सन्ततानि तद्वा ऽअगृहीत ऽएवैतस्मादच्छावाकायोत्तमो ग्रहो भवति ॥ ३ ॥ अथ राजानमुपाऽवहरति । तृतीयं वसतीवरीणामवनयति तत्पूर्वं समैति प्रथममहोत्तरस्य सवनस्य करोत्युत्तमं पूर्वस्य स यदुत्तरस्य सवनस्य तत्पूर्वं करोति यत्पूर्वस्य तदुत्तमं तद्व्यतिषजति तस्मादिमानि पर्वाणि व्यतिषक्तानीदमित्थमतिहानमिदमित्थम् ॥ ४ ॥ एवमेव माध्यन्दिने सवने । अगृहीत ऽएवैतस्मादच्छावाकायोत्तमो ग्रहो भवत्यथ तृतीयं वसतीवरीणामवनयति तत्पूर्वं समैति प्रथममहोत्तरस्य सवनस्य करोत्युत्तमं पूर्वस्य स यदुत्तरस्य सवनस्य तत्पूर्वं करोति यत्पूर्वस्य तदुत्तमं तद्व्यतिषजति तस्मादिमानि पर्वाणि व्यतिषक्तानीदमित्थमतिहानमिदमित्थं तद्यदस्यैतेनाऽऽत्मा सहहितस्तेनाऽस्यैष ऽआयुः ॥५॥ सैषा कामदुघैवेन्द्रस्योद्धारः । त्रिभ्य ऽएवैनं * प्रातः सवन ऽउक्थेभ्यो विगृह्णाति त्रिभ्यो माध्यन्दिने सवने तत्षट्कृत्वः षड्वा ऽऋतव ऽऋतवो वा ऽइमान्सर्वान्कामान्पचन्त्येतेनो हैषा काम-

* ज्योतिष्टोमीयप्रातःसवने—उपांशु, अन्तर्याम, ऐन्द्रवायव, मैत्रावरुण, आश्विन, शुक्र, मन्थी, आग्रयण, उक्थ्य, ध्रुव, (वैकल्पिको वैश्वानर) ऋतुग्रहौ, ऐन्द्राग्न, वैश्वदेवश्चेति त्रयोदश ग्रहा ।

माध्यन्दिने सवने—शुक्र, मन्थी, आग्रयण, उक्थ्य, मरुत्वतीयात्रय, माहेन्द्र, दधिग्रहश्चेति नव ग्रहा ।

तृतीयसवने—आदित्य, सावित्र, वैश्वदेव, पात्नीवत, हारियोजन इति पञ्च ग्रहा । ग्रह शब्देन 'गृह्यत इति ग्रह' इति कर्मे व्युत्पत्त्या सोमरसः । 'गृह्यतेऽस्मिन्' इति व्युत्पत्त्या च तदाधारभूतं पात्रमुच्यते । अत्र नवैव उलूखल्य ग्रहा । आग्रयणः, उक्थ्य, ध्रुव, आदित्य, इति चतस्रो मृन्मय्य स्थाल्य –स्थालीग्रहा इति यावत् ।

दुघैवेन्द्रस्योद्धारः ॥ ६ ॥ तं वा ऽअपुरोरुक्कं गृह्णाति । उक्थः हि पुरोरुग्घि पुरोरुगृग्घ्युक्थः साम महो ऽथ यदन्यज्जपति तद्यजुस्ता हैता ऽअभ्यर्द्ध ऽएवाऽप्र ऽऋग्भ्य ऽआसुरभ्यर्द्धो- यजुर्भ्योऽभ्यर्द्धः सामभ्यः ॥ ७ ॥ ते देवा ऽअब्रुवन् । हन्तेमा यजुःष्पु दधाम तथेयं वहुलतरेव विद्या भविष्यतीति ता यजुःष्वदधुस्तत ऽएषा वहुलतरेव विद्याऽभवत् ॥ ८ ॥ तं स्यदपुरोरुक्कं गृह्णाति । उक्थःहि पुरोरुगृग्घि पुरोरुगृग्घ्युक्थः स यदेवैनमुक्थेभ्यो विगृह्णाति तेनो हाऽस्यैष पुरोरुङ्मा- ऽभवति तस्मादपुरोरुक्कं गृह्णाति ॥ ९ ॥ अथाऽतो *गृह्णात्येव । 'उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते वयस्वत' ऽइतीन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्राय त्वेति बृहद्वते वयस्वत ऽइति वीर्य्यवत ऽइत्येवैतदाह यदाह बृहद्वते वय- स्वत ऽइ'त्युवेथाव्यं गृह्णामी'त्युक्थेभ्यो ह्येनं गृह्णाति 'यत्त ऽइन्द्र बृहद्वय' ऽइति यत्त ऽइन्द्र वीर्य्यमित्येवैतदाह 'तस्मै त्वा विष्णवे त्वे'ति यज्ञस्य ह्येनमायुषे गृह्णाति तस्मादाह तस्मै त्वा विष्णवे त्वे'त्येष ते योनिरुक्थे- भ्यस्त्वे'ति सादयत्युक्थेभ्यो ह्येनं गृह्णाति ॥ १० ॥ तं विगृह्णाति । 'देवेभ्यस्त्वा देवाव्यं यज्ञस्याऽऽयुषे गृह्णा- मी'ति प्रशासनः स कुर्य्याद्य ऽएवं कुर्य्याद्यथादेवतं त्वेव विगृह्णीयात् ॥ ११ ॥ † 'मित्रावरुणाभ्यां त्वा । देवाव्यं

* का० श्रौ० सू० ९ ६ २०।

(१) शु० सं० अ० ७ क० २२। (२) शु० सं० अ० ७ क० २२। (३) शु० सं० अ० ७ क० २२। (४) शु० सं० अ० ७ क० २२। (५) शु० सं० अ० ७ क० २२। (६) शु० सं० अ० ७ क० २२।

† का० श्रौ० सू० ९. १४. ९।

(७) शु० सं० अ० ७ क० २३।

यज्ञस्याऽऽयुषे गृह्णामी'त्येव मैत्रावरुणाय मैत्रावरुणीषु हि तस्मै स्तुवते मैत्रावरुणीरनुशꣳसति मैत्रावरुण्या यजति ॥ १२ ॥ * 'इन्द्राय त्वा । देवाव्यं यज्ञस्याऽऽयुषे गृह्णामी'त्येव ब्राह्मणाच्छꣳसिन ऽऐन्द्रीषु हि तस्मै स्तुवत ऽऐन्द्रीरनुशꣳसत्यैन्द्र्या यजति ॥ १३ ॥ 'इन्द्राग्निभ्यान्त्वा देवाव्यं यज्ञस्याऽऽयुषे गृह्णामी'त्येवाऽच्छावाकायैन्द्राग्नीषु हि तस्मै स्तुवत ऽऐन्द्राग्नीरनुशꣳसत्यैन्द्राग्न्या यजतीन्द्राय त्वेन्द्राय त्वेत्येव माध्यन्दिने सवन ऽऐन्द्रꣳ हि माध्यन्दिनꣳ सवनम् ॥१४॥ तदु ह चरकाद्ध्वर्य्यवो विगृह्णन्ति । 'उपयाम गृहीतोऽसि देवेभ्यस्त्वा देवाव्यमुक्थेभ्य ऽउक्थाव्यं मित्रावरुणाभ्यां जुष्टं गृह्णाम्येष ते योनिर्म्मित्रावरुणाभ्यां त्वे'ति सादयति पुनर्हविरसीति स्थालीमभिमृशति ॥ १५ ॥ 'उपयामगृहीतोऽसि । देवेभ्यस्त्वा देवाव्यमुक्थेभ्य ऽउक्थाव्यमिन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वे'ति सादयति पुनर्हविरसीति स्थालीमभिमृशति ॥ १६ ॥ 'उपयामगृहीतोऽसि । देवेभ्यस्त्वा देवाव्यमुक्थेभ्य ऽउक्थाव्यमिन्द्राग्निभ्यां जुष्टं गृह्णाम्येष ते योनिरिन्द्राग्निभ्यान्त्वे'ति सादयति नाऽत्र पुनर्हविरसीति स्थालीमभिमृशतीन्द्राय त्वेन्द्राय त्वेत्येव माध्यन्दिने सवन ऽऐन्द्रꣳ हि माध्यन्दिनꣳ सवनं द्विर्ह पुनर्हविरसीति

---

* का० श्रौ० सू० ९ १४ १५ ।

( १ ) शु० स० अ० ७ क० २३ । ( २ ) शु० स० अ० ७ क० २३ । ( ३ ) शु० सं० अ० ७ क० २३ । ( ४ ) शु० स० अ० ७ क० २३ । ( ५ ) शु० स० अ० ७ क० २३ ।

स्थालीमभिमृशति तूष्णीं तृतीयं निदधाति ॥ १७ ॥ तं वै नोपयामेन गृह्णीयात् । न योनौ सादयेदग्रे ह्येवैष ऽउपयामेन गृहीतो भवत्यग्रे योनौ सन्नोऽजामितायै जामि ह कुर्याद्यदेनमन्त्राऽप्युपयामेन गृह्णीयाद्योनौ सादयेदथ यत्पुनर्हविरसीति स्थालीमभिमृशति पुनर्ह्यस्यै गृहं ग्रहीष्यन्भवति न तदाद्रियेत तूष्णीमेव निदध्यात् ॥ १८ ॥(C)

द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ ध्रुवग्रहः ]

अयꣳ ह वा ऽअस्यैष प्राणः । योऽयं पुरस्तात्स वै वैश्वानर ऽएवाऽथ योऽयं पश्चात्स ध्रुवस्तौ स्मैतौ द्वावेवाऽग्रे गृहौ गृह्णन्ति ध्रुववैश्वानराविति तयोरयमप्येतर्ह्यन्यतर ऽएव गृह्यते ध्रुव ऽएव स यदि तं चरकेभ्यो वा यतो वाऽनुब्रुवीत यजमानस्य तं चमसेऽवनयेदथैतमेव होतृचमसे ॥ १ ॥ यद्वा ऽअस्याऽवाचीनं नाभेः । तदस्यैष ऽआत्मनः सोऽस्यैष ऽआयुरेव तस्मादनया गृह्णात्यस्यै हि स्थाली भवति स्थाल्या ह्येनं गृह्णात्यजरा हीयममृताजरꣳ ह्यमृतमायुस्तस्मादनया गृह्णाति ॥ २ ॥ तं वै पूर्णं गृह्णाति । सर्वं वै तद्यत्पूर्णꣳ सर्वं तद्यदायुस्तस्मात्पूर्णं गृह्णाति ॥ ३ ॥ वैश्वानराय गृह्णाति । संवत्सरो वै वैश्वानरः संवत्सर ऽआयुस्तस्माद्वैश्वानराय गृह्णाति ॥ ४ ॥

(C) एतद्ब्राह्मणस्था निगदा अन्यत्राऽप्युपलभ्यन्ते यथा— का० सं० ५ २. ३, कठ० १७ १०, तै० सं० ६. ५. १; मै० सं० ३ ६ ५।

स प्रातःसवने गृहीतः । ऐतस्मात्सालादुपशेते तदेनः सर्वाणि सवनान्यतिनयति ॥ ५ ॥ तन्न स्तूयमानेऽवनयेत् । न ह संवत्सरं यजमानोऽतिजीवेद्यस्तूयमानेऽवनयेत् ॥६॥ तः शस्यमानेऽवनयति । तदेनं द्वादशः स्तोत्रमतिनयति तथा परम्परमायुः समश्नुते तथो ह यजमानो ज्योग्जीवति तस्माद् ब्राह्मणोऽग्निष्टोमसत्स्यादेतस्य होमान्न सर्प्येन्न प्रस्रावयेत तथा सर्वमायुः समश्नुत ऽआयुर्वा ऽअस्यैष तथा सर्वमायुरेति ॥ ७ ॥ यद्वा ऽअस्याऽवाचीनं नाभेः । तदस्यैष ऽआत्मनः स यत्पुरैतस्य होमात्सर्प्येद्वा प्र वा स्रावयेत ध्रुवः ह्यऽयमेहेन्द्रद्रुवमवमेहानीति तस्माद्वा ऽअग्निष्टोमसन्नवति तद्वै तद्यजमानऽएव यजमानस्य ह्येष तदात्मनः ॥ ८ ॥ स वा ऽअग्निष्टोमसन्नवति । यशो वै सोमस्तस्माद्यश्च सोमे लभते यश्च नोभावेवाऽऽगच्छतो यश ऽएवैतद्द्रष्टुमागच्छन्ति तद्वाऽएतद्यशो ब्राह्मणाः सम्प्रसृप्याऽऽत्मन्दधते यन्नक्षयन्ति स ह यश ऽएव भवति य ऽएवं विद्वान्भक्षयति ॥ ९ ॥ ते वा ऽएते । सर्प्यन्त ऽएवाऽग्निष्टोमसद्येतद्यशः सन्निधाय सर्प्यन्ति ते पराञ्चो यशसो भवन्ति तदेष परिगृह्यैव पुनरात्मन्यशो धत्ते तेषाः हैष ऽएव यशस्वितमो भूत्वा प्रैति य ऽएवं विद्वानग्निष्टोमसन्नवति ॥ १० ॥ देवाश्च वा ऽअसुराश्च । उभये प्राजापत्याः पस्पृधिर ऽएतस्मिन्यज्ञे प्रजापतौ पितरि संवत्सरेऽस्माकमयं भविष्यत्यस्माकमयं भविष्यतीति ॥ ११ ॥

ततो देवाः । अर्चन्तः श्राम्यन्तश्चेरुस्त ऽएतदग्निष्टोमसद्यं ददृशुस्त ऽएतेनाऽग्निष्टोमसद्येन सर्वं यज्ञꣳ समवृञ्जताऽन्तरायन्नसुरान्यज्ञात्तथो ऽएवैष ऽएतेनाऽग्निष्टोमसद्येन सर्वं यज्ञꣳ संवृङ्क्तेऽन्तरेति सपत्नान्यज्ञात्तस्माद्वाऽअग्निष्टोमसद्भवति ॥ १२ ॥ तं गृहीत्वोत्तरे । हविर्द्धाने सादयति प्राणा वै ग्रहा नेत्प्राणान्मोहयानीत्युपकीर्णे वाऽइतरान्ग्रहान्सादयत्यथैतं व्युह्य न तृणं चनाऽन्तर्द्धाय ॥ १३ ॥ यद्वा ऽअस्योर्द्ध्वं नाभेः । तदस्यैत ऽआत्मन ऽउपरीव वै तद्यदूर्द्ध्वं नाभेरुपरीवैतद्यदुपकीर्णं तस्मादुपकीर्णे सादयत्यथैतं व्युह्य न तृणं चनाऽन्तर्द्धाय ॥ १४ ॥ यद्वा ऽअस्याऽवाचीनं नाभेः । तदस्यैष ऽआत्मनोऽध ऽइव वै तद्यदवाचीनं नाभेरध ऽइवैतद्यद्व्युह्य न तृणं चनाऽन्तर्द्धाय तस्मादेतं व्युह्य न तृणं चनाऽन्तर्द्धाय सादयति ॥ १५ ॥ एष वै प्रजापतिः । य ऽएष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाता ऽएतम्वेवाऽप्येतर्ह्यनु प्रजायन्ते स यानुपकीर्णे सादयति तस्माद्यास्ताननु प्रजाः प्रजायन्ते ता ऽअन्येनाऽऽत्मनोऽस्यां प्रतितिष्ठन्ति या वै शफैः प्रतितिष्ठन्ति ता ऽअन्येनाऽऽत्मनोऽस्यां प्रतितिष्ठन्त्यथ यदेतं व्युह्य न तृणं चनाऽन्तर्द्धाय सादयति तस्माद्या ऽएतमनु प्रजाः प्रजायन्ते ता ऽआत्मनैवाऽस्यां प्रतितिष्ठन्ति मनुष्याश्च श्वापदाश्च ॥ १६ ॥ तद्वा ऽएतत् । अस्मा ऽएवाऽन्यदुत्तरं करोति यदुपकिरति स यानुपकीर्णे सादयति तस्माद्यास्ताननु प्रजाः प्रजायन्ते ता ऽअन्येनैवाऽऽत्मनोऽस्यां

प्रतितिष्ठन्ति शफैः ॥ १७ ॥ तद्वा ऽएतत् । आहवनीये जुह्वति पुरोडाशं धानाः करम्भं दध्यामिक्षामिति तद्यथा मुख ऽआसिञ्चेदेवं तद्यथैव ऽएकरूप ऽउपशेत ऽआप-ऽइवैव तस्माद्यदनेन मुखेन नानारूपमशनमश्नात्यथैतेन प्राणेनैकरूपमेव प्रस्रावयतेऽप ऽइवैवाऽथ यस्माद्ध्रुवो नाम ॥ १८ ॥ देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्य-ऽआसङ्गाद्बिभयाञ्चक्रुस्तान्दक्षिणतोऽसुररक्षसान्यासेजुस्तेपा-मेतान्दक्षिणान्गृहानुजग्घ्नुरप्येतद्दक्षिणतः हविर्धानमु-जग्घ्नुरथैतमेव न शेकुरुद्धन्तुं तदुत्तरमेव हविर्धानं दक्षिणतः हविर्धानमद्रूहह तद्यदेतं न शेकुरुद्धन्तुं तस्माद् ध्रुवो नाम ॥ १९ ॥ तं वै गोपायन्ति । शिरो वा ऽएष ऽएतस्यै गायत्र्यै यज्ञो वै गायत्री द्वादश स्तोत्राणि द्वादश शस्त्राणि तच्चतुर्विंशतिश्चतुर्विंशत्यक्षरा वै गायत्री तस्या-ऽएष शिरः श्रीर्वै शिरः श्रीर्हि वै शिरस्तस्माद्योऽर्द्धस्य श्रेष्ठो भवत्यसावमुष्यार्द्धस्य शिर ऽइत्याहुः श्रेष्ठो ह व्यथेत यदेष व्यथेत यजमानो वै श्रेष्ठो नेद्यजमानो व्यथाता-ऽइति तस्माद्वै गोपायन्ति ॥२०॥ वत्सो वा ऽएषः । एतस्यै गायत्र्यै यज्ञो वै गायत्री द्वादश स्तोत्राणि द्वादश शस्त्राणि तच्चतुर्विंशतिश्चतुर्विंशत्यक्षरा वै गायत्री तस्या ऽएष वत्सस्तं यद् गोपायन्ति गोपायन्ति वा ऽइमान्वत्सान्दो-हाय यदिदं पयो दुह ऽएवमियं गायत्री यजमानाय सर्वान्कामान्दोहाता ऽइति तस्माद् वै गोपायन्ति ॥ २१ ॥ अथ यदध्वर्युश्च प्रतिप्रस्थाता च । निश्च क्रामतः प्र

च पयेते यथा वत्सवत्सोपाऽऽचरेदेवमेतं गृहमुपाऽऽचरत-
स्तमवनयति गायत्रीमेवैतत्प्रस्नावयति प्प्रत्तेयं गायत्री यज-
मानाय सर्वान्कामान्दोहाता ऽइति तस्माद्वा ऽअवनयति
॥ २२ ॥ * सोऽवनयति । 'ध्रुवं ध्रुवेण मनसा वाचा
सोममवनयामी'ति गृह्णामीति वा'ऽथा न ऽइन्द्र ऽइद्वि-
शोऽसपत्नाः समनसस्करदि'ति यथा न ऽइन्द्र
इमाः प्प्रजा विशः श्रियै यशसेऽन्नाद्यायाऽसपत्नाः
सम्मनसः करवदित्येवैतदाह ॥ २३ ॥ अथाऽतो † गृह्णा-
त्येव । 'मूर्द्धानं दिवो ऽअरतिं पृथिव्व्या वैश्वानरमृत ऽआ
जातमग्निम् । कविꣳ सम्म्राजमतिथिं जनानामासन्नापात्रं
जनयन्त देवाः । उपयामगृहीतोऽसि ध्रुवोऽसि ध्रुवक्षिति-
र्ध्रुवाणां ध्रुवतमोऽच्च्युतानामच्च्युतक्षित्तम ऽएष ते योनिर्वै-
श्वानराय त्वे'ति सादयति व्व्युह्य न तृणं चनाऽन्तर्द्धाय
वैश्वानराय ह्येनं गृह्णाति ॥ २४ ॥ (D)

द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ विप्रुड्ढोमः ]

गृहान्गृहीत्वा । उपनिष्क्रम्म्य विप्प्रुषाꣳ होमं
जुहोति तद्यद्विप्प्रुषाꣳ होमं जुहोति या ऽएवाऽस्याऽत्र

* 'औदुम्बर्या होतृचमसेऽवनयति ध्रुवन्ध्रुवेणेति' ।
(१) शु० स० अ० ७ क० २५। (२) शु० स० अ० ७ क० २५।
† का० श्रौ० सू० ९. ६. २१।
(३) शु० स० अ० ७ क० २४,२५।
( D ) एतद्ब्राह्मणस्थाविषयाअन्यत्राऽप्युपलभ्यन्ते यथा—का०शा० ५ २. ४;
क० सं० २८ १, कपि० ४४. १, तै० सं० ६. ५. २; मै० सं० ४. ६. ६।

विप्रुष स्कन्दन्ति ता ऽएवैतदाहवनीये स्वगाकरोत्याहव-
नीयो ह्याहुतीनां प्रतिष्ठा तस्माद्विप्रुषाथं होमं जुहोति
॥ १ ॥ स * जुहोति । 'यस्ते द्रप्स स्कन्दति यस्ते ऽअꣳ-
शुरि'ति यो वै स्तोक स्कन्दन्ति स द्रप्सस्तत्तमाह
यस्ते ऽअꣳशुरिति तदꣳशुमाह 'ग्रावच्च्युतो धिषणयोरुप-
स्थादि'ति ग्राव्णा हि च्च्युतोऽधिषवणाभ्याꣳ स्कन्द-
'त्यध्वर्य्योर्वा परि वा यः पवित्रादि'त्यध्वर्य्योर्वा हि पाणि-
भ्याꣳ स्कन्दति पवित्राद्वा 'तन्ते जुहोमि मनसा वषट्-
कृतꣳ स्वाहे'ति तद्यथा वषट्कृतꣳ हुतमेवमस्यैतद्भवति
॥ २ ॥ अथ स्तीर्णायै वेदेः । द्वे तृणे ऽअध्वर्य्युरादत्ते ताव-
ध्वर्य्यू प्रथमौ प्रतिपद्येते प्राणोदानौ यज्ञस्याऽथ प्रस्तोता
वागेव यज्ञस्याऽथोद्गाताऽऽत्मैव प्रजापतिर्य्यज्ञस्याऽथ प्रति-
हर्त्ता भिषग्वा व्यानो वा ॥ ३ ॥ ताꣳवा ऽएतान् ।
पञ्चर्त्विजो यजमानोऽन्वारभत ऽएतावान्वै सर्वो यज्ञो
यावन्त ऽएते पञ्चर्त्विजो भवन्ति पाङ्क्तो वै यज्ञस्तद्यज्ञ-
मेवैतद्यजमानोऽन्वारभते ॥ ४ ॥ अथाऽन्यतरत्तृणम् ।
† चात्वालमभि प्रास्यति 'देवानामुत्क्रमणमसी'ति यत्र वै
देवा यज्ञेन स्वर्गं लोकꣳ समाश्नुवत त ऽएतस्माच्चात्वा-

---

* का० श्रौ सू० ९ ६ २८ ।

(१) शु० य० अ० ७ क० २६। (२) शु० स० अ० ७ क० २६, 'ग्रावच्युत' इत्यत्र 'बाहुच्युत' इति तैत्तिरीयपाठ । (३) शु० स० अ० ७ क० २६। (४) शु० स० अ० ७ क० २६ ।

† का० श्रौ० सू० ९. ६. ३२।

(५) शु० स० अ० ७ क० २६।

लादूर्ध्वाः स्वर्गं लोकमुपोदक्रामँस्तद्यजमानमेवैतत्स्वर्ग्यं पन्थानमनु संख्यापयति ॥ ५ ॥ अथाऽन्यतरत्तृणम् । पुरस्तादुद्गातॄणामुपाऽस्यति तूष्णीमेव स्तोमो वा ऽएष प्रजापतिर्य्यदुद्गातारः स ऽइदꣳ सर्वं स्युत ऽइदꣳ सर्वꣳ सम्भवति तस्माऽएवैतत्तृणमपि दधाति तथो हाऽद्ध्वर्य्युं न युते नैनꣳ सम्भवत्यथ यदा जपन्ति जपन्ति ह्यत्रोद्गातारः ॥ ६ ॥ * अथ स्तोत्रमुपाकरोति । 'सोमः पवत' ऽइति स वै पराङेव स्तोत्रमुपाकरोति पराञ्च स्तुवते देवान्वा ऽएतानि स्तोत्राण्यभ्युऽऽपावृत्तानि † यत्पवमानाः पराञ्चो ह्येतैर्देवाः स्वर्गं लोकꣳ समाश्नुवत तस्मात्पराङेव स्तोत्रमुपाकरोति पराञ्च स्तुवते ॥ ७ ॥ उपावर्त्तद्ध्वमिति वा ऽअन्यानि स्तोत्राणि । अभ्यावर्त्तं धुर्य्यै स्तुवत ऽइमा वै प्रजाऽएतानि स्तोत्राण्यभ्युपाऽऽवृत्तास्तस्मादिमाः प्रजाः पुनरभ्यावर्त्तं प्रजायन्ते ॥ ८ ॥ अथ यदत्र बहिष्पवमानेन स्तुवते । अत्र ह वा ऽअसावग्र ऽआदित्य ऽआस तमृतवः परिगृह्यैवाऽऽत ऽऊर्द्ध्वाः स्वर्गं लोकमुपोदक्रामन्त्स ऽएष ऽऋतुषु प्रतिष्ठितस्तपति तथो ऽएवैतदृत्विजो यजमानं परिगृह्यैवाऽऽत ऽऊर्द्ध्वाः स्वर्गं लोकमुपोत्क्रामन्ति तस्मादत्र बहिष्पवमानेन स्तुवते ॥ ९ ॥ नौर्ह वा ऽएषा स्वर्ग्या । यद्बहिष्पवमानं तस्या ऽऋत्विज ऽएव स्फ्याश्चाऽरित्राश्च

---

* का० श्रौ० सू० ९ ६ ३४ ।

(१) पु० ग० श० ७ क० २६ ।

† "क्वचानश्चित्र इत्याद्यासु नवसु गायत्रीच्छन्दस्कासु ऋक्षु ( ऋ० २ ६ २४, २५ ) गीयमानं स्तोत्रं पवमानमित्युच्यते" ।

स्वर्ग्गस्य लोकस्य सम्पारणास्तस्या ऽएक ऽएव मज्जयिता य ऽएव निन्द्यः स यथा पूर्णामभ्यारुह्य मज्जयेदेवꣳ हैनाꣳ स मज्जयति तद्वै सर्व्व ऽएव यज्ञो नौः स्वर्ग्या तस्माद् सर्वस्मादेव यज्ञान्निन्द्यं परिविवाधिषेत ॥ १० ॥ * अथ स्तुत ऽएतां वाचं वदति । अग्नीदग्नीन्विहर बर्हि स्तृणीहि पुरोडाशाँ२ अलङ्कुरु पशुनेहीति विहरत्यग्नीदग्नीन्त्समिन्ध-ऽएवैनानेतत्स्तृणाति बर्हि स्तीर्णे बर्हिषि समिद्धे देवेभ्यो जुहवानीति पुरोडाशाँ२ ऽअलङ्कुर्व्विति पुरोडाशैर्हि प्रच-रिष्यन्भवति पशुनेहीति पशुꣳ ह्युपाकरिष्यन्भवति ॥ ११ ॥ अथ पुनः प्रपद्य । आश्विनं ग्रहं गृह्णात्याश्विनं ग्रहं गृहीत्त्वोपनिष्क्रम्म्य यूपं परिव्ययति परिवीय यूपं पशुमुपाकरोति रसमेवाऽस्मिन्नेतद्दधाति ॥ १२ ॥ [ अर्धप्रपाठकः ॥७०॥ ] स प्रातःसवन ऽआलब्धः । आ तृतीयसवनाच्छ्रप्प्यमाण ऽउपशेते सर्वस्मिन्नेवैतद्यज्ञे रसन्दधाति सर्वं व्यज्ञः रसेन प्रसजति ॥ १३ ॥ तस्मा-दाग्नेयमग्निष्टोम ऽआलभेत । तद्धि सलोम यदाग्नेयमग्नि-ष्टोम ऽआलभेत यद्युक्थ्यः स्यादैन्द्राग्नं द्वितीयमालभेतैन्द्रा-ग्नानि ह्युक्थानि यदि षोडशी स्यादैन्द्रं तृतीयमालभेतेन्द्रो हि षोडशी यद्यतिरात्रः स्यात्सारस्वतं चतुर्थमालभेत वाग्वै सरस्वती योषा वै वाग्योषा रात्रिस्तद्यथायथं यज्ञ-क्रतून् व्यावर्त्तयति ॥ १४ ॥ अथ सवनीयैः पुरोडाशैः प्रचरति । देवो वै सोमो दिवि हि सोमो वृत्रो वै सोम-

* का० श्रौ० सू० ९. ७. ४ ।

ऽआसीत्तस्यैतच्छरीरं यद्विरयो यदुश्मानस्तद्वेपोऽशाना नामौषधिर्ज्जायत ऽइति ह स्माऽऽह श्वेतकेतुरौद्दालकिस्तामेतदाहृत्याऽभिषुण्वन्तीति ॥ १५ ॥ स यत्पशुमालभते । रसमेवाऽस्मिन्नेतद्दधात्यथ यत्सवनीयैः पुरोडाशैः प्रचरति मेधमेवाऽस्मिन्नेतद्दधाति तथो हाऽस्यैष सोम ऽएव भवति ॥ १६ ॥ सर्व्वे ऽऐन्द्रा भवन्ति । इन्द्रो वै यज्ञस्य देवता तस्मात्सर्व्वे ऽऐन्द्रा भवन्ति ॥ १७ ॥ अथ यत्पुरोडाशः । धानाः करम्भो दध्यामिक्षेति भवति या यज्ञस्य देवतास्ताः सुप्रीता ऽअसन्निति ॥ १८ ॥ इदं वा ऽअपूपमशित्वा कामयते । धानाः खादेयं करम्भमश्नीयान्दध्यश्नीयामामिक्षामश्नीयामिति ते सर्व्वे कामा या यज्ञस्य देवतास्ताः सुप्रीता ऽअसन्नित्यथ यदेषा प्रातःसवन ऽएव मैत्रावरुणी पयस्याऽवक्लृप्ता भवति नेतरयोः सवनयोः ॥ १९ ॥ गायत्री वै प्रातःसवनं वहति । त्रिष्टुम्माध्यन्दिनꣳ सवनं जगती तृतीयसवनं तद्वा ऽअनेकाकिन्येव त्रिष्टुम्माध्यन्दिनꣳ सवनं वहति गायत्र्या च बृहत्या चाऽनेकाकिनी जगती तृतीयसवनं गायत्र्योष्णिहककुब्भ्यामनुष्टुभा ॥२०॥ गायत्र्येवैकाकिनी प्रातःसवनं वहति । सैताभ्यां पङ्क्तिभ्याꣳ स्तोत्रपङ्क्त्या च हविष्पङ्क्त्या च चत्वार्य्याज्यानि बहिष्पवमानं पञ्चमं पञ्च परापङ्क्तिः सैतया स्तोत्रपङ्क्त्याऽनेकाकिनी गायत्री प्रातःसवनं वहति ॥२१॥ इन्द्रस्य पुरोडाशः । हर्य्योर्द्धानाः पूष्णः करम्भः सरस्वत्यै दधि मित्रावरुणयोः पयस्या पञ्चपदा पङ्क्तिः सैतया हविष्पङ्क्त्याऽनेकाकिनी

गायत्री प्रातःसवनं बहत्येतस्या ऽएव पङ्क्तेः सम्पदः कामाय प्रातःसवन ऽएवैषा मैत्रावरुणी पयस्याऽवक्लृप्ता भवति नेतरयोः सवनयोः ॥ २२ ॥ (E)

द्वितीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥



[ ऋतुग्रहैन्द्राग्नवैश्वदेवग्रहाः ]

भक्षयित्वा समुपहूताः स्म ऽइत्युक्त्वोत्तिष्ठति । पुरोडाशवृगलमादाय तद्यत्रैतदुपसन्नोऽच्छावाकोऽन्वाह तदस्मै *पुरोडाशवृगलं पाणावादधदाहाऽच्छावाक वदस्व यत्ते वाद्यमित्युहीयत वा ऽअच्छावाकः ॥ १ ॥ तमिन्द्राग्नीऽअनु समतनुताम् । प्रजानां प्रजात्यै तस्मादैन्द्राग्नोऽच्छावाकः स ऽएतेन च हविषा यदस्म्मा ऽएतत्पुरोडाशवृगलं पाणावादधात्येतेन चाऽऽर्षेयेण यदेतदन्वाह तेनाऽनु समश्नुते ॥ २ ॥ स वै सन्नेऽच्छावाके । ऋतुग्रहैश्चरति तद्यत्सन्नेऽच्छावाक ऽऋतुग्रहैश्चरति मिथुनं वा ऽअच्छावाक ऽऐन्द्राग्नो ह्यच्छावाको द्वौ हीन्द्राग्नी द्वन्द्वं हि मिथुनं प्रजननं स ऽएतस्मान्मिथुनात्प्रजननादृतूंत्संवत्सरं प्रजनयति ॥ ३ ॥ यद्वेव सन्नेऽच्छावाके । † ऋतुग्रहैश्चरति सर्वं वा ऽऋतवः संवत्सरः सर्वमेवैतत्प्रजनयति तस्मात्सन्नेऽच्छावाक ऽऋतु-

(E) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५ ३. ११।

* अच्छावाकस्य पाणौ पुरोडाश( वृगल )शकलं प्रक्षिपन् अच्छावाक ! वदस्व यत्ते वाद्यमिति ब्रूयादित्यर्थ ( सा० भा० )।

† का० श्रौ० सू० ९ १३. १।

ग्रहैश्चरति ॥४॥ तान्वै द्वादश गृह्णीयात् । द्वादश वै मासाः
संवत्सरस्य तस्माद् द्वादश गृह्णीयादुथो ऽअपि त्रयोदश गृह्णी-
यादस्ति त्रयोदशो मास ऽइति द्वादश त्वेव गृह्णीयादेषैव
सम्पत् ॥५॥ द्रोणकलशाद् गृह्णाति । प्रजापतिर्वै द्रोणकलशः
स ऽएतस्मात्प्रजापतेर्ऋतून्त्संवत्सरं प्रजनयति ॥ ६ ॥ उभ-
यतोमुखाभ्यां पात्राभ्यां गृह्णाति । कुतस्तयोरन्तो ये ऽउभ-
यतोमुखे तस्मादयमनन्तः संवत्सरः परिप्लवते तं गृहीत्वा
न सादयति तस्मादयमसन्नः संवत्सरः ॥ ७ ॥ नाऽनुवा-
क्यामन्वाह । ह्वयति वा ऽअनुवाक्यया गतो ह्येवाऽयमृतु-
र्यदि दिवा यदि नक्तं नाऽनुवषट्करोति नेदृतूनपवृणजा-
ऽइति सहैव प्रथमौ ग्रहौ गृह्णीतः सहोत्तमाविदमेवैत-
त्सर्वः संवत्सरेण परिगृहीतस्तदिदः सर्वं संवत्सरेण
परिगृहीतम् ॥ ८ ॥ निरेवाऽन्यतरः क्रामति । प्राऽन्यतरः
पद्यते तस्मादिमेऽन्वञ्चो मासा यन्त्यथ यदुभौ वा सह
निष्क्रामेतामुभौ वा सह प्रपद्येयातां पृथग्घ हैवेमे मासा-
ऽईयुस्तस्मान्निरेवाऽन्यतरः क्रामति प्राऽन्यतरः पद्यते
॥ ९ ॥ तौ वा ऽऋतुने * पट् प्रचरतः । तद्देवा ऽअहर-
सृजन्तर्तुभिरिति चतुस्तद्रात्रिमसृजन्त स यद्धैतावद्देवा-
ऽभविष्यद्रात्रिर्हैवाऽभविष्यन्न † व्यवस्यत् ॥ १० ॥ तौ वा-
ऽऋतुनेत्युपरिष्टाद् व्यिश्चरतः । तद्देवाः पुरस्तादहरदधुस्त-
स्मादिदमद्याऽहरथ रात्रिरथ ह्योऽहर्भवित्री ॥ ११ ॥ ऋतु-

* का॰ श्रौ॰ सू॰ १ १३, २–७।
† 'व्ययवस्यत्' इति पाठ 'ग' पुस्तके।

नेति वै देवाः। मनुष्यानसृजन्तर्तुभिरिति पशून्त्स यत्तन्मध्ये येन पशूनसृजन्त तस्मादिमे पशव ऽउभयतः परिगृहीता वशमुपेता मनुष्याणाम् ॥ १२ ॥ तौ वाऽऋतुनेति पद् प्रचर्य्य। इतरथा पात्रे विपर्य्यस्यते ऽऋतुभिरिति चतुश्चरित्त्वेतरथा पात्रे विपर्य्यस्येते ऽअन्यतरतऽएव तद्देवा ऽअहरसृजन्ताऽन्यतरतो रात्रिमन्यतरतऽएव तद्देवा मनुष्यानसृजन्ताऽन्यतरतः पशून् ॥ १३ ॥ अथाऽतो *गृह्णात्येव। 'उपयामगृहीतोऽसि मधवे त्वे'[1]त्येवाऽद्ध्वर्य्युर्गृह्णा'त्युपयामगृहीतोऽसि माधवाय त्वे'[2]ति प्रतिप्रस्थातैतावेव वासन्तिकौ स यद्वसन्त ऽओषधयो जायन्ते वनस्पतयः पच्यन्ते तेनो हैतौ मधुश्च माधवश्च ॥ १४ ॥ 'उपयामगृहीतोऽसि[3]। शुक्राय त्वे'त्येवाऽद्ध्वर्य्युर्गृह्णा'त्युपया[4]मगृहीतोऽसि शुचये त्वे'ति प्रतिप्रस्थातैतावेव ग्रैष्मौ स यदेतयोर्बलिष्ठं तपति तेनो हैतौ शुक्रश्च शुचिश्च॥ १५ ॥ 'उपयामगृहीतोऽसि[5] नभसे त्वे'त्येवाऽद्ध्वर्य्युर्गृह्णा'त्युपया[6]मगृहीतोऽसि नभस्याय त्वे'ति प्रतिप्रस्थातैतावेव वार्षिकावमुतो वै दिवो वर्षति तेनो हैतौ नभश्च नभस्यश्च ॥१६॥ 'उपयामगृहीतोऽसि[7]। इषे त्वे'त्येवाऽद्ध्वर्य्युर्गृह्णा'त्युपयामगृहीतोऽस्यूर्जे[8] त्वे'ति प्रतिप्रस्थातैतावेव शारदौ स यच्छरद्यूर्ग्रस ऽओषधयः पच्यन्ते तेनो हैताविषश्चोर्जश्च

* का० श्रौ० सू० ९. १३-१३-१७।

(१) शु० स० अ० ७ क० ३०। (२) शु० स० अ० ७ क० ३०। (३) शु० स० अ० ७ क० ३०। (४) शु० स० अ० ७ क० ३०। (५) शु० स० अ० ७ क० ३०। (६) शु० स० अ० ७ क० ३०। (७) शु० स० अ० ७ क० ३०। (८) शु० स० अ० ७ क० ३०।

॥ १७ ॥ 'उपयामगृहीतोऽसि सहसे त्वे'त्येवाऽद्ध्वर्य्युर्ग्गृह्णा-'त्युपयामगृहीतोऽसि सहस्याय त्वे'ति प्प्रतिप्प्रस्थातैतावेव हैमन्तिकौ स यद्धेमन्त ऽइमाः प्प्रजाः सहसेव स्वं वशमुपनयते तेनो हैतौ सहश्च सहस्यश्च ॥ १८ ॥ उपयामगृहीतोऽसि तपसे त्वे'त्येवाऽद्ध्वर्य्युर्ग्गृह्णा'त्युपयामगृहीतोऽसि तपस्याय त्वे'ति प्प्रतिप्प्रस्थातैतावेव शैशिरौ स यदेतयोर्बलिष्ठं श्यायति तेनो हैतो तपश्च तपस्यश्च ॥ १९ ॥ 'उपयामगृहीतोऽसि । अꣳहसस्पतये त्वे'ति * त्रयोदश ग्रहं गृह्णाति यदि त्रयोदशं गृह्णीयादुथ प्प्रतिप्प्रस्थाताऽद्ध्वर्य्योः पात्रे सꣳस्रवमवनयत्यद्ध्वर्य्युर्वा प्प्रतिप्प्रस्थातुः पात्रे सꣳस्रवमवनयत्याहरति भक्षम् ॥ २० ॥ अथ प्प्रतिप्प्रस्थाताऽभक्षितेन पात्रेण । ऐन्द्राग्नं ग्रहं गृह्णाति तद्यदभक्षितेन पात्रेणैन्द्राग्नं ग्रहं गृह्णाति न वा ऽऋतुग्रहाणामनुवषट्कुर्वन्त्येतेभ्यो वाऽऐन्द्राग्नं ग्रहं ग्रहीष्यन्भवति तदस्यैन्द्राग्नेनैवाऽनुवषट्कृता भवन्ति ॥ २१ ॥ यद्वेवैन्द्राग्नं ग्रहं गृह्णाति । सर्वं वा ऽइदं प्राऽजीजनद्य ऽऋतुग्रहान्ग्रहीत्स ऽइदꣳ सर्वं प्रजनय्येदमेवैतत्सर्वं प्राणोदानयोः प्प्रतिष्ठापयति तदिदꣳ सर्वं प्राणोदानयोः प्प्रतिष्ठितमिन्द्राग्नी हि प्प्राणोदानाविमे हि द्यावापृथिवी प्प्राणोदानावनयोर्हीदꣳ सर्वं प्रतिष्ठितम् ॥ २२ ॥ यद्वेवैन्द्राग्नं † ग्रहं गृह्णाति । सर्वं वा ऽइदं प्राऽजी-

(१) शु० स० अ० ७ क० ३०। (२) शु० स० अ० ७ क० ३०। (३) शु० स० अ० ७ क० ३०। (४) शु० स० अ० ७ क० ३०। (५) शु० स० अ० ७ क० ३०।

* का० श्रौ० सू० ९ ११ १८।

† का० श्रौ० सू० ९. ११ १९-२०।

जनय्य ऽऋतुग्रहानगृहीत्स ऽइदꣳ सर्वं प्रजनय्याऽस्मिन्नेवै-तत्सर्वस्मिन्प्राणोदानौ दधाति ताविमावस्मिन्त्सर्वस्मिन्प्राणोदानौ हि तौ ॥ २३ ॥ अथाऽतो गृह्णात्येव । 'इन्द्राग्नी ऽआगतꣳ सुतं गीर्भिर्नभो वरेण्यम् । अस्य पातं धियेषिता । उपयामगृहीतोसीन्द्राग्निभ्यान्त्वैष ते योनिरिन्द्राग्निभ्यान्त्वे'ति सादयतीन्द्राग्निभ्याꣳ ह्येनं गृह्णाति ॥ २४ ॥ अथ वैश्वदेवं ग्रहं गृह्णाति । सर्वं वा ऽइदं प्राऽजीजनय्य ऽऋतुग्रहानग्रहीत्स यद्धैतावदेवाऽभविष्यद्यावत्यो हैवाऽग्रे प्रजाꣳ सृष्टास्तावत्यो हैवाऽभविष्यन्न प्राऽजनिष्यन्त ॥ २५ ॥ अथ यद्वैश्वदेवं * ग्रहं गृह्णाति । इदमेवैतत्सर्वमिमाꣳ प्रजा यथायथं व्यवसृजति तस्मादिमाꣳ प्रजाꣳ पुनरभ्यावर्त्तं प्रजायन्ते शुक्रपात्रेण गृह्णात्येष वै शुक्रो य ऽएष तपति तस्य ये रश्मयस्ते विश्वे देवास्तस्माच्छुक्रपात्रेण गृह्णाति ॥२६॥ अथाऽतो † गृह्णात्येव । 'ओमासश्चर्षणीधृतो विश्वे देवास ऽआगत । दाश्वाꣳसो दाशुषꣳ सुतम् । उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्य ऽएष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य' ऽइति सादयति विश्वेभ्यो ह्येनं देवेभ्यो गृह्णाति ॥ २७ ॥ (A)

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

---

( १ ) शु० सं० अ० ७ क० ३१ ।

* का० श्रौ० सू० ९. १४. १ ।

† का० श्रौ० सू० ९. १४. १ ।

( २ ) शु० सं० अ० ७ क० ३३ ।

( A ) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. १. २; तै० सं० ६. ५. ४; क० सं० २८. २, कपि० सं० ४४. २ । मै० सं० ४. ६. ७,८;

[ शस्त्रप्रतिगरः ]

गृणाति ह वा ऽएतद्धोता यच्छꣳसति । तस्मा ऽएतद् गृणते प्रत्येवाऽध्वर्युराऽगृणाति तस्मात् * प्रतिगरो नाम ॥ १ ॥ तं वै प्राञ्चमासीनमाह्वयते । सर्वे वा ऽअन्य ऽउद्गातुः प्राञ्च ऽआर्त्विज्यं कुर्वन्ति तथो हाऽस्यैतत्प्रागेवाऽऽर्त्विज्यं कृतं भवति ॥ २ ॥ प्रजापतिर्वा ऽउद्गाता । योषर्ग्घोता स ऽएतत् प्रजापतिरुद्गाता योषायामृचि होतरि रेतः सिञ्चति यत्स्तुते तद्धोता शस्त्रेण प्रजनयति तच्छ्यति यथाऽयं पुरुषः शितस्तद्यदेनच्छ्यति तस्माच्छस्त्रं नाम ॥ ३ ॥ तदुपपर्यावृत्य प्रतिगृणाति । इदमेवैतद्रेतः सिक्तमुपनिमदत्यथ यत्पराङ् तिष्ठन्प्रतिगृणीयात्पराग्घैवैतद्रेतः सिक्तं प्रणश्येत्तन्न प्रजायेत सम्यञ्चा ऽउ चैवैतद्भूत्वैतद्रेतः सिक्तं प्रजनयतः ॥ ४ ॥ यातयामानि वै देवैश्छन्दाꣳसि । छन्दोभिर्हि देवाः स्वर्गं लोकꣳ समाश्नुवत मदो वै प्रतिगरो यो वा ऽऋचि मदो यः सामन्त्सो वै स तच्छन्दःस्वेवैतद्रसं दधात्ययातयामानि करोति तैरयातयामैर्यज्ञं तन्वते ॥५॥ तस्माद्यद्यर्द्धर्चशः शꣳसेत् । अर्द्धर्चेऽर्द्धर्चे प्रतिगृणीयाद्यदि पच्छः शꣳसेत्पदे पदे

---

* यत्र यत्र होत्रा 'शोंसावोम्' इति आह्वावं क्रियते तत्र तत्र सर्वत्र तत्समकालमेव अध्वर्युणा 'शोंसामो दैव' इति कार्यः । एवम्— 'अध्वर्यो शोंसावोम्, अध्वर्यो शोशोंसावोम्' इत्यत्राऽपि 'शोंसामो दैव' इत्येव प्रतिगरः । शस्त्रे काश्चन ऋचोऽर्धर्चशः, काश्चन पच्छः पठ्यन्ते । तत्र अर्धर्चे पच्छे च होत्रा अवसिते 'ओथामो दैव' इति प्रतिगरः । एवं शस्त्रे सर्वा ऋचः प्रणवान्ताः पठ्यन्ते । तत्र सर्वत्र 'ओ३थामो दैव' इति प्रतिगरः । एवं शस्त्रसमाप्तौ ऋक् प्रणवान्ता पठ्यते, तत्र तु 'ओ३म्' इति त्रिमात्रं प्रणव प्रतिगरः । निवित्सु अपि 'ओथामो दैव' इत्येव प्रतिगरः । यथा— 'अग्निर्देवेद्धः ओथामो दैव' इत्यादि । निविदस्तु निविदध्याये (ऋ० परि० १) द्रष्टव्याः ॥

प्रतिगृणीयाद्यत्र वै शंसन्नवानिति तदसुररक्षसानि यज्ञमन्ववचरन्ति तत्प्रतिगरेण सन्दधाति नाष्ट्राणाꣳ रक्षसामनन्ववचाराय यजमानस्यो चैवैतद् भ्रातृव्यलोकं छिनत्ति ॥६॥ चतुरक्षराणि ह वा ऽअग्रे च्छन्दाꣳस्यासुः । ततो जगती सोममच्छापतत्सा त्रीण्यक्षराणि हित्वाऽऽजगाम ततस्त्रिष्टुप्सोममच्छापतत्सैकमक्षरꣳ हित्वाऽऽजगाम ततो गायत्री सोममच्छापतत्सैतानि चाऽक्षराणि हरन्त्यागच्छत्सोमं च ततोऽष्टाक्षरा गायत्र्यभवत्तस्मादाहुरष्टाक्षरा गायत्रीति ॥ ७ ॥ तया प्रातःसवनमतन्वत । तस्माद्गायत्रं प्रातःसवनं तयैव माध्यन्दिनꣳसवनमतन्वत ताꣳ ह त्रिष्टुबुवाचोप त्वाऽहमायानि त्रिभिरक्षरैरुप मा ह्वयस्व मा मा यज्ञादन्तर्गा ऽइति तथेति तामुपाऽऽह्वयत तत ऽएकादशाक्षरा त्रिष्टुबभवत्तस्मादाहुस्त्रैष्टुभं माध्यन्दिनꣳसवनमिति ॥ ८ ॥ तयैव तृतीयसवनमतन्वत । ताꣳ ह जगत्युवाचोप त्वाऽहमायान्येकेनाऽक्षरेणोप मा ह्वयस्व मा मा यज्ञादन्तर्गा ऽइति तथेति तामुपाऽऽह्वयत ततो द्वादशाक्षरा जगत्यभवत्तस्मादाहुर्जागतं तृतीयसवनमिति ॥ ९ ॥ तदाहुः । गायत्राणि वै सर्वाणि सवनानि गायत्री ह्येवैतदुपरजमानैदिति तस्मात्सꣳसिद्धं प्रातःसवने प्रतिगृणीयात्सꣳसिद्धा हि गायत्र्यागच्छत्सकृन्मद्वन्माध्यन्दिने सवन ऽएकꣳ हि साक्षरꣳ हित्वाऽगच्छत्तेनैवैनामेतत्समर्द्धयति कृत्स्नां करोति ॥ १० ॥ यत्र त्रिष्टुभꣳ शस्यन्ते । त्रिमद्वत्तृतीयसवने त्रीणि हि साक्षराणि

हित्वाऽगच्छत्तैरेवैनामेतत्समर्द्धयति कृत्स्नां करोति ॥ ११ ॥ * यत्र द्यावापृथिव्यः शस्यते । इमे ह वै द्यावापृथिवी-ऽइमाः प्रजा ऽउपजीवन्ति तदनयोरेवैतद् द्यावा पृथिव्यो रसन्दधाति ते रसवत्या ऽउपजीवनीये ऽइमाः प्रजा-ऽउपजीवन्ति स वां ऽओ३मित्येव प्रतिगृणीयात्तद्धि सत्यं तद्देवा विदुः ॥ १२ ॥ तद्धैके । ओथामो दैव वागिति प्रतिगृणन्ति वाक्प्रतिगर ऽएतद्वाचमुपाऽऽप्नुम ऽइति वदन्त-स्तदु तथा न कुर्याद्यथा वै कथा च प्रतिगृणात्युपाऽऽसैवा-ऽस्य वाग्भवति वाचा हि प्रतिगृणाति तस्मादो३मित्येव प्रतिगृणीयात्तद्धि सत्यं तद्देवा विदुः ॥ १३ ॥ (B)

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ अथ माध्यन्दिनसवनम् ]

( तत्र मरुत्वतीयग्रहादि )

† इहा३ ऽइहा३ ऽइत्यभिषुणोति । इन्द्रमेवैतद्वाच्च्या-वयति बृहद्बृहदितीन्द्रमेवैतद्वाच्च्यावयति ॥ १ ॥ स शुक्रामन्थिनौ प्रथमौ गृह्णाति । शुक्रवद्ध्येतत्सवनमथा-ऽऽग्रयणः सर्वेषु ह्येष सवनेषु गृह्यतेऽथ मरुत्वतीयमथो-क्थ्यमुक्थानि ह्यत्राऽपि भवन्ति ॥ २ ॥ तद्धैके । ‡ उक्थ्यं

* अत्र शतम् २५०० ।

(B) एतद्ब्रह्मगस्था निवदा अन्यत्राऽप्युपलभ्यन्ते यथा—शा० श्रौ० ७. १. ३; तै० सं० ३. २. ९ ।

† का० श्रौ० सू० ९. १४. ६–९ ।

‡ "उक्थ्यं गृहीत्वा मरुत्वतीयौ । पुनर्वा विपरीतम् । मध्य उक्थ्यमभितो मरुत्वतीया-वित्येके" ( आप० श्रौ० सू० १२. २. ३ )

गृहीत्वाऽथ मरुत्वतीयं गृह्णन्ति तदु तथा न कुर्य्यान्मरुत्वतीयमेव गृहीत्वाऽथोक्थ्यं गृह्णीयात् ॥ ३ ॥ तान्वाऽएतान्। पञ्च ग्रहान् गृह्णात्येष वै वज्रो यन्माध्यन्दिनः पवमानस्तस्मात्पञ्चदशः पञ्च सामा भवति पञ्चदशो हि वज्रः स ऽएतैः पञ्चभिर्ग्रहैः पञ्च वा ऽइमा ऽअङ्गुलयोऽङ्गुलिभिर्वै प्रहरति ॥ ४ ॥ इन्द्रो वृत्राय वज्रं प्रजहार। स वृत्रं पाप्मानꣳ हत्वा विजितेऽभयेऽनाष्ट्रे दक्षिणा निनाय तस्मादप्येतर्हि यदेवैतेन माध्यन्दिनेन पवमानेन स्तुवतेऽथ विजितेऽभयेऽनाष्ट्रे दक्षिणा नीयन्ते तथोऽएवैष ऽएतैः पञ्चभिर्ग्रहैः पाप्मने द्विषते भ्रातृव्याय वज्रं प्रहरति स वृत्रं पाप्मानꣳ हत्वा विजितेऽभयेऽनाष्ट्रे दक्षिणा नयति तस्माद्वा ऽएतान्पञ्च ग्रहान्गृह्णाति ॥ ५ ॥ तद्यन्मरुत्वतीयान्गृह्णाति । एतद्वा ऽइन्द्रस्य निष्केवल्यꣳ सवनं यन्माध्यन्दिनꣳ सवनं तेन वृत्रमजिघाꣳसत्तेन व्यजिगीषत मरुतो वा ऽइत्यश्वत्थेऽपक्रम्य तस्थुः क्षत्रं वा ऽइन्द्रो विशो मरुतो विशा वै क्षत्रियो बलवान्भवति तस्मादाश्वत्थे ऽऋतुपात्रे स्यातां काष्मर्य्यमये त्वेव भवतः ॥ ६ ॥ तानिन्द्र ऽउपमन्त्रयाञ्चक्रे। उपमाऽऽवर्त्तध्वं युष्माभिर्बलेन वृत्रꣳ हनानीति ते होचुः किं नस्ततः स्यादिति तेभ्य ऽएतौ मरुत्वतीयौ ग्रहाऽवगृह्णात् ॥ ७ ॥ ते होचुः। अपनिधायैनमोज ऽउपाऽऽवर्त्तामहा ऽइति त ऽएनमपनिधायैवौज ऽउपाऽऽववृतुस्तद्वा-

(१) शु॰ सं॰ अ॰ ७ क॰ ३४।

ऽइन्द्रोऽस्पृणुताऽपनिधाय वै मौज ऽउपाऽवृतन्निति ॥ ८ ॥ स होवाच । सहैव मौजसोपाऽऽवर्त्तेद्ध्वमिति तेभ्यो वै नस्तृतीयं ग्रहं गृहाणेति तेभ्य ऽएतं तृतीयं गृहमगृह्णा-'दुपयामगृहीतोऽसि मरुतान्त्वौजस' ऽइति त ऽएनꣳ सहैवौजसोपाऽऽवर्त्तन्त तैर्व्यजयत तैर्वृत्रमहन्क्षत्रं वा-ऽइन्द्रो विशो मरुतो विशा वै क्षत्रियो बलवान्भवति तत्क्षत्र ऽएवैतद्बलं दधाति तस्मान्मरुत्वतीयान्गृह्णाति ॥ ९ ॥ स वा ऽइन्द्रायैव मरुत्वते गृह्णीयात् । नाऽपि मरुद्भ्यꣳ स यद्धाऽपि मरुद्भ्यो गृह्णीयात्प्रत्युद्यामिनीꣳ ह क्षत्राय विशं कुर्य्यादथैतदिन्द्रमेवाऽनु मरुत ऽआभजति तत्क्षत्रायैवैतद्विशं कृतानुकरामनुवर्त्मानं करोति तस्मा-दिन्द्रायैव मरुत्वते गृह्णीयान्नाऽपि मरुद्भ्यꣳ ॥ १० ॥ अप-क्रमादु हैवैषामेतद्बिभयाञ्चकार । यदिमे मन्नाऽपक्रामेयु-र्य्यन्नाऽन्यद्भियेरन्निति तानेवैतदनपक्रमिणोऽकुरुत तस्मा-दिन्द्रायैव मरुत्वते गृह्णीयान्नाऽपि मरुद्भ्यꣳ ॥ ११ ॥ ऋतु-पात्राभ्यां गृह्णाति । ऋतवो वै संवत्सरो यज्ञस्तेऽदुꣳ प्रातꣳसवने प्रत्यक्षमवकल्पयन्ते यदृतुग्रहान्गृह्णात्यथैत-त्परोऽक्षं माध्यन्दिने सवनेऽवकल्पयन्ते यदृतुपात्राभ्यां मरुत्वतीयान्गृह्णाति विशो वै मरुतोऽन्नं वै विश ऽऋतवो वा ऽइदꣳ सर्वमन्नाद्यं पचन्ति तस्मादृतुपात्राभ्यां मरु-त्वतीयान्गृह्णाति ॥ १२ ॥ अथाऽतो * गृह्णात्येव । 'इन्द्रं

* का० श्रौ० सू० १० १ १३ ।

(१) यु० सं० अ० ७ क० ३५ ।

मरुत्व ऽइह पाहि सोमं यथा शार्य्याते ऽअपिबः सुतस्य ।
तव प्रणीती तव शूर शर्म्मन्नाविवासन्ति कवयः सु यज्ञाः ।
उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत ऽएष ते योनिरि-
न्द्राय त्वा मरुत्वते' ॥ १३ ॥ 'मरुत्वन्तं वृषभम् । वा-
वृधानमकवारिं दिव्यꣳ शासमिन्द्रम् । विश्वासाहमवसे
नूतनायोग्रꣳ सहोदामिह तꣳ हुवेम । उपयामगृहीतो-
ऽसीन्द्राय त्वा मरुत्वत ऽएष ते योनिरिन्द्राय त्वा मरु-
त्वते । उपयामगृहीतोऽसि मरुतान्त्वौजसे' ऽइति तृतीयं
* गृहं गृह्णाति ॥ १४ ॥ अथ माहेन्द्रं गृहं गृह्णाति ।
पाप्मना वा ऽएतदिन्द्रः सꣳसृष्टोऽभूद्यद्विशा मरुद्भिः
स यथा विजयस्य कामाय विशा समाने पात्रेऽश्नीयादेवं
तद्यदस्मा ऽएतं मरुद्भिः समानं ग्रहमगृह्णन् ॥ १५ ॥
तन्देवाः । सर्वस्मिन्विजितेऽभयेऽनाष्ट्रे यथेषीकां मुञ्जा-
द्विवृहेदेवꣳ सर्वस्मात्पाप्मनो व्यवृहन्यन्माहेन्द्रं ग्रहम-
गृह्णँस्तथो ऽएवैष ऽएतद्यथेषीका विमुञ्जा स्यादेवꣳ सर्व-
स्मात्पाप्मनो निर्मुच्यते यन्माहेन्द्रं ग्रहं गृह्णाति ॥१६॥
यद्वेव माहेन्द्रं गृहं गृह्णाति । इन्द्रो वा ऽएष पुरा वृत्रस्य
वधादथ वृत्रꣳ हत्वा यथा महाराजो विजिग्यान ऽएवं
महेन्द्रोऽभवत्तस्मान्माहेन्द्रं गृहं गृह्णाति महान्तमु चैवै-
नमेतत्खलु करोति वृत्रस्य वधाय तस्माद्वेव माहेन्द्रं
गृहं गृह्णाति शुक्रपात्रेण गृह्णात्येष वै शुक्रो य ऽएष तप-

( १ ) शु० सं० अ० ७ क० ३६ ।

* का० श्रौ० सू० १. ३. ६ ।

त्येष ऽउ ऽएव महाँस्तस्माच्छुक्रपात्रेण गृह्णाति ॥ १७ ॥
अथाऽतो * गृह्णात्येव । 'महाँ२ ऽइन्द्रो नृवदा चर्षणिप्रा-
ऽउत द्विबर्हा ऽअमिनः सहोभिः । अस्मद्र्यग्वावृधे
वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत् । उपयामगृहीतोऽसि
महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वेति सादयति महेन्द्राय
ह्येनं गृह्णाति ॥ १८ ॥ † अथोपाकृत्यैतां वाचं वदति ।
अभिषोतारोऽभिषुणुतौलूखलानुद्वादयताऽग्नीदाशिरं विनय
सौम्यस्य वित्तादिति ते वै तृतीसवनायैवाऽभिषोतारोऽभि-
षुण्वन्ति तृतीयसवनायौलूखलानुद्वादयन्ति तृतीयसवना-
याऽग्नीदाशिरं विनयति तृतीयसवनाय सौम्यं चरुꣳ
श्रपयत्येते वै शुक्रवती रसवती सवने यत्प्रातःसवनञ्च
माध्यन्दिनञ्च सवनमथैतन्निर्धीतशुक्रं यत्तृतीयसवनं
तदेवैतस्मान्माध्यन्दिनात्सवनान्निर्मिमीते तथो हाऽस्यै-
तच्छुक्रवद्रसवत्तृतीयसवनं भवति तस्मादेतामत्र वाचं
वदति ॥ १९ ॥ (C)

## तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥
कण्डिकासंख्या ॥ १३९ ॥



---

* का० श्रौ० सू० १०. ३. ११ ।

(१) शु० यं० अ० ७ क० ३९ ।

† "शुक्रं पूतभृत्याक्षिप्य गृह्णमुपाकृत्य प्रेष्यत्यभिषोतारोऽभिषुणुतौलूखलानुद्वादयताऽग्नीदाशिरं विनय सौम्यस्य वित्तादिति" ( का० श्रौ० सू० १०. ३. १२ ) ।

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ३. ४, कठ० सं० २८. १. १; कपि० सं० ४४. ३. २; तै० सं० ६. ५. ५ ।

[ दाक्षिणहोमो दक्षिणादानश्च ]

घ्नन्ति वा ऽएतद्यज्ञम्। यदेनं तन्वते यन्न्वेव राजानमभिषुण्वन्ति तत्तं घ्नन्ति यत्पशुः संज्ञपयन्ति विशासति तत्तं घ्नन्त्युलूखलमुसलाभ्यां दृषदुपलाभ्याᳬं हविर्यज्ञं घ्नन्ति ॥ १ ॥ स ऽएष यज्ञो हतो न ददक्षे। तन्देवा दक्षिणाभिरदक्षयँस्तद्यदेनं दक्षिणाभिरदक्षयँस्तस्माद्दक्षिणा नाम तद्यदेवाऽत्र यज्ञस्य हतस्य व्यथते तद्देवाऽस्यैतद्दक्षिणाभिर्दक्षयत्यथ समृद्ध ऽएव यज्ञो भवति तस्माद्दक्षिणा ददाति ॥ २ ॥ तद्वै षड् द्वादशेत्येव हविर्यज्ञे ददति। न ह त्वेवाऽशतदक्षिणः सौम्योऽध्वरः स्यादेष वै प्रत्यक्षं यज्ञो यत्प्रजापतिः पुरुषो वै प्रजापतेर्नेदिष्ठः सोऽयः शतायुः शततेजाः शतवीर्यस्तः शतेनैव दक्षयति नाऽशतेन तस्मान्नाऽशतदक्षिणः सौम्योऽध्वरः स्यान्नो हैवाऽशतदक्षिणेन यजमानस्यर्त्विक् स्यान्नेदस्याऽक्षिभूरसानि यमिमे हनिष्यन्त्येव न दक्षयिष्यन्तीति ॥ ३ ॥ द्वया वै * देवा देवाः। अहैव देवा ऽअथ ये ब्राह्मणाः शुश्रुवाᳬसोऽनूचानास्ते मनुष्यदेवास्तेषां द्वेधा विभक्त ऽएव यज्ञ ऽआहुतय ऽएव देवानां दक्षिणा मनुष्यदेवानां ब्राह्मणानाᳬं शुश्रुवुषामनूचानानामाहुतिभिरेव देवान्प्रीणाति दक्षिणाभिर्मनुष्यदेवान् ब्राह्मणाञ्छुश्रुवुषोऽनूचानाँस्त ऽएनमुभये देवाः प्रीताः स्वर्गं लोकमभिवहन्ति ॥ ४ ॥ ता वा ऽएताः। ऋत्विजामेव दक्षिणा-

* 'देवा' इति नास्ति 'ग' पुस्तके।

ऽअन्यं वा ऽएत ऽएतस्याऽऽत्मानꣳ संस्कुर्वन्त्येतं य्यन्नमृङ्मयं यजुर्म्मयꣳ साममयमाहुतिमयꣳ सोऽस्याऽमुष्मिँल्लोकऽआत्मा भवति तद्ये माऽजीजनन्नेति तस्मादृत्विग्भ्यऽएव दक्षिणा दद्यान्नाऽनृत्विग्भ्यः ॥ ५ ॥ अथ प्प्रतिपरेत्य गार्हपत्यम् । दाक्षिणानि जुहोति स दशाहोमीये वाससि हिरण्यं प्रबध्याऽवधाय जुहोति देवलोके मेऽप्यसदिति वै यजते यो यजते सोऽस्यैष यज्ञो देवलोकमेवाऽभिप्प्रैति तदनूची दक्षिणा यां ददाति सैति दक्षिणामन्वारभ्य यजमानः ॥ ६ ॥ चतस्रो वै दक्षिणाः । हिरण्यं गौर्वासोऽश्वो न वै तदवकल्पते यदश्वस्य पादमवदध्याद्वा गोः पादमवध्यात्तस्माद्दशाहोमीये वाससि हिरण्यं प्रबध्याऽवधाय जुहोति ॥ ७ ॥ सौरीभ्यामृग्भ्यां * जुहोति । तमसा वा ऽअसौ लोकोऽन्तर्हितः स ऽएतेन ज्ज्योतिषा तमोऽपहत्य स्वर्गं लोकमुपसङ्क्रामति तस्म्मात्सौरीभ्यामृग्भ्यां जुहोति ॥ ८ ॥ स जुहोति । 'उदुत्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्य्यꣳ स्वाहे'त्येतया गायत्र्या गायत्री वा ऽइयं पृथिवी सेयं प्रतिष्ठा तदस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठति ॥ ९ ॥ अथ † द्वितीयां जुहोति । 'चित्रं देवानामुदगादनीकं चक्षुर्म्मित्रस्य वरुणस्याऽग्नेः । आप्प्रा द्यावा पृथिवी ऽअन्तरिक्षꣳ सूर्य्यऽआत्मा जगतस्तस्थुषश्च स्वाहे'त्येतया त्रिष्टुभा लोक-

* का० श्रौ० सू० १०, २ ४।

(१) शु० य० सं० ७ क० ४१। (२) शु० सं० अ० ७ क० ४२।

† का० श्रौ० सू० १०, २, ५।

मेवैतयोपप्रैति ॥ १० ॥ अथाऽऽग्नीध्रे । द्वे वैकां वा जुहोति तद्यदग्नावाऽऽग्नीध्रे द्वे वैकां वा जुहोत्यग्निर्ह्वै पशूनामीष्टे त ऽएनमभितः परिणिविशन्ते तमेतयाऽऽहुत्या प्रीणाति सोऽस्मै प्रीतोऽनुमन्यते तेनाऽनुमतां ददाति ॥ ११ ॥ स * जुहोति । 'अग्ने नय सुपथा राये ऽअस्मान्विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम ऽउक्तिं विधेम स्वाहे'त्यथ यद्यश्वं स्युक्तं वाऽस्युक्तं वा दास्यन्त्स्यादथ द्वितीयां जुहुयाद्यद्यु न नाऽऽद्रियेत ॥ १२ ॥ स † जुहोति । 'अयं नो ऽअग्निर्वरिवस्कृणोत्वयम्मृधः पुर ऽएतु प्रभिन्दन् । अयं वाजाञ्जयतु वाजसातावयः शत्रूञ्जयतु जर्हृषाणः स्वाहे'ति वाजसा ह्यश्वः ॥ १३ ॥ अथ ‡ हिरण्यमादाय शालामभ्यैति । दक्षिणेन वेदिं दक्षिणा ऽउपतिष्ठन्ते सोऽग्रेण शालां तिष्ठन्नभिमन्त्रयते 'रूपेण वो रूपमभ्यागामि'ति न ह वा ऽअग्रे पशवो दानाय चक्षमिरे तेऽपनिधाय स्वानि रूपाणि शरीरैः प्रत्युपाऽतिष्ठन्त तानेतद्देवाः स्वैरेव रूपैर्य्यजुषाऽऽद्धादुपाऽयँस्ते स्वानि रूपाणि जानाना ऽअभ्यवायँस्ते रातमनसोऽलं दानायाऽभवँस्तथो ऽएवैनानेष ऽएतत्स्वैरेव रूपैर्य्यजुषाऽऽद्धादुपैति ते स्वानि

* का० श्रौ० सू० १०, २ ६ ।
( १ ) शु० सं० अ० ७ क० ४३ ।
† का० श्रौ० सू० १० २ ७ ।
( २ ) शु० स० अ० ७ क० ४४ ।
‡ का० श्रौ० सू० १० २ ८, ९ ।
( ३ ) शु० स० अ० ७ क० ४५ ।

रूपाणि जानाना ऽअभ्युवायन्ति ते रातमनसोऽलं दानाय भवन्ति ॥ १४ ॥ ‘[1]तुथो वो विश्ववेदा विभजत्वि’ति । ब्रह्म वै तुथस्तदेना ब्रह्मणा विभजति ब्रह्म वै दक्षिणीयं चाऽदक्षिणीयं च वेद तुथो हाऽस्यैता दक्षिणीयायैव दत्ता भवन्ति नाऽदक्षिणीयाय ॥ १५ ॥ ‘[2]ऋतस्य पथा प्रेते’ति । यो वै देवानां पथैति स ऽऋतस्य पथैति- ‘चन्द्र[3]दक्षिणा’ ऽइति तदेतेन ज्योतिषा यन्ति ॥ १६ ॥ अथ * सदोऽभ्यैति । ‘[4]वि स्वः पश्य व्यन्तरिक्षमि’ति वि त्वया दक्षिणया लोकं ख्येपमित्येवैतदाह ॥ १७ ॥ † अथ सदः प्रेक्षते । ‘[5]यतस्व सदस्यै’रिति मा त्वा सदस्या ऽअतिरिक्षतेत्येवैतदाह ॥ १८ ॥ अथ ‡ हिरण्यमादायाऽऽग्नीध्रमभ्यैति । ‘[6]ब्राह्मणमद्य विदेयं पितृमन्तं पैतृमत्यमि’ति यो वै ज्ञातो ज्ञातकुलीनः स पितृमान्पैतृमत्यो या वै ज्ञाताया ऽपि कतिपयीर्दक्षिणा ददाति ताभिर्म्महज्जय’[7]त्यृषिमार्षेयमि’ति यो वै ज्ञातोऽनूचानः स ऽऋषिरार्षेयः ‘[8]सुधातुदक्षिणमि’ति स हि सुधातुदक्षिणः ॥ १९ ॥ अथैवमुपसद्य । अग्नीधे हिरण्यं ददा’[9]त्यस्म्मद्राता देवत्रा

(१) शु० सं० अ० ७ क० ४५। (२) शु० सं० अ० ७ क० ४५। (३) शु० सं० अ० ७ क० ४५।

* का० श्रौ० सू० १० २ १६।

(४) शु० सं० अ० ७ क० ४५।

† का० श्रौ० सू० १० २ १७।

(५) शु० सं० अ० ७ क० ४५।

‡ का० श्रौ० सू० १० २. १८, १९।

(६) शु० सं० अ० ७ क० ४५। (७) शु० सं० अ० ७ क० ४६। (८) शु० सं० अ० ७ क० ४६। (९) शु० सं० अ० ७ क० ४६।

गच्छते'ति यां वै रातमना ऽअविचिकित्सन्दक्षिणां ददाति तया महज्जयति देवत्रा गच्छतेति देवलोके मे ऽप्यसदिति वै यजते यो यजते तद्देवलोक ऽएवैनमेतद-पित्विनं करोति 'प्रदातारमाविशते'ति मामाविशते-त्येवैतदाह तथो हाऽस्मादेताः पराच्यो न प्रणश्यन्ति तद्यदग्नीधे प्रथमाय दक्षिणां ददात्यतो हि विश्वे देवा-ऽअमृतत्वमपाऽजयँस्तस्मादग्नीधे प्रथमाय दक्षिणां ददा-ति ॥ २० ॥ अथैवमेवोपसद्य । * आत्रेयाय हिरण्यं ददाति यत्र वा ऽअदः प्रातरनुवाकमन्वाहुस्तद्ध स्मैत-त्पुरा शश्वत्सन्त्यग्निर्वा ऽऋषीणाꣳ होता साऽथैतत्सदोऽसु-रतमसमभिपुप्लुवे त ऽऋषयोऽत्रिमब्रुवन्नेहि प्रत्यङ्ङिदं तमोऽपजहीति स ऽएतत्तमोऽपाऽहन्नयं वै ज्योतिर्य ऽइदं तमोऽपाऽवधीदिति तस्मा ऽएतज्ज्योतिर्हिरण्यं दक्षिणा-मनयज्ज्योतिर्हि हिरण्यं तद्वै स तत्तेजसा वीर्येणार्षिस्त-मोऽपजघानाऽथैष ऽएतेनैवैतज्ज्योतिषा तमोऽपहन्ति तस्मा-दात्रेयाय हिरण्यं ददाति ॥ २१ ॥ † अथ ब्रह्मणे । ब्रह्मा हि यज्ञं दक्षिणतोऽभिगोपायत्यथोद्गात्रेऽथ होत्रेऽथाऽध्वर्यु-भ्याꣳ हविर्धाने ऽआसीनाभ्यामथ पुनरेत्य प्रस्तोत्रेऽथ मैत्रावरुणायाऽथ ब्राह्मणाच्छꣳसिनेऽथ पोत्रेऽथ नेष्ट्रेऽथा-ऽच्छावाकायाऽथोन्नेत्रेऽथ ग्रावस्तुतेऽथ सुब्रह्मण्यायै प्रतिहर्त्रे-

(१) शु० स० अ० ७ क० ४६।

* का० श्रौ० सू० १०. २. २०।

† का० श्रौ० सू० १०. २. २५, २६।

ऽउत्तमाय ददाति प्रतिहर्त्ता वा ऽएष सोऽस्मा ऽएतदन्ततः प्रतिहरति तथो हाऽस्मादेताः पराच्च्यो न प्रणश्यन्ति ॥२२॥ अथाऽऽहेन्द्राय मरुत्वतेऽनुब्रूहीति । यत्र वै प्रजापतिरग्रे ददौ तद्धेन्द्र ऽईक्षाञ्चक्रे सर्वं वा ऽअयमिदं दास्यति नाऽस्मभ्यं किञ्चन परिशेक्ष्यतीति स ऽएतं वज्रमुदयच्छदिन्द्राय मरुत्वते ऽनुब्रूहीत्यदानाय ततो नाऽददात्स ऽएषोऽप्येतर्हि तथैव वज्र ऽउद्यम्यत ऽइन्द्राय मरुत्वतेऽनुब्रूहीत्यदानाय ततो न ददाति ॥२३॥ चतस्रो वै दक्षिणाः। हिरण्यमायुर्वै तेनाऽऽत्मनस्त्रायत ऽआयुर्हि हिरण्यं तदग्नय ऽआग्नीध्रं कुर्वं तेऽददात्तस्मादुप्येतर्ह्यग्नीधे हिरण्यं दीयते ॥२४॥ अथ गौः। प्राणमेवैतयाऽऽत्मनस्त्रायते प्राणो हि गौरन्नः हि गौरन्नः हि प्राणस्ताः रुद्राय होत्रेऽददात् ॥ २५ ॥ अथ वासः । त्वचमेवैतेनाऽऽत्मनस्त्रायते त्वग्घि वासस्तद् बृहस्पतय ऽउद्गात्रे ऽददात् ॥२६॥ अथाऽश्वः । वज्रो वा ऽअश्वो वज्रमेवैतत्पुरोगां कुरुते यमलोके मेऽप्यसद्दिति वै यजते यो यजते तद्यमलोक ऽएवैनमेतदपित्विनं करोति तं व्यमाय ब्रह्मणेऽददात् ॥ २७ ॥ स * हिरण्यं प्रत्येति । 'अग्नये त्वा मह्यं वरुणो ददात्वि'त्यग्नये ह्येतद्वरुणोऽददा'त्सोऽमृतत्वमशीयाऽऽयुर्दात्र ऽएधि मयो मह्यं प्रतिग्रहीत्र' ऽइति ॥२८॥ अथ † गां प्रत्येति । 'रुद्राय त्वा मह्यं वरुणो ददात्वि'ति

* 'अग्नये त्वेति हिरण्य प्रतिगृह्णीतः' ( का० श्रौ० सू० १०. २ २७ )
( १ ) उ० सं० अ० ७ क० ४७ । ( २ ) उ० सं० अ० ७ क० ४७ ।
† 'रुद्राय त्वेति गाम्' ( का० श्रौ० सू० १० २ २८ क ) ।
( १ ) उ० सं० अ० ७ क० ४७ ।

रुद्राय गेतां ब्राह्मणोऽददा'त्सोऽमृतत्वमशीय प्राणो दात्र ऽएधि वयो मह्यं प्रतिग्रहीत्र' ऽइति ॥ २९ ॥ अथ * वासः प्रत्येति । 'बृहस्पतये त्वा मह्यं वरुणो ददात्वि'ति बृहस्पतये ह्येतद्वरुणोऽददात्सो'ऽमृतत्व-मशीय त्वग्दात्र ऽएधि मयो मह्यं प्रतिग्रहीत्र' ऽइति ॥ ३० ॥ † अथाऽश्वम्प्रत्येति । 'यमाय त्वा मह्यं वरुणो ददात्वि'ति यमाय ह्येतं वरुणोऽददा'त्सोऽमृतत्वम-शीय हयो दात्र ऽएधि वयो मह्यं प्रतिग्रहीत्र' ऽइति ॥३१॥ ‡ अथ यदन्यद्ददाति । कामेनैव तद्ददातीदं मेऽप्ययमुत्रा-ऽसदिति तत्प्रत्येति 'कोऽदात्कस्मा ऽअदात्कामोऽदात्का-मायाऽदात् । कामो दाता कामः प्रतिग्रहीता कामैतत्त' ऽइति तद्देवताया ऽअतिदिशति ॥ ३२ ॥ तदाहुः । न देव-ताया ऽअतिदिशेदिदं वै यां देवताᳬ समिन्धे सा दीप्य-माना श्वः-श्वः श्रेयसी भवतीदं वै यस्मिन्नग्नावभ्यादधति स दीप्यमान ऽएव श्वः-श्वः श्रेयान्भवति श्वः-श्वो ह वै श्रेयान्भवति य ऽएवं विद्वान्प्रतिगृह्णाति तद्यथा समिद्धे

(१) शु० यं० अ० ७ क० ४७ ।

* 'बृहस्पतये त्वेति वासः' (का० श्रौ० सू० १०. २. २८ ग) ।

(२) शु० यं० अ० ७ क० ४७ । (३) शु० यं० अ० ७ क० ४७ ।

† 'यमाय त्वेत्यश्वम्' (का० श्रौ० सू० १०. २. २८ ग) ।

(४) शु० यं० अ० ७ क० ४७ । (५) शु० यं० अ० ७ क० ४७ ।

‡ 'कोऽदादित्यन्यत्' (का० श्रौ० सू० १०. २. २९) अत्र अन्यदित्यनेन गन्धोदक-तिलमाषादीनां ग्रहणम् ।

(६) शु० यं० अ० ७ क० ४८ ।

जुहुयादेवमेतां जुहोति यामधीयते ददाति तस्मादधीयन्नाऽतिदिशत् ॥ ३३ ॥ (D)

तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

[ अथ मध्यन्दिनसवनम् ]

( तत्राऽऽदित्यग्रहः )

त्रया वै देवाः । वसवो रुद्रा ऽआदित्यास्तेषां विभक्तानि सवनानि वसूनामेव प्रातः सवनꣳ रुद्राणां माध्यन्दिनꣳ सवनमादित्यानां तृतीयसवनं तद्वा ऽअमिश्रमेव वसूनां प्रातः सवनममिश्रꣳ रुद्राणां माध्यन्दिनꣳ सवनं मिश्रमादित्यानां तृतीयसवनम् ॥ १ ॥ ते हाऽऽदित्या ऽऊचुः । यथेदममिश्रं वसूनां प्रातः सवनममिश्रꣳ रुद्राणां माध्यन्दिनꣳ सवनमेवं न ऽइमं पुरा मिश्राद् ग्रहं जुहुतेति तथेति देवा ऽअब्रुवꣳस्ते सꣳस्थित ऽएव माध्यन्दिने सवने पुरा तृतीयसवनादेतमजुहवुः स ऽएषोऽप्येतर्हि तथैव ग्रहो हूयते सꣳस्थित ऽएव माध्यन्दिने सवने पुरा तृतीयसवनात् ॥ २ ॥ ते हाऽऽदित्या ऊचुः । नेव वा ऽउत्तरस्मिन्त्सवने स्मो नेवेतरस्मिन्यद्वै नो रक्षाꣳसि न हिꣳस्युरिति ॥ ३ ॥ ते ह द्विदेवत्यानूचुः । रक्षोभ्यो वै बिभीमो हन्त युष्मान्प्रविशामेति ॥ ४ ॥ ते ह द्विदेवत्या ऽऊचुः । किमस्माकं ततः स्यादित्यस्माभिरनुवषट्कृता भविष्य-

(D) एतद्ब्राह्मणगता विद्या अन्यत्राप्युपलभ्यन्ते यथा— का० श्रौ० ५. ४. १; क० सं० १८. ४. ५, कपि० सं० २४. ४, तै० सं० ६. ६. १; मै० सं० ४. ८. २, १ ।

थेत्यु हाऽऽदित्या ऽऊचुस्तथेति ते द्विदेवत्याञ्प्राऽऽविशन् ॥५॥ स यत्र प्रातःसवने । द्विदेवत्यैः प्रचरति तत्प्रतिप्रस्थाताऽऽदित्यपात्रेण द्रोणकलशात्प्रतिनिगृह्णीत 'ऽउपयामगृहीतोऽसी'त्येतावताऽध्वर्युरेवाऽऽश्रावयत्यध्वर्य्योरनुहोमं जुहोति प्रतिप्रस्थाता'ऽऽदित्येभ्यस्त्वे'ति सछंस्रवमवनयत्येतावत्तैवमेव सर्वेषु ॥६॥ तद्यत्प्रतिप्रस्थाता प्रतिनिगृह्णीते । द्विदेवत्यान्वै प्राऽऽविशन्नस्माभिरनुवषट्कृता भविष्यथेत्यु हाऽऽदित्या ऊचुर्यां वा ऽअमूं द्वितीयामाहुतिं जुहोति स्विष्टकृते वै तां जुहोति स्विष्टकृतो वा ऽएतेऽनुवषट्क्रियन्ते तथो हाऽस्यैतेऽनुवषट्कृता ऽइष्टस्विष्टकृतो भवन्त्युत्तरार्द्धे जुहोत्येषा ह्येतस्य देवस्य दिक्तस्मादुत्तरार्द्धे जुहोति ॥ ७ ॥ यद्वेव प्रतिप्रस्थाता प्रतिनिगृह्णीते । द्विदेवत्यान्वै प्राऽऽविशन्त्स यानेव प्राऽऽविशँस्तेभ्य ऽएवैतान्निर्म्मिमीतेऽथाऽ * पिदधाति रक्षोभ्यो ह्यविभयु'र्विष्ण ऽउरुगायैष ते सोमस्तछं रक्षस्व मा त्वा दभन्नि'ति यज्ञो वै विष्णुस्तद्यज्ञायैवैतत्परिददाति गुप्त्या ऽअथाऽऽह सछंस्थित ऽएव माध्यन्दिने सवने पुरा तृतीयसवनाद्वेहि यजमानेति ॥ ८ ॥ ते सम्प्रपद्यन्ते । अध्वर्युश्च यजमानश्चाऽऽग्नीध्रश्च प्रतिप्रस्थाता चोन्नेताऽथ योऽन्यः परिचरो भवत्युभे द्वारे† ऽअपिदधति रक्षोभ्यो ह्यविभयुरथाऽध्वर्युरादित्यस्थालीं चाऽऽदित्यपात्रं चाऽऽदत्ते स ऽउपर्य्युपरि पूतभृतं विगृह्णाति

(१) शु० सं० अ० ८ क० ३। (२) शु० सं० अ० ८ क० १। (३) शु० सं० अ० ८ क० १।
* का० श्रौ० सू० ९ ९ २१ ।
† 'अपिदधाति' इति 'च' पुस्तके ।

नेद्वयवश्चोतदिति ॥ ९ ॥ अथ * गृह्णाति । 'कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे । उपोपेन्नु मघवन्भूय ऽइन्नुते दानं देवस्य पृच्यत ऽआदित्येभ्यस्त्वे'ति ॥ १० ॥ तं वै नोपयामेन गृह्णीयात् । अग्रे ह्येवैष ऽउपयामेन गृहीतो भवत्यजामितायै जामि ह कुर्याद्यदेनमत्राऽप्युपयामेन गृह्णीयात् ॥ ११ ॥ अथाऽपगृह्य † पुनरानयति । 'कदा चन प्रयुच्छस्युभे निपासि जन्मनी । तुरीयाऽऽदित्य सवनं त ऽइन्द्रियमातस्थावमृतं दिव्यादित्येभ्यस्त्वे'ति ॥ १२ ॥ अथ दधि गृह्णाति । आदित्यानां वै तृतीयसवनमादित्यान्वा ऽअनु पशवस्तत्पशुष्वेवैतत्पयो दधाति तदिदं पशुषु पयो-हितं मह्वत ऽइव गृह्णीयादित्याहुर्म्मह्वत ऽइव हीदं पशूनां पय ऽइति पश्चादिव त्वेव गृह्णीयात्पश्चादिव हीदं पशूनां पयः ॥ १३ ॥ यद्वेव दधि गृह्णाति । हुतोच्छिष्टा वा ऽएते सᳫंस्रवा भवन्ति नाऽलमाहुत्यै तानेवैतत्पुनराप्याययति तथाऽलमाहुत्यै भवन्ति तस्माद्दधि गृह्णाति ॥ १४ ॥ स ‡ गृह्णाति । 'यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः । आवोऽर्वाची सुमतिर्ववृत्यादᳫंहोश्चिद्या वरिवोवित्तराऽसदादित्येभ्यस्त्वे'ति ॥ १५ ॥ तमुपाᳫंशुसवनेन मेक्षयति । विवस्वान्वा ऽएष ऽआदित्यो

* का० श्रौ० सू० १० ४. ३।
† का० श्रौ० सू० १० ४. ४।
‡ का० श्रौ० सू० १०. ४. ५।

(१) शु० सं० अ० ७ क० ३। (२) शु० सं० अ० ८ क० २। (३) शु० सं० अ० ८ क० ४।

निदानेन यदुपाᳪंशुसवन ऽआदित्यग्रहो वा ऽएष भवति तदेनᳪं स्व ऽएव भागे प्रीणाति ॥१६॥ [काण्डस्यार्धम् ३१४] तं न दशाभिर्न पवित्रेणोपस्पृशति । एते वै शुक्रवती रसवती सवने यत्प्रातःसवनं च माध्यन्दिनञ्च सवनमथैतन्निर्धीतशुक्रं यत्तृतीयसवनᳪं स यन्न दशाभिर्न पवित्रेणोपस्पृशति तेनो हाऽस्यैतच्छुक्रवद्रसवत्तृतीयसवनं भवति तस्मान्न दशाभिर्न पवित्रेणोपस्पृशति ॥ १७ ॥ स * मेक्षयति । 'विवस्वन्नादित्यैष ते सोमपीथस्तस्मिन्मत्स्वे'त्यथोन्नेत्र ऽउपाᳪंशुसवनं प्रयच्छत्यथाऽऽहोन्नेतारमास्त्रज ग्रावण ऽइति तानाधवनीये वा स्रजति चमसे वा ॥ १८ ॥ राजानमुन्नीय । आदित्यानां वै तृतीयसवनमादित्यान्वा ऽअनु ग्रावाणस्तदेनान्त्स्व ऽएव भागे प्रीणात्यपोर्णुवन्ति द्वारे॥१९॥ † अथाऽपिधायोपनिष्क्रामति। रक्षोभ्यो ह्यबिभयुरथाऽऽहाऽऽदित्येभ्योऽनुब्रूहीत्यत्र सम्पश्येद्यदि कामयेताऽऽश्राव्य त्वेव सम्पश्येदादित्येभ्यः प्रेष्य 'प्रियेभ्यः प्रियधामभ्यः प्रियव्रतेभ्यो महस्वसरस्य पतिभ्य ऽउरोरन्तरिक्षस्याऽध्यक्षेभ्य' ऽइति वषट्कृते जुहोति नाऽनुवषट्करोति नेत्पशूनग्नौ प्रवृणजानीति प्रयच्छति प्रतिप्रस्थात्रे सᳪंस्रवौ ॥ २० ॥ अथ पुनः प्रपद्य।

---

* का॰ श्रौ॰ सू॰ १० ४ ६–८।

(१) शु॰ सं॰ अ॰ ८ क॰ ५।

† "अपावृतद्वारे निष्क्रामतो प्रहमपिधाय पाणिना रथाक्त्वा वा" (का॰ श्रौ॰ सू॰ १०. ४. १०)।

(२) का॰ श्रौ॰ सू॰ १०. ४. ११।

*आग्रयणमादत्त ऽउदीचीनदशं पवित्रं वितन्वन्ति प्रस्कन्दयत्यद्भुर्युराग्रयणस्य सम्प्रगृह्णाति प्रतिप्रस्थाता सꣳस्रवानयत्युन्नेता चमसेन वोदञ्चनेन वा ॥ २१ ॥ तं चतसृणां धाराणामाग्रयणं गृह्णाति । आदित्यानां वै तृतीयसवनमादित्यान्वा ऽअनु गावस्तस्मादिदं गवां चतुर्द्धाविहितं पयस्तस्माच्चतसृणां धाराणामाग्रयणं गृह्णाति ॥२२॥ तद्यत्प्रतिप्रस्थाता सꣳस्रवौ सम्प्रगृह्णाति । आदित्यग्रहो वा ऽएष भवति न वा ऽआदित्यग्रहस्याऽनुवषट्करोत्येतस्माद्वै सावित्रं ग्रहं ग्रहीष्यन्भवति तदस्य सावित्रेणैवाऽनुवषट्कृतो भवति ॥ २३ ॥ यद्वेव प्रतिप्रस्थाता सꣳस्रवौ सम्प्रगृह्णाति । पुरा वा ऽएतस्य ऽएतस्मिन्श्राद्ध ग्रहमहोपुः पुरा तृतीयसवनात्तृतीयसवनाय वा ऽएष ग्रहो गृह्यते तदादित्यास्तृतीयसवनमपियन्ति तथा न वहिर्द्धा यज्ञाद्भवन्ति तस्मात्प्रतिप्रस्थाता सꣳस्रवौ सम्प्रगृह्णाति ॥ २४ ॥ (E)

तृतीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥



[ सावित्रग्रहः ]

मनो ह वा ऽअस्य सविता । तस्मात्सावित्रं गृह्णाति प्राणो ह वा ऽअस्य सविता तमेवाऽस्मिन्नेतत्पुरस्तात्प्राणं

* का० श्रौ० सू० १०. ५. १।

(E) एतद्ग्रहणस्य विधयः अन्यत्रापि श्रूयन्ते यथा— का० सं० ५. ४. २; कठ० सं० २८. ६, कपि० सं० ४४. ६, तै० सं० ६. ५ ६; मै० सं० ४. ६. ९।

दधाति यदुपाꣳशुं गृह्णाति तमेवाऽस्मिन्नेतत्पश्चात्प्राणन्द-
धाति यत्सावित्रं गृह्णाति ताविमा ऽउभयतः प्राणौ हि तौ
यश्चाऽयमुपरिष्टाद्यश्चाऽधस्तात् ॥ १ ॥ ऋतवो वै संव-
त्सरो यज्ञः । तेऽत्रः प्रातःसवने प्रत्यक्षमवकल्पन्ते
यदृतुग्रहाꣳ गृह्णात्यथैतत्परोऽक्षं माध्यन्दिने सवनेऽवकल्पन्ते
यदृतुपात्राभ्यां मरुत्वतीयाꣳ गृह्णाति न वा ऽअत्रर्तुभ्य-
ऽइति कश्चन ग्रहं गृह्णन्ति नर्तुपात्राभ्यां कश्चन ग्रहो
गृह्यते ॥ २ ॥ एष वै सविता य ऽएष तपति । एषु ऽउ-
ऽएव सर्वं ऽऋतवस्तदृतवः संवत्सरस्तृतीयसवने प्रत्यक्ष-
मवकल्पन्ते तस्मात्सावित्रं गृह्णाति ॥ ३ ॥ तं वा ऽउपा-
ꣳशुपात्रेण गृह्णाति । मनो ह वा ऽअस्य सविता प्राण-
ऽउपाꣳशुस्तस्मादुपाꣳशुपात्रेण गृह्णात्यन्तर्यामपात्रेण वा
समानꣳ ह्येतद्यदुपाꣳश्वन्तर्यामौ प्राणोदानौ हि ॥ ४ ॥
[ अर्धप्रपाठकः ॥६१॥ ] आग्रयणाद्गृह्णाति। मनो ह वा ऽअस्य
सविताऽऽत्माऽऽग्रयण ऽआत्मन्येवैतन्मनो दधाति प्राणो ह
वाऽअस्य सविताऽऽत्माऽऽग्रयण ऽआत्मन्येवैतत्प्राणन्दधाति
॥५॥ अथाऽतो * गृह्णात्येव। 'वाममद्य सवितर्वाममु श्वो दिवे-
दिवे वाममस्मभ्यꣳ सावीः। वामस्य हि क्षयस्य देव भूरेरया
धिया वामभाजः स्याम । उपयामगृहीतोऽसि सावित्रोऽसि
चनोधाश्चनोधा ऽअसि चनो मयि धेहि । जिन्व यज्ञं
जिन्व यज्ञपतिं भगाये'ति ॥ ६ ॥ तं गृहीत्वा न साद-
यति । मनो ह वा ऽअस्य सविता तस्मादिदमसन्नं मनः

* का० श्रौ० सू० १०. ५. १३।
( १ ) शु० सं० अ० ८ कं० ६-७।

प्राणो ह वा ऽअस्य सविता तस्मादयमसन्नः प्राणः सञ्चरत्यथाऽऽह * देवाय सवित्रेऽनुब्रूहीत्याश्राव्याऽऽह देवाय सवित्रे प्रेष्येति वषट्कृते जुहोति नाऽनुवषट्करोति मनो ह वा ऽअस्य सविता नेन्मनोऽग्नौ प्रवृणजानीति प्राणो ह वा ऽअस्य सविता नेत्प्राणमग्नौ प्रवृणजानीति ॥ ७ ॥ अथाऽभक्षितेन पात्रेण । वैश्वदेवं ग्रहं गृह्णाति तद्यदभक्षितेन पात्रेण वैश्वदेवं ग्रहं गृह्णाति न वै सावित्रस्याऽनुवषट्करोत्येतस्माद्वै वैश्वदेवं ग्रहं ग्रहीष्यन्भवति तदस्य वैश्वदेवेनैवाऽनुवषट्कृतो भवति ॥ ८ ॥ यद्वेव वैश्वदेवं गृहं गृह्णाति । मनो ह वा ऽअस्य सविता सर्वमिदं विश्वे देवा ऽइदमेवैतत्सर्वं मनसः कृतानुकरमनुवर्त्म करोति तदिदः सर्वं मनसः कृतानुकरमनुवर्त्म ॥ ९ ॥ यद्वेव वैश्वदेवं गृहं गृह्णाति । प्राणो ह वा ऽअस्य सविता सर्वमिदं विश्वे देवा ऽअस्मिन्नेवैतत्सर्वस्मिन् प्राणोदानौ दधाति ताविमावस्मिन्त्सर्वस्मिन् प्राणोदानौ हि तौ ॥ १० ॥ यद्वेव वैश्वदेवं गृहं गृह्णाति । वैश्वदेवं वै तृतीयसवनं तदुच्च्यत ऽएव सामतो यस्माद्वैश्वदेवं तृतीयसवनमुच्च्यत ऽऋक्तोऽथैतदेव यजुष्टः पुरश्चरणतो यदेतं महावैश्वदेवं गृह्णाति ॥ ११ ॥ तं वै पूतभृतो गृह्णाति । वैश्वदेवो वै पूतभृतो हि देवेभ्य ऽउन्नयन्त्यतो मनुष्येभ्योऽतः पितृभ्यस्तस्माद्वैश्वदेवः पूतभृत् ॥ १२ ॥ तं वा ऽअपुरोरुक्कं गृह्णाति । विश्वेभ्यो ह्येनं देवेभ्यो गृह्णाति

* का० श्रौ० सू० १०. ६. ३ ।

सर्वं वै विश्वे देवा यदृचो यद्यजूंषि यत्सामानि स यदेवैनं विश्वेभ्यो देवेभ्यो गृह्णाति तेनो हाऽस्यैष पुरोरुङ्मान्भवति तस्मादपुरोरुक्कं गृह्णाति ॥ १३ ॥ अथाऽतो * गृह्णात्येव । 'उपयामगृहीतोऽसि सुशर्म्माऽसि सुप्रतिष्ठान' इति प्राणो वै सुशर्म्मा 'सुप्रतिष्ठानो बृहदुक्षाय नम' इति प्रजापतिर्वै बृहदुक्षः प्रजापतये नम इत्येवैतदाह 'विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य' इति सादयति विश्वेभ्यो ह्येनं देवेभ्यो गृह्णात्यथेत्य प्राडुपविशति ॥ १४ ॥ स यत्रैताᳫं † होता शᳫंसति । 'एकया च दशभिश्च स्वभूते द्वाभ्यामिष्टये विᳫंशती च । तिसृभिश्च वहसे त्रिᳫंशता च नियुद्भिर्वायविह ता विमुञ्चे'ति तदेतस्यां वायव्यायामृचि पात्राणि विमुच्यन्ते वायुप्रणेत्रा वै पशवः प्राणो वै वायुः प्राणेन हि पशवश्चरन्ति ॥ १५ ॥ सह देवेभ्यः पशुभिरपचक्राम । तन्देवाः प्रातःसवनेऽन्वमन्त्रयन्त स नोपाऽऽववर्त्त तं माध्यन्दिने सवनेऽन्वमन्त्रयन्त स ह नैवोपाऽऽववर्त्त तं तृतीयसवनेऽन्वमन्त्रयन्त ॥ १६ ॥ स होपावर्त्स्यन्नुवाच । यद्व उपाऽऽवर्त्तेय किम्मे ततः स्यादिति त्वयैवैतानि पात्राणि युञ्ज्येरँस्त्वया विमुच्येरन्निति तदेनेनैतत्पात्राणि युज्यन्ते यदै-

---

* का० श्रौ० सू० १० ६ २ ।

( १ ) शु० सं० अ० ८ क० ८ । ( २ ) शु० सं० अ० ८ क० ८ । ( ३ ) शु० सं० अ० ८ क० ८ ।

† का० श्रौ० सू० १० ६ ३,४ ।

( ४ ) शु० सं० अ० २७ क० ३३ ।

न्द्रवायवाग्रान्प्रातःसवने गृह्णात्यथैनेनैतत्पात्राणि विमुच्यन्ते यदाह नियुद्भिर्वायविह ता विमुञ्चेति पशवो वै नियुतस्तत्पशुभिरेवैतत्पात्राणि विमुच्यन्ते ॥ १७ ॥ स यत्प्रातःसवन उपाऽवर्त्स्यत् । गायत्रं वै प्रातःसवनं ब्रह्म गायत्री ब्राह्मणेषु ह पशवोऽभविष्यन्नथ यन्माध्यन्दिने सवन उपाऽवर्त्स्यदैन्द्रं वै माध्यन्दिनः सवनं क्षत्रमिन्द्रः क्षत्रियेषु ह पशवोऽभविष्यन्नथ यत्तृतीयसवन उपाऽऽवर्त्तत वैश्वदेवं वै तृतीयसवनः सर्वमिदं विश्वे देवास्तस्मादिमे सर्वत्रैव पशवः ॥ १८ ॥ (A)

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

[ सौम्यश्चरुः, पात्नीवतग्रहश्च ]

सौम्येन चरुणा प्रचरति । सोमो वै देवानां हविरथैतत्सोमायैव हविष्क्रियते तथाऽतः सोमोऽनन्तर्हितो भवति चरुर्भवति चरुर्वै देवानामन्नमोदनो हि चरुरोदनो हि प्रत्यक्षमन्नं तस्माच्चरुर्भवति ॥ १ ॥ तेन न प्रातः सवने प्रचरति । न माध्यन्दिने सवन एते वै देवानां निष्केवल्ये सवने यत्प्रातःसवनश्च माध्यन्दिनश्च सवनं पितृदेवत्यो वै सोमः ॥ २ ॥ स यत्प्रातःसवने वा प्रचरेत् । माध्यन्दिने वा सवने समदः ह कुर्याद्देवेभ्यश्च पितृभ्यश्च तेन तृतीयसवने प्रचरति वैश्वदेवं वै

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ४. ३; कठ० सं० २८, ७, कपि० सं० ४४, ७, तै० सं० ६. ५. ७; मै० सं० ४. ७. १।

तृतीयसवनं तथा ह्यासमदं करोति नाऽनुवाक्यामन्वाह सकृदु ह्येव पराञ्चः पितरस्तस्मान्नाऽनुवाक्यामन्वाह ॥ ३ ॥ अथ * चतुर्गृहीतमाज्यं गृहीत्वा । आश्राव्याऽऽह घृतस्य यजेति वषट्कृते जुहोति तद्या ऽअतः प्राच्च्य ऽआहुतयो हुता भवन्ति ताभ्य ऽएवैतदन्तर्दधाति तथा ह्यासमदं करोति ॥ ४ ॥ † स ऽआज्यस्योपस्तीर्य्य । द्विश्चरोरवद्यत्यथो परिष्टादाज्यस्याऽभिघारयत्याश्राव्याऽऽह सौम्यस्य यजेति वषट्कृते जुहोति ॥ ५ ॥ अथाऽपरं चतुर्गृहीतमाज्यं गृहीत्वा । आश्राव्याऽऽह घृतस्य यजेति वषट्कृते जुहोति तद्या ऽअत ऽऊर्द्ध्वा ऽआहुतीर्होष्यन्भवति ताभ्य-ऽएवैतदन्तर्दधाति तथा ह्यासमदं करोति स यदि कामयेतोभयतः परियजेद्यद्यु कामयेताऽन्यतरतः परियजेत् ॥ ६ ॥ अथ प्रचरणीति ‡ स्रुग्भवति । तस्यां चतुर्गृहीतमाज्यं गृहीत्वाऽद्ध्वर्युः शालाकैर्द्धिष्ण्यान्व्याघारयति तद्यच्छालाकैर्द्धिष्ण्याङ्व्याघारयति यदेवैनानदो देवा ऽअब्रुवँस्तृतीयसवने वो घृताहुतिः प्राप्स्यति न सौम्यापहृतो हि युष्मत्सोमपीथस्तेन सोमाहुतिं नाऽर्हथेति सैनानेषा तृतीयसवन ऽएव घृताहुतिः प्राप्नोति न सौम्या यच्छालाकैर्द्धिष्ण्याङ्व्याघारयति तानेतैरेव यजुर्भिर्य्यथोपकीर्ण्णं यथापूर्वं व्याघारयति मार्ज्जालीय ऽएवोत्तमम् ॥ ७ ॥

---

* का० श्रौ० सू० १० ६ ७–९ ।

† अत्र शतम् २६००, का० श्रौ० सू० १० ६ १०,११ ।

‡ का० श्रौ० सू० १० ६. १४ ।

तद्वैके । * आग्नीध्रीये पुनराघारयन्त्युदग्र ऽइदं कुर्म्मोऽनुसन्तिष्ठाता ऽइति तदु तथा न कुर्य्यादिमार्जालीय ऽएवोत्तमः ॥ ८ ॥ स यत्राऽध्वर्युः । शालाकैर्ध्णियाऽव्याघारयति तत्प्रतिप्रस्थाता पात्नीवतं ग्रहं गृह्णाति यज्ञाद्वै प्रजाः प्रजायन्ते यज्ञात्प्रजायमाना मिथुनात्प्रजायन्ते मिथुनात्प्रजायमाना ऽअन्ततो यज्ञस्य प्रजायन्ते तदेना ऽएतदन्ततो यज्ञस्य मिथुनात्प्रजननात्प्रजनयति तस्मादिमिथुनात्प्रजननादन्ततो यज्ञस्येमाः प्रजाः प्रजायन्ते तस्मात्पात्नीवतं गृह्णाति ॥ ९ ॥ तं वा ऽउपांशुपात्रेण गृह्णाति । यदि सावित्रमुपांशुपात्रेण गृह्णीयादन्तर्य्यामपात्रेणैतं यदि सावित्रमन्तर्य्यामपात्रेण गृह्णीयादुपांशुपात्रेणैतत् समानं ह्येतद्यदुपांश्वन्तर्य्यामौ प्राणो हि यो वै प्राणः स ऽउदानो वृषा वै प्राणो योषा पत्नी मिथुनमेवैतत्प्रजननं क्रियते ॥ १० ॥ तं वा ऽअपुरोरुक्कं गृह्णाति । वीर्य्यं वै पुरोरुङ्नेत्स्त्रीषु वीर्य्यं दधानीति तस्मादपुरोरुक्कं गृह्णाति ॥ ११ ॥ अथाऽतो † गृह्णात्येव । 'उपयामगृहीतोऽसि बृहस्पतिसुतस्य देव सोम त' ऽइति ब्रह्म वै बृहस्पतिर्ब्रह्मप्रसूतस्य देव सोम त ऽइत्येवैतदा'हेन्दोरिन्द्रियावत' ऽइति वीर्य्यवत-ऽइत्येवैतदाह यदाहेन्द्रोरिन्द्रियावत ऽइति 'पत्नीवतो ग्रहाँ२ऽऋध्यासमि'ति न सम्प्रति पत्नीभ्यो गृह्णाति नेत्स्त्रीषु

* का० श्रौ० सू० १० ६ १५।

† का० श्रौ० सू० १०.६ १६।

(१) शु० य० अ० ८ कं० १। (२) शु० य० अ० ८ कं० १। (३) शु० य० अ० ८ कं० १।

वीर्यं दधानीति तस्मान्न सम्प्रति पत्नीभ्यो गृह्णाति ॥ १२ ॥ अथ यः प्रचरण्याᳫं सᳫंस्रवः परिशिष्टो भवति । तेनैनᳫं श्रीणाति समर्द्धयति वा ऽअन्याह्ग्रहा-न्छ्रीणन्नथैतं व्यर्द्धयति वज्रो वा ऽआज्यमेतेन वै देवा वज्रेणाऽऽज्येनाऽघ्नन्नेव पत्नीर्निराक्ष्णुवँस्ता हता निरष्टा नाऽऽत्मनश्चन नैशत न दायस्य च नैशत तथो ऽएवैष ऽएतेन वज्रेणाऽऽज्येन हन्त्येव पत्नीर्निरक्ष्णोति ता हता निरष्टा नाऽऽत्मनश्च नेशते न दायस्य च नेशते ॥१३॥ स* श्रीणाति । 'अहं परस्तादहमवस्ताद्यदन्तरिक्षं तदु मे पिताऽभूत् । अहᳫं सूर्य्यमुभयतो ददर्शाऽहं देवानां परमं गुहा यदि'ति स यदह महमिति श्रीणाति पुᳫंस्येवैतद्वीर्य्यं दधाति ॥ १४ ॥ † अथा-ऽऽहाऽग्नीत्पात्नीवतस्य यजेति । वृषा वा ऽअग्नीद्योषा पत्नी मिथुनमेवैतत्प्रजननं क्रियते स जुहो'त्यग्ना३ ऽइपत्नीवन्नि'ति वृषा वा ऽअग्निर्योषा पत्नी मिथुनमेवैतत्प्रजननं क्रियते ॥ १५ ॥ 'सजूर्देवेन त्वष्ट्रे'ति । त्वष्टा वै सिक्तᳫं रेतो विकरोति तदेष ऽएवैतत्सिक्तᳫं रेतो विकरोति 'सोमं पिब स्वाहे'त्युत्तरार्द्धे जुहोति या ऽइतरा ऽआहुतयस्ते देवा-ऽअथैताᳫं पत्न्य ऽएवमिव हि मिथुनं क्लृप्तमुत्तरतो हि स्त्रीपुमाᳫंसमुपशेत ऽआहरत्यग्नीधे भक्षᳫं स-

* का० श्रौ० सू० १०. ६. १७ ।

( १ ) शु० सं० अ० ८ क० ९ ।

† का० श्रौ० सू० १०. ६. १८, १९ ।

( २ ) शु० सं० अ० ८ क० १० । ( ३ ) शु० सं० अ० ८ क० १० । ( ४ ) शु० सं० अ० ८ क० १० ।

ऽआह्वाऽध्वर्य्यं ऽउप मा ह्वयस्वेति तं न प्रत्युपह्वयेत को हि हतस्य निरस्तस्य प्रत्युपहवस्तं वै प्रत्येवोपह्वयेत जुह्वत्यस्याऽग्नौ वषट्कुर्वन्ति तस्मात्प्रत्येवोपह्वयेत ॥ १६ ॥ अथ सम्प्रेष्यति । * अग्नीन्नेष्टुरुपस्थमासीद नेष्टः पत्नी-मुदानयोद्गात्रा संख्यापयोन्नेतर्होतुश्चमसमनून्नय सोमं माऽतिरीरिच ऽइति यद्यग्निष्टोमः स्यात् ॥१७॥ † यद्युक्थ्यः स्यात् । सोमं प्रभावयेति ब्रूयात्स विभ्रदेवैतत्पात्रमग्नीन्ने-ष्टुरुपस्थमासीदत्यग्निर्वा ऽएष निदानेन यदाग्नीध्रो योषा नेष्टा वृषा वा ऽअग्नीद्योषा नेष्टा मिथुनमेवैतत्प्रजननं क्रियत ऽउदानयति नेष्टा पत्नीं तामुद्गात्रा ‡ संख्यापयति 'प्रजापतिर्वृषाऽसि रेतोधा रेतो मयि धेहीति' प्रजापतिर्वा-ऽउद्गाता योषा पत्नी मिथुनमेवैतत्प्रजननं क्रियते ॥१८॥ (B)

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ हरियोजनग्रहः ]

पशवो वै देवानां छन्दाꣳसि । तद्यथेदं पशवो युक्ता मनुष्येभ्यो वहन्त्येवं छन्दाꣳसि युक्तानि देवेभ्यो यज्ञं वहन्ति तद्यत्र छन्दाꣳसि देवान्त्समतर्प्पयन्नथ च्छन्दाꣳसि

---

* का० श्रौ० सू० १०. ६ २० ।

† "सोमं प्रभावयेत्युक्थ्यादिषु" ( का० श्रौ० सू० १०. ६. २१ )

‡ का० श्रौ० सू० १० ७ ३ ।

( १ ) शु० स० अ० ८ क० १० ।

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ४. ४, कठ० स० २८. ८, कपि० ४४ ८, तै० सं० ६. ५. ८ । मै० सं० ४ ७. ४ ।

देवाः समतर्प्पयँस्तदुतरतस्त्प्रागभून्यच्छन्दाꣳसि युक्तानि देवेभ्यो यज्ञमवाक्षुर्य्यदेनान्त्समतीतृपन् ॥ १ ॥ अथ हारियोजनं गृह्णाति । छन्दाꣳसि वै हारियोजनश्छन्दाꣳस्येवैतत्सन्तर्प्पयति तस्माद्धारियोजनं गृह्णाति ॥ २ ॥ तं वा ऽअतिरिक्तं गृह्णाति । यदा हि शंय्योराहाऽथैनं गृह्णातीदं वै देवा ऽअथ च्छन्दाꣳस्यतिरिक्तान्यथ मनुष्या ऽअथ पशवोऽतिरिक्तास्तस्मादतिरिक्तं गृह्णाति ॥ ३ ॥ द्रोणकलशे गृह्णाति । वृत्रो वै सोम ऽआसीत्तं यत्र देवा ऽअघ्नँस्तस्य मूर्द्धोद्ववर्त्त स द्रोणकलशोऽभवत्तस्मिन्न्यावान्वा यावान्वा रसः समस्रवदतिरिक्तो वै स ऽआसीदतिरिक्त ऽएष ग्रहस्तदतिरिक्त ऽएवैतदतिरिक्तं दधाति तस्माद्द्रोणकलशे गृह्णाति ॥४॥ तं वा ऽअपुरोरुक्कं गृह्णाति। छन्दोभ्यो ह्येनं गृह्णाति स यदेवैनं छन्दोभ्यो गृह्णाति तेनो हाऽस्यैष पुरोरुङ्मान्भवति तस्मादपुरोरुक्कं गृह्णाति॥५॥ * अथाऽतो गृह्णात्येव । 'उपयामगृहीतोऽसि हरिरसि हारियोजनो हरिभ्यान्त्वे'त्यृक्सामे वै हरी ऽऋक्सामाभ्याꣳ ह्येनं गृह्णाति ॥ ६ ॥ अथ † धाना ऽआवपति । 'हर्य्योर्द्धाना स्थ सह सोमा ऽइन्द्राये'ति तद्यदेवाऽत्र मितश्च छन्दोऽमितश्च तदेवैतत्सर्वं भक्षयति ॥ ७ ॥ तस्योन्नेताऽऽश्रावयति । अतिरिक्तो वा ऽउन्नेता न ह्येषोऽन्यस्याऽऽश्रावयत्यतिरिक्त ऽएष

---

* का० श्रौ० सू० १० ८ १ ।
( १ ) शु० सं० अ० ८ क० ११ ।
† का० श्रौ० सू० १० ८ २ ।

ग्रहस्तदुतिरिक्त ऽएवैतदुतिरिक्तं दधाति तस्माद्धुन्नेताऽऽश्रावयति ॥ ८ ॥ * मूर्द्धन्नधिनिधायाऽऽश्रावयति । मूर्द्धा ह्यस्यैपोऽथाऽऽह † धाना सोमेभ्योऽनुब्रूहीत्याश्राव्याऽऽह धाना सोमान्प्रस्थितान्प्रेष्येति वषट्कृते जुहोत्यनुवषट्कृतेऽथ धाना विलिप्सन्ते भक्षाय ॥ ९ ॥ ‡ तद्धैके । होत्रे द्रोणकलशं प्रतिपराऽऽहरन्ति वषट्कर्त्तुर्भक्ष ऽइति वदन्तस्तदु तथा न कुर्य्याद्यथा चमसं वा ऽअन्ये भक्षा ऽअथैषोऽतिरिक्तस्तस्मादेतस्मिन्त्सर्वेषामेव भक्षस्तस्माद्धाना विलिप्सन्ते भक्षाय ॥ १० ॥ ता न दद्भिः खादेयुः । पशवो वा ऽएते नेत्पशून्प्रम्रदे करवामहा ऽइति प्राणैरेव ‡‡ भक्षयन्ति 'यस्ते ऽअश्वसनिर्भक्षो यो गोसनिरि'ति पशवो ह्येते तस्मादाह यस्ते ऽअश्वसनिर्भक्षो यो गोसनिरिति 'तस्य त ऽइष्ट यजुषस्तुतस्तोमस्ये'तीष्टानि हि यजूंषि भवन्ति स्तुता स्तोमाः 'शस्तोक्थस्ये'ति शस्तानि ह्युक्थानि भव'न्त्युपहूतस्योपहूतो भक्षयामी'त्युपहूतस्य ह्येतदुपहूतो भक्षयति ॥११॥ ता नाऽग्नौ प्रकिरेयुः । नेदुच्छिष्टमग्नौ जुहवामेत्युत्तरवेद्यावेव निवपन्ति तथा न बहिर्द्धा यज्ञाद्भवन्ति ॥ १२ ॥ अथ पूर्णपात्रान्त्समवमृशन्ति । यानेकेऽप्सुषोमा ऽइत्याचक्षते

---

* 'ग' पुस्तके मूर्द्धन्नधिनिधाय इति पाठः ।

† का० श्रौ० सू० १० ८ ३ ।

‡ का० श्रौ० सू० १० ८ ५ ।

‡‡ का० श्रौ० सू० १० ८ ६ ।

(१) शु० स० अ० ८ क० ११ । (२) शु० स० अ० ८ क० १२ । (३) शु० स० अ० ८ क० १२ । (४) शु० स० अ० ८ क० १२ ।

यथा वै युक्तो व्रहेदेवमेते य ऽआर्त्विज्यं कुर्वन्त्युत वै युक्तः क्षणुते वा वि वा * लिशन्ते शान्तिरापो भेषजं तद्यदेवाऽत्र क्षणवते वा वि वा लिशन्ते शान्तिरापस्तदद्भिः शान्त्या शमयन्ते तदद्भिः सन्दधते तस्मात्पूर्णपात्रान्त्समवमृशन्ति ॥१३॥ ते † समवमृशन्ति 'सं वर्चसा पयसा सन्तनूभिरगन्महि मनसा सं शिवेन। त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टमि'ति यद्विवृढं तत्सन्दधते ॥ १४ ॥ अथ मुखान्युपस्पृशन्ते। द्वयं तद्यस्मान्मुखान्युपस्पृशन्तेऽमृतं वा ऽआपोऽमृतेनैवैतत्सꣳस्पृशन्ते ऽएतदु चैवैतत्कर्म्माऽऽत्मन्कुर्वते तस्मान्मुखान्युस्पृशन्ते ॥१५॥ (C)

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ समिष्टयजुर्होमः ]

तानि वा ऽएतानि। नव समिष्टयजूꣳषि जुहोति तद्यन्नव समिष्टयजूꣳषि जुहोति नव वा ऽअमूर्वहिष्पवमाने स्तोत्रिया भवन्ति सैषोभयतोन्न्यूना विराट् प्रजननायैतस्माद्वा ऽउभयतो न्न्यूनात्प्रजननात्प्रजापतिः प्रजाः ससृज ऽइतश्चोर्द्ध्वा ऽइतश्चाऽवाचीस्तथो ऽएवैष ऽएतस्मादुभयत ऽएव न्न्यूनात्प्रजननात्प्रजाः सृजत ऽइतश्चोर्द्ध्वाऽइतश्चाऽवाचीः ॥ १ ॥ हिङ्कार स्तोत्रियाणां दशमः।

* 'लिशते' इति 'क-ग' पुस्तकयो. पाठः।

† का० श्रौ० सू० १०. ८. ८।

( १ ) शु० सं० अ० ८ क० १३।

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ५. १; कठ० सं० २८. ९; कपि० ४४. ९; तै० सं० ६. ५. ९; मै० सं० ४. ७. ४।

स्वाहाकार ऽएतेषां तथो हाऽस्यैषा न्यूना विराड्दशं‐
दशिनी भवति ॥ २ ॥ अथ यस्मात्समिष्टयजूᳩषि नाम ।
या वा ऽएतेन यज्ञेन देवता ह्वयति याभ्य ऽएष यज्ञ‐
स्तायते सर्वा वै तत्ताः समिष्टा भवन्ति तद्यत्तासु सर्वासु
समिष्टास्वथैतानि जुहोति तस्मात्समिष्टयजूᳩषि नाम
॥ ३ ॥ अथ यस्मात्समिष्टयजूᳩषि जुहोति । रिरिचान‐
ऽइव वा ऽएतदीजानस्याऽऽत्मा भवति यद्ध्यस्य भवति
तस्य हि ददाति तमेवाऽतस्त्रिभिः पुनराप्याययति ॥ ४ ॥
अथ यान्युत्तराणि त्रीणि जुहोति । या वा ऽएतेन यज्ञेन
देवता ह्वयति याभ्य ऽएष यज्ञस्तायत ऽउप हैव ता‐
ऽआसते यावन्न समिष्टयजूᳩषि जुह्वतीमानि नु नो जुह्व‐
त्विति ता ऽएवैतद्यथायथं व्यवसृजति यत्र यत्राऽऽसां चरणं
तदनु ॥ ५ ॥ अथ यन्युत्तमानि त्रीणि जुहोति। यज्ञं वा‐
ऽएतदजीजनत यदेनमतत तं जनयित्वा यत्राऽस्य प्रतिष्ठा
तत्प्रतिष्ठापयति तस्मात्समिष्टयजूᳩषि जुहोति ॥ ६ ॥
स * जुहोति । 'समिन्द्र[1] णो मनसा नेषि गोभिरि'ति
मनसेति तन्मनसा रिरिचानमाप्याययति गोभिरिति
तद् गोभी रिरिचानमाप्याययति 'सᳯसूरिभिर्म्मघवन्त्सᳩ[2]
स्वस्त्या । सम्ब्रह्मणा देवकृतं यदस्ती'ति ब्रह्मणेति
तद् ब्रह्मणा रिरिचानमाप्याययति 'सन्देवानाᳩ[3] सुमतौ
यज्ञियानाᳩ स्वाहा' ॥ ७ ॥ 'सं वर्च्चसा[4] । पयसा सन्तनू‐

* का० श्रौ० सू० १०. ८ १२।

(१) शु० स० अ० ८ क० १५। (२) शु० स० अ० ८ क० १५। (३) शु० स० अ० ८ क० १५। (४) शु० सं० अ० ८ क० १६।

भिरि'ति वर्चसेति तद्वर्चसा रिरिचानमाप्याययति पयसेति रसो वै पयस्तत्पयसा रिरिचानमाप्याययत्यगन्महि मनसा सᳫ शिवेन । त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टमि'ति यद् विवृढं तत्सन्दधाति ॥ ८ ॥ 'धाता रातिः । सवितेदं जुषन्तां प्रजापतिर्निधिपा देवो ऽअग्निः । त्वष्टा विष्णुः प्रजया सᳫरराणा यजमानाय द्रविणं दधात स्वाहे'ति तद्वेव रिरिचानं पुनराप्याययति यदाह यजमानाय द्रविणं दधात स्वाहेति ॥ ९ ॥ 'सुगावो देवाः । सदना-ऽअकर्म्म य ऽआजग्मेदᳫ सवनं जुषाणा' ऽइति सुगानि वो देवाः सदनान्यकर्म्म य ऽआगन्तेदᳫ सवनं जुषाणा-ऽइत्येवैतदाह भरमाणा वहमाना हवीᳫषीति तद्देवता ऽव्यवसृजति भरमाणा ऽअह ते यन्तु येऽवाहना वहमाना-ऽउ ते यन्तु ये वाहनवन्त ऽइत्येवैतदाह तस्मादाह 'भरमाणा वहमाना हवीᳫष्यस्मे धत्त वसवो वसूनि स्वाहा' ॥ १० ॥ 'याँ२ ऽआवहः । उशतो देव देवाँस्तान्प्रेरय स्वेऽअग्ने सधस्थ' ऽइत्यग्निं वा ऽआहाऽमून्देवानावहाऽमून्देवानावहेति तमेवैतदाह यान्देवानावाक्षीस्तान्गमय यत्र यत्रैषां चरणं तदन्विति जक्षिवाᳫसः पपिवाᳫसश्च विश्व ऽइति जक्षिवाᳫसो हि पशुं पुरोडाशं भवन्ति पपिवाᳫस ऽइति पपिवाᳫसो हि सोमᳫ राजानं भवन्ति तस्मादाह 'जक्षिवाᳫसः पपिवाᳫसश्च विश्वेऽसुं घर्म्मᳫ

( १ ) शु० य० अ० ८ क० १६ । ( २ ) शु० य० अ० ८ क० १७ । ( ३ ) शु० य० अ० ८ क० १८ । ( ४ ) शु० य० अ० ८ क० १८ । ( ५ ) शु० य० अ० ८ क० १९ । ( ६ ) शु० य० अ० ८ क० १९ ।

स्वरातिष्ठताऽनु स्वाहे'ति तद्वेव देवता व्यवसृजति ॥११॥ 'वयंꣳ हि त्वा। प्रयति यज्ञे ऽअस्मिन्नग्ने होतारमवृणीमहीह। ऋधगया ऽऋधगुताऽशमिष्ठाः प्रजानन्यज्ञमुपयाहि विद्वान्स्वाहे'त्यग्निमेवैतया विमुच्यत्यग्निं व्यवसृजति ॥१२॥ 'देवा गातुविद' ऽइति। गातुविदो हि देवा 'गातुं वित्त्वे'ति यज्ञं वित्त्वेत्येवैतदाह 'गातुमिते'ति तदेतेन यथायथं व्यवसृजति 'मनसस्पत ऽइमं देव यज्ञꣳ स्वाहा वाते धा' ऽइत्ययं वै यज्ञो योऽयं पवते तदिमं यज्ञꣳ सम्भृत्यैतस्मिन्यज्ञे प्रतिष्ठापयति यज्ञेन यज्ञꣳ सन्दधाति तस्मादाह स्वाहा वाते धा ऽइति ॥ १३ ॥ 'यज्ञ यज्ञं गच्छ । यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहे'ति तत्प्रतिष्ठतमेवैतद्यज्ञꣳ सन्तꣳ स्वायां योनौ प्रतिष्ठापय'त्येष ते यज्ञो यज्ञपते सह सूक्तवाकः सर्ववीरस्तं जुषस्व स्वाहे'ति तत्प्रतिष्ठितमेवैतद्यज्ञꣳ सन्तꣳ सहसूक्तवाकꣳ सर्ववीरं यजमानेऽन्ततः प्रतिष्ठापयति ॥ १४ ॥ (D)

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥
कण्डिकासंख्या ॥१२२॥

---

(१) शु० सं० अ० ८ क० २०। (२) शु० सं० अ० ८ क० २१। (३) शु० सं० अ० ८ क० २१। (४) शु० सं० अ० ८ क० २१। (५) शु० सं० अ० ८ क० २१। (६) शु० सं० अ० ८ क० २२। (७) शु० सं० अ० ८ क० २२।

(D) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ५. २, कठ० सं० २९. ३, कपि० ४५. ४, तै० सं० १. ६. २, मै० सं० ४. ८. ४।

[ अवभृथ. ]

स वा ऽअवभृथमभ्यवैति। तद्यदवभृथमभ्यवैति यो वा ऽअस्य रसोऽभूदाहुतिभ्यो वा ऽअस्य तमजीजनदथैतच्छरीरं तस्मिन्न रसोऽस्ति तन्न परास्यं तदपोऽभ्यवहरन्ति रसो वा ऽआपस्तदस्मिन्नेतद्रसं दधाति तदेनमेतेन रसेन सङ्गमयति तदेनमतो जनयति स ऽएनं जात ऽएव सन् जनयति तद्यदपोऽभ्यवहरन्ति तस्मादवभृथः ॥१॥ अथ समिष्टयजूंषि जुहोति। समिष्टयजूंषि ह्येवाऽन्तो यज्ञस्य स हुत्वैव समिष्टयजूंषि यदेतमभितो भवति तेन चात्वालमुप समायन्ति स कृष्णविषाणाञ्च मेखलाञ्च * चात्वाले प्रास्यति ॥ २ ॥ 'माऽहिर्भूर्म्मा पृदाकुरि'ति। असौ वाऽऋजीषस्य खगाकारो यदेनदपोऽभ्यवहरन्त्यथैष ऽएवैतस्य खगाकारो रज्जुरिव हि सर्प्पाः कूपा ऽइव हि सर्प्पाणामायतनान्यस्ति वै मनुष्याणां च सर्प्पाणां च विभ्रातृव्यमिव नेत्तदतः सम्भवदिति तस्मादाह माऽहिर्भूर्म्मा पृदाकुरिति ॥ ३ ॥ अथ वाचयति। 'उरुꣳ हि राजा वरुणश्चकार सूर्य्याय पन्थामन्वेतवा ऽउ' ऽइति यथाऽयमुरुरभयोऽनाष्ट्रः सूर्य्याय पन्था ऽएवं मेऽयमुरुरभयोऽनाष्ट्रः पन्था ऽअस्त्वित्येवैतदाह ॥ ४ ॥ 'अपदे पादा प्रतिधातवेऽकरि'ति। यदि ह वा ऽअप्यपाद् भवत्यलमेव प्रतिक्रमणाय भवत्युता'ऽपवक्ता हृदयाविधश्चिदि'ति

---

* "कृष्णविषाणमेखले चात्वाले प्रास्यति माहिर्भूरिति" (का० श्रौ० सू० १० ८ १५)।
(१) शु० स० अ० ८ क० २३। (२) शु० स० अ० ८ क० २३। (३) शु० स० अ० ८ क० २३। (४) शु० स० अ० ८ क० २३।

तदेनꣳ सर्वस्माद्वृद्यादेनसꣳ पाप्मनꣳ प्रमुञ्चति ॥ ५ ॥ अथाऽऽह साम गायेति । साम ब्रूहीति वा गायेति त्वेव ब्रूयाद्गायन्ति हि साम तद्यत्साम गायति नेदिदं बहिर्द्धा यज्ञाच्छरीरं नाष्ट्रा रक्षाꣳसि हिनसन्निति साम हि नाष्ट्राणाꣳ रक्षसामपहन्ता ॥ ६ ॥ आग्नेय्यां गायति । अग्निर्हि रक्षसामपहन्ताऽतिच्छन्दसि गायत्येषा वै सर्वाणि छन्दाꣳसि यदतिच्छन्दास्तस्मादतिच्छन्दसि गायति ॥ ७ ॥ स गायति । 'अग्निष्टपति प्रतिदहत्यहावोऽहाव' ऽइति तन्नाष्ट्रा ऽएवैतद्रक्षाꣳस्यतोऽपहन्ति ॥ ८ ॥ त ऽउदञ्चो निष्क्रामन्ति । जघनेन चात्वालमग्रेणाऽऽग्नीध्रꣳ स यस्यां ततो दिश्यापो भवन्ति तद्यन्ति ॥ ९ ॥ स यꣳ स्यन्दमानानाꣳ स्थावरो ह्रदꣳ स्यात् । तमपोऽभ्यवेयादेता वा ऽअपां वरुणगृहीता याꣳ स्यन्दमानानां न स्यन्दन्ते वरुण्यो वा ऽअवभृथो निर्वरुणतायै यद्यु ता न विन्देदपि या ऽएव काश्चाऽपोऽभ्यवेयात् ॥१०॥ * तमपोऽवक्रमयन्वाचयति । 'नमो वरुणायाऽभिष्ठितो वरुणस्य पाश' ऽइति तदेनꣳ सर्वस्माद्वरुणपाशात्सर्वस्माद्वरुण्यात्प्रमुञ्चति ॥११॥ अथ चतुर्गृहीतमाज्यं गृहीत्वा । समिधं † ग्रास्याऽभिजुहो'त्यग्नेरनीकमप ऽआविवेशाऽपां नपात्प्रतिरक्षन्नसुर्य्यम् । दमे दमे समिधं यक्ष्यग्ने प्रति ते जिह्वा घृतमुच्चरण्य-

* का० श्रौ० सू० १०. ८ २१ ।
( १ ) शु० य० अ० ८ क० २३ ।
† का० श्रौ० सू० १०. ८. २४ ।
( २ ) शु० य० अ० ८ क० २४ ।

त्स्वाहे'ति ॥१२॥ अग्नेर्ह वै देवाः । यावद्वा यावद्वाऽप्सु प्रवेशयाञ्चक्रुर्नेद्वतो नाष्ट्रा रक्षाꣳस्युपोत्तिष्ठानित्यग्निर्हि रक्षसामपहन्ता तमेतया च समिधैतया चाऽऽहुत्या समिन्धे समिद्धे देवेभ्यो जुहवानीति ॥१३॥ अथाऽपरं चतुर्गृहीतमाज्यं गृहीत्वा । आश्राव्याऽऽह समिधो यजेति सोऽपबर्हिषश्चतुरः प्रयाजान्यजति प्रजा वै बर्हिर्वरुणयो वा ऽअवभृथो नेत्प्रजा वरुणो गृह्णादिति तस्मादुपबर्हिषश्चतुरः प्रयाजान्यजति ॥ १४ ॥ अथ * वारुण ऽएककपालः पुरोडाशो भवति । यो वा ऽअस्य रसोऽभूदाहुतिभ्यो वा ऽअस्य तमजीजनदथैतच्छरीरं तस्मिन्न रसोऽस्ति रसो वै पुरोडाशस्तदस्मिन्नेतः रसन्दधाति तदेनमेतेन रसेन सङ्गमयति तदेनमतो जनयति स ऽएनं जात ऽएव सञ्जनयति तस्माद्वारुण ऽएककपालः पुरोडाशो भवति ॥ १५ ॥ स ऽआज्यस्योपस्तीर्य्य । पुरोडाशस्याऽवद्यन्नाह वरुणायाऽनुब्रूहीत्यत्र हैक ऽऋजीषस्य द्विरवद्यन्ति तदु तथा न कुर्य्याच्छरीरं वा ऽएतद्भवति नाऽलमाहुत्यै द्विरवद्यति सकृदभिघारयति प्रत्यनक्त्यवदाने ऽआश्राव्याऽऽह वरुणं यजेति वषट्कृते जुहोति ॥ १६ ॥ अथाऽऽज्यस्योपस्तीर्य्य । पुरोडाशमवद्यदाहाऽग्नीवरुणाभ्यामनुब्रूहीति तत्स्विष्टकृते स यन्नाऽग्नय ऽइत्याह नेदग्निं वरुणो गृह्णादिति स यद्यमुत्रर्जीषस्य † द्विरवद्येद्थाऽत्र सकृद्यद्यु न

* का० श्रौ० सू० १०. ८. २७ ।

† का० श्रौ० सू० १०. ८. ३० ।

नाऽऽद्रियेताऽथोपरिष्टाद् विराज्यस्याऽभिघारयत्याश्राव्या-
ऽऽहाऽग्नीवरुणौ यजेति वषट्कृते जुहोति ॥ १७ ॥ ता वा-
ऽएताः। षडाहुतयो भवन्ति षड्वा ऽऋतवः संवत्सरस्य
संवत्सरो वरुणस्तस्मात्षडाहुतयो भवन्ति ॥ १८ ॥ एत-
दादित्यानामयनम्। आदित्यानीमानि यजूंषीति वा ऽआहुः
स यावदस्य वशः स्यादेवमेव चिकीर्षेद्यद्यु ऽएनमितरथा
यजमानः कर्त्तवै ब्रूयादितरथो तर्हि कुर्य्यादेतानेव चतुरः
प्रयाजानुपबर्हिषो यजेद् द्वावाज्यभागौ वरुणमग्नीवरुणौ
द्वावनुयाजावुपबर्हिषो तद्दश दशाक्षरा वै विराड्विराड्वै यज्ञ-
स्तद्विराजमेवैतद्यज्ञमभिसम्पादयति ॥ १९ ॥ एतदङ्गिर-
सामयनम्। अतोऽन्यतरत्कृत्वा * यस्मिन्कुम्भ ऽऋजीषं
भवति तं प्रप्लावयति 'समुद्रे ते हृदयमप्स्वन्तरि'त्यापो
वै समुद्रो रसो वा ऽआपस्तस्मिन्नेतः रसन्दधाति तदेन-
मेतेन रसेन सन्नमयति तदेनमतो जनयति स ऽएनं जात-
ऽएव सञ्जनयति 'सन्त्वा विशन्त्वोषधीरुताऽऽप' ऽइति तदस्मि-
न्नुभयः रसन्दधाति यश्चौषधिषु यश्चाऽप्सु 'यज्ञस्य
त्वा यज्ञपते सूक्तोक्तौ नमोवाके विधेम यत्स्वाहे'ति तद्यदेव
यज्ञस्य साधु तदेवाऽस्मिन्नेतद्दधाति ॥ २० ॥ † अथाऽनुस्पृ-
ज्योपतिष्ठते। 'देवीराप ऽएष वो गर्भ' ऽइत्यपाः ह्येष

* का० श्रौ० सू० १०. ९. ११.
(१) शु० य० अ० ८ क० २४। (२) शु० य० अ० ८ क० २५। (३) शु० सं० अ० ८ क० २५।
† का० श्रौ० सू० १०. ९. १२।
(४) शु० सं० अ० ८ क० २६।

गर्भ'स्तꣳ सुप्रीतꣳ सुभृतं बिभ्रते'ति तदेनमद्भ्यꣳ परिददाति गुप्त्यै 'देवे सोमैष ते लोक' ऽइत्यापो ह्येतस्य लोक'स्तस्मिञ्छञ्च वक्ष्व परि च वक्ष्वे'ति तस्मिन्नꣳ शञ्चैधि सर्वाभ्यश्च न ऽआर्त्तिभ्यो गोपायेत्येवैतदाह ॥ २१ ॥

* अथोपमारयति । 'अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणꣳ । अव देवैर्देवकृतमेनोऽयासिषमव मर्त्यैर्मर्त्यकृतमि'त्यव ह्येतद्देवैर्देवकृतमेनोऽयासीत्सोमेन राज्ञाऽव मर्त्यैर्मर्त्यकृतमित्यव ह्येतन्मर्त्यैर्मर्त्यकृतमेनोऽयासीत्पशुना पुरोडाशेन 'पुरुराव्णो देव रिषस्पाही'ति सर्वाभ्यो माऽऽर्त्तिभ्यो गोपायेत्येवैतदाह ॥ २२ ॥ अथाऽभ्यवेत्य स्नातꣳ । अन्योऽन्यस्य पृष्ठे प्रधावतस्तावन्ये वाससी परिधायोदेतꣳ स यथाऽहिस्त्वचो निर्मुच्येतैवꣳ सर्वस्मात्पाप्मनो निर्मुच्यते तस्मिन्न तावच्च नैनो भवति यावत्कुमारेऽदति स येनैव निष्क्रामन्ति तेन पुनरायन्ति पुनरेत्याऽऽहवनीये समिधमभ्यादधाति 'देवानाꣳ समिदसी'ति यजमानमेवैतया समिन्धे देवानाꣳ हि समिद्धिमनु यजमानꣳ समिध्यते ॥ २३ ॥ (E)

चतुर्थाध्याये पंचमं ब्राह्मणम् ॥ ५ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥

* का० श्रौ० सू० १० ९ ३।

(१) शु० स० अ० ८ क० २६। (२) शु० स० अ० ८ क० २६। (३) शु० स० अ० ८ क० २६। (४) शु० स० अ० ८ क० २७। (५) शु० स० अ० ८ क० २७। (६) शु० स० अ० ८ क० २७।

(E) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५ ५ ३ तै० स० ६, ६, ३ कठ० स० २९ ३, कपि० स० ४५ ४, मै० स० ४, ८, ५।

[ उदयनीयेष्टिः ]

आदित्येन चरुणोदयनीयेन प्रचरति। तद्यदादित्यश्चरुर्भवति यदेवैनामदो देवा अन्नुवँस्तवैव प्रायणीयस्तवोदयनीय इति तमेवाऽस्या एतदुभयत्र भागं करोति ॥ १ ॥ स यदमुत्र राजानं क्रेष्यन्नुपप्रैष्यन्यजते। तस्मात्प्रायणीयं नामाऽथ यदत्राऽवभृथादुदेत्य यजते तस्मादेतदुदयनीयं नाम तद्वा एतत्समानमेव हविरदित्या एव प्रायणीयमदित्या उदयनीयमियꣳ ह्येवाऽदितिः ॥ २ ॥ स वै पथ्यामेवाऽग्रे स्वस्तिं यजति। तद्देवा अप्रज्ञायमाने वाचैव प्रत्यपद्यन्त वाचा हि मुग्धं प्रज्ञायतेऽथाऽत्र प्रज्ञाते यथापूर्वं करोति ॥ ३ ॥ सोऽग्निमेव प्रथमं यजति। अथ सोममथ सवितारमथ पथ्याꣳ स्वस्तिमथाऽदितिं वाग्वै पथ्या स्वस्तिरियमदितिरस्यामेव तद्देवा वाचं प्रत्यष्टापयन्त्सेयं वागस्यां प्रतिष्ठिता वदति ॥ ४ ॥ अथ मैत्रावरुणीं वशामनूबन्ध्यामालभते। स एषोऽन्त्य एव यज्ञस्तायते पशुबन्ध एव समिष्टयजूꣳषि ह्येवाऽन्तो यज्ञस्य ॥ ५ ॥ तद्यन्मैत्रावरुणी वशा भवति। यद्वा ऽईजानस्य स्विष्टं भवति मित्रोऽस्य तद्गृह्णाति यद्वस्य दुरिष्टं भवति वरुणोऽस्य तद्गृह्णाति ॥ ६ ॥ तदाहुः। केजानोऽभूदिति तद्यदेवाऽस्याऽत्र मित्रः स्विष्टं गृह्णाति तदेवाऽस्मा एतया प्रीतः प्रत्यवसृजति यद्वु चाऽस्य वरुणो दुरिष्टं गृह्णाति तच्चैवाऽस्मा एतया प्रीतः स्विष्टं करोति तद्वु चाऽस्मै प्रत्यवसृजति सोऽस्यैव

स्व ऽएव यज्ञो भवति स्वष्टः सुकृतम् ॥ ७ ॥ तद्यन्मैत्रावरुणी वशा भवति। यत्र वै देवाः रेतः सिक्तं प्राऽजनयँस्तदाग्निमारुतमित्युक्थं तस्मिँस्तद्व्याख्यायते यथा तद्देवा रेतः प्राऽजनयँस्ततोऽङ्गाराः समभवन्नङ्गारेभ्योऽङ्गिरसस्तदन्वन्ये पशवः ॥ ८ ॥ अथ यद्भासाः पांॅसवः पर्य्यशिष्यन्त। ततो गर्द्दभः समभवत्तस्माद्यत्र पांॅसुलं भवति गर्द्दभस्थानमिव वतेत्याहुरथ यदा न कश्चन रसः पर्य्यशिष्यत तत ऽएषा मैत्रावरुणी वशा समभवत्तस्मादेषा न प्रजायते रसाद्धि रेतः सम्भवति रेतसः पशवस्तद्यदन्ततः समभवत्तस्मादन्तं यज्ञस्याऽनुवर्त्तते तस्माद्वाऽएषाऽत्र मैत्रावरुणी वशाऽववलृप्ततमा भवति यदि वशां न विन्देदप्युक्षवश ऽएव स्यात् ॥ ९ ॥ अथेतरं विश्वे देवा* ऽअमरीमृद्रयन्त। ततो वैश्वदेवी समभवदथ बार्हस्पत्या सोऽन्तोऽन्तो हि बृहस्पतिः ॥ १० ॥ स यः सहस्रं वा भूयो वा दद्यात्। स ऽएनाः सर्वा ऽआलभेत। सर्वं वै तस्याऽऽप्तं भवति सर्वं जितं यः सहस्रं वा भूयो वा ददाति सर्वमेता ऽएवमेव यथापूर्वं मैत्रावरुणीमेवाऽग्रेऽथ वैश्वदेवीमथ बार्हस्पत्यम् ॥ ११ ॥ अथो ये दीर्घसत्रमासीरन्। संवत्सरं वा भूयो वा त ऽएनाः सर्वा ऽआलभेरन्त्सर्वं वै तेषामाप्तं भवति सर्वं जितं ये दीर्घसत्रमासते संवत्सरं वा भूयो वा सर्वमेता ऽएवमेव यथापूर्वम् ॥ १२ ॥ अथोदवसानीययेष्ट्या यजते। स ऽआग्नेयं

* 'ह्यमरीमृद्रयन्त' इति पाठः 'ग' पुस्तके।

पञ्चकपालं पुरोडाशं निर्वपति तस्य पञ्चपदाः पङ्क्तयो याज्याऽनुवाक्या भवन्ति यातयामेव वा ऽएतदीजानस्य यज्ञो भवति सोऽस्मात्पराङिव भवत्यग्नौ वै सर्वे यज्ञा- ऽअग्नौ हि सर्वान्यज्ञाँस्तन्वते ये च पाकयज्ञा ये चेतरे तद्यज्ञमेवैतत्पुनरारभते तथाऽस्याऽयातयामा यज्ञो भवति तथो ऽअस्मान्न पराङ् भवति ॥ १३ ॥ तद्यत्पञ्चकपालः पुरोडाशो भवति । पञ्चपदाः पङ्क्तयो याज्याऽनुवाक्याः पाङ्क्तो वै यज्ञस्तद्यज्ञमेवैतत्पुनरारभते तथाऽस्याऽयातयामा यज्ञो भवति तथो ऽअस्मान्न पराङ् भवति ॥ १४ ॥ तस्य हिरण्यं दक्षिणा । आग्नेयो वा ऽएष यज्ञो भवत्यग्नेरेतो हिरण्यं तस्माद्धिरण्यं दक्षिणाऽनड्वान्वा स हि वहेनाऽऽग्नेयोऽग्निदग्धमिव ह्यस्य वहं भवति ॥ १५ ॥ अथो चतुर्गृहीतमेवाऽऽज्यं गृहीत्वा । वैष्णव्यर्चा जुहो'त्युरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि । घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर स्वाहे'ति यज्ञो वै विष्णुस्तद्यज्ञमेवैतत्पुनरारभते तथाऽस्याऽयातयामा यज्ञो भवति तथो ऽअस्मान्न पराङ् भवति तन्नो यच्छन्नुयात्तद्द्यान्नाऽदक्षिणः हविः स्यादिति ह्याहुरथ यदेवैपोदवसानीयेष्टिः सन्तिष्ठतेऽथ सायमाहुतिं जुहोति काल ऽएव प्रातराहुतिम् ॥ १६ ॥ (A)

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



(१) शु॰ सं॰ अ॰ ५ क॰ १८ ।

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का॰ श्रौ॰ ५. ५. ४ ।

[ आनुबन्ध्ययागः ]

वशामालभन्ते । तामालभ्य संज्ञपयन्ति संज्ञप्याऽऽह वपामुत्खिदेत्युत्खिद्य वपामनुमृशं गर्भमिष्टवै ब्रूयात्स यदि न विन्दन्ति किमाद्रियेरन्न्यद्यु विन्दन्ति तत्र प्रायश्चित्तिः क्रियते ॥ १ ॥ न वै तदवकल्पते । यदेकां मन्यमाना ऽएकयेवैतया चरेयुर्व्यद्द्वे मन्यमाना द्वाभ्यामिव चरेयु स्स्थालीश्चैवोष्णीपं चोपकल्पयितवै ब्रूयात् ॥ २ ॥ अथ वपया चरन्ति । यथैव तस्यै चरणं वपया चरित्वाऽद्धर्युश्च यजमानश्च पुनरेतः स ऽआहाऽद्धर्युर्निरूहैतं गर्भमिति तद्द ह नोदरतो निरूहेदार्त्ताया वै मृतायाऽउदरतो निरूहन्ति यदा वै गर्भः समृद्धो भवति प्रजननेन वै स तर्हि प्रत्यङ्ङैति तमपि विरुज्य श्रोणी प्रत्यञ्चं निरूहितवै ब्रूयात् ॥ ३ ॥ तं * निरुह्यमाणमभिमन्त्रयते । 'एजतु दशमास्यो गर्भो जरायुणा सहे'ति स यदाहैजत्विति प्राणमेवाऽस्मिन्नेतद्दधाति दशमास्य ऽइति यदा वै गर्भः समृद्धो भवत्यथ दशमास्यस्तमेतदप्यदशमास्यः सन्तं ब्रह्मणैव यजुषा दशमास्यं करोति ॥ ४ ॥ जरायुणा सहेति । तद्यथा दशमास्यो जरायुणा सहेयादेवमेतदाह 'यथाऽयं वायुरेजति यथा समुद्र ऽएजती'ति प्राणमेवाऽस्मिन्नेतद्दधा- 'त्येवाऽयं दशमास्यो ऽअस्रज्जरायुणा सहे'ति तद्यथा दश-

* का० श्रौ० सू० २५. १०. ५।

(१) शु० सं० अ० ८ क० २८। (२) शु० सं० अ० ८ क० २८। (३) शु० सं० अ० ८ क० २८।

मास्यो जरायुणा सह स्त्रङ्सेतैवमेतदाह ॥ ५ ॥ तदाहुः । कथमेतं गर्भं कुर्य्यादित्यङ्गादङ्गाद्धैवाऽस्याऽवद्येयुर्य्यथैवेतरेषामवदानानामवदानं तद्‌ तथा न कुर्य्यादुत ह्येषोऽविकृताङ्गो भवत्यधस्तादेव ग्रीवा ऽअपिकृत्त्यैतस्याꣳ स्थाल्यामेतं मेधꣳ श्चोतयेयुः सर्वेभ्यो वा ऽअस्यैषोऽङ्गेभ्यो मेध श्चोतति तदस्य सर्वेषामेवाऽङ्गानामुवत्तं भवत्यवद्यन्ति वशाया ऽअवदानानि यथैव तेषामवदानम् ॥ ६ ॥ तानि पशुश्रपणे श्रपयन्ति । तद्वैवैतं मेधꣳ श्रपयन्त्युष्णीषेणाऽऽवेष्ट्य * गर्भं पार्श्वतः पशुश्रपणस्योप निदधाति यदा शृतो भवत्यथ समुद्याऽवदानान्येवाऽभिजुहोति नैतं मेधमुद्वासयन्ति पशुं तद्वैवैतं मेधमुद्वासयन्ति ॥ ७ ॥ तं जघनेन चात्वालमन्तरेण यूपं चाऽग्निं च हरन्ति । दक्षिणतो निधाय प्रतिप्रस्थाताऽवद्यत्यथ स्रुचोरुपस्तृणीतेऽथ मनोतायै हविषोऽनुवाचऽऽहाऽवद्यन्ति वशाया ऽअवदानानां यथैव तेषामवदानम् ॥८॥ अथ प्रचरणीति स्रुग्भवति । † तस्यां प्रतिप्रस्थाता मेधायोपस्तृणीते द्विरवद्यति सकृदभिघारयति प्रत्यनक्त्यवदाने ऽअथाऽनुवाच ऽआहाऽऽश्राव्याऽऽह प्रेष्येति वषट्कृतेऽध्वर्य्युर्जुहोत्यध्वर्य्योरनुहोमं ‡ जुहोति प्रतिप्रस्थाता ॥ ९ ॥ 'यस्यै ते यज्ञियो गर्भः' ऽइति । अयज्ञिया वै गर्भास्तमेतद् ब्रह्मणैव यजुषा यज्ञियं करोति 'यस्यै योनि-

* का० श्रौ० सू० २५. १०. ८,९।

† का० श्रौ० सू० २५. १०. १०।

‡ का० श्रौ० सू० २५. १०. ११,१२।

(१) शु० सं० अ० ८ क० २८। (२) शु० सं० अ० ८ क० २९।

हिरण्मयी'त्यदो वा ऽएतस्यै योनिं विच्छिन्दन्ति यदद्दो निष्कर्षन्त्यमृतमायुर्हिरण्यं तामेवाऽस्या ऽएतदमृतां योनिं करो'त्यङ्गान्यह्रुता यस्य तं मात्रा समजीगमथं स्वाहे'ति यदि पुमान्त्स्याद्यद्यु स्त्री स्यादङ्गान्यह्रुता यस्यै तां मात्रा समजीगमथं स्वाहेति यद्यु ऽअविज्ञातो गर्भो भवति पुंस्कृत्यैव जुहुयात्पुमांसो हि गर्भा ऽअङ्गान्यह्रुता यस्य तं मात्रा समजीगमथं स्वाहेत्यदो वा ऽएतं मात्रा विप्वञ्चं कुर्वन्ति यदद्दो निष्कर्षन्ति तमेतद्ब्रह्मणैव यजुषा समर्द्ध्य मध्यतो यज्ञस्य पुनर्म्मात्रा सङ्गमयति ॥ १० ॥

अथाऽद्धूर्युर्वनस्पतिना * चरति । वनस्पतिनाऽद्धूर्युश्च-रित्वा यान्युपभृत्यवदानानि भवन्ति तानि समानयमान-ऽआहाऽग्नये स्विष्टकृतेऽनुब्रूहीत्यत्याक्रामति प्रतिप्रस्थाता स ऽएतद्‍ सर्वमेव मेधं गृह्णीतेऽथोपरिष्टाद्द्विराज्यस्या-ऽभिघारयत्याश्राव्याऽऽह प्रेष्येति वषट्कृतेऽद्धूर्युर्जुहो-त्यद्धूर्य्योरनुहोमं जुहोति प्रतिप्रस्थाता ॥११॥ 'पुरुदस्मो विषुरूप ऽइन्दुरि'ति । बहुदान ऽइति हैतद्याह पुरुदस्म-ऽइति विषुरूप ऽइति विषुरूपा ऽइव हि गर्भा 'ऽइन्दु-रन्तर्म्महिमानमानञ्ज धीर' ऽइत्यन्तर्ह्येष मातर्य्येको भव-'त्येकपदीं द्विपदीं त्रिपदीं चतुष्पदीमष्टापदीं भुवनाऽनु-

---

(१) शु० सं० अ० ८ क० २९।
* का० श्रौ० सू० २५. १०. १४,१५।
(२) शु० सं० अ० ८ क० ३०। (३) शु० सं० अ० ८ क० ३०। (४) शु० सं० अ० ८ क० ३०।

प्प्रथन्ताᳬं स्वाहे॑ति प्प्रथयत्त्येवैनामेतत्तुभूयो ह जयत्य-प्प्रापद्येष्ठा यद्दु चाऽनप्प्राऽपद्या ॥ १२ ॥ तदाहुः । क्वैतं गर्ब्भं कुर्य्यादिति वृक्ष ऽएवैनमुद्दध्युरन्तरिक्षायतना वै गर्ब्भा-ऽअन्तरिक्षमिवैतद्यद्वृक्षस्तदेनᳬं स्व ऽएवाऽऽयतने प्प्रति-ष्ठापयति तदु वा ऽआहुर्य्य ऽएनं तत्राऽनुव्व्याहरेद्वृक्ष ऽएनं मृतमुद्धाऽस्यन्तीति तथा हैव स्यात् ॥ १३ ॥ अप ऽएवैन-मव्भ्यवहरेयुः । आपो वा ऽअस्य सर्व्वस्य प्प्रतिष्ठा तदेन-मप्प्स्वेव प्प्रतिष्ठापयति तदु वा ऽआहुर्य्य ऽएनं तत्राऽनु-व्व्याहरेदप्प्स्वेव मरिष्यतीति तथा हैव स्यात् ॥ १४ ॥ आखू-त्कर * ऽएवैनमुपकिरेयुः । इयं वा ऽअस्य सर्व्वस्य प्प्रतिष्ठा तदेन मस्यामेव प्प्रतिष्ठापयति तदु वा ऽआहुर्य्य ऽएनं तत्राऽनु-व्व्याहरेत्क्षिप्प्रेऽस्मै मृताय श्मशानं करिष्यन्तीति तथा हैव स्यात् ॥१५॥ पशुश्रपण ऽएवैनं मरुद्भ्यो जुहुयात् । अहुतादो वै देवानां मरुतो विडहुतमिवैतद्यदशृतो गर्ब्भ ऽआह-वनीयाद्वा ऽएष ऽआहृतो भवति पशुश्रपणस्तथाऽऽह न बहिर्द्धा यज्ञाद् भवति न प्प्रत्यक्षमिवाऽऽहवनीये देवानां वै मरुतस्तदेनं मरुत्स्वेव प्प्रतिष्ठापयति ॥ १६ ॥ स हुत्वैव समिष्टयजूᳬंषि । प्रथमाऽवशान्तेष्वङ्गारेष्वेतत्सोष्णीषं गर्ब्भमादत्ते तं प्राङ्तिष्ठञ्जुहोति † मारुत्यर्चा 'मरुतो यस्य हि क्षये पाथा दिवो विमहसः । स सुगोपातमो जन' ऽइति न स्वाहाकरोत्यहुतादो वै देवानां मरुतो विडहुत-

* का० श्रौ० सू० २५ १०. १६-१७।
† का० श्रौ० सू० २५ १० १८।
(१) शु० सं० अ० ८ क० ३१।

मिवैतद्यदुस्वाहाकृतं देवानां व्वै मरुतस्तदेनं मरुत्स्वेव प्प्रतिष्ठापयति ॥ १७ ॥ * अथाऽङ्गारैरभि समूहति। 'मही द्यौः पृथिवी च न ऽइमं य्यज्ञं मिमिक्षताम्। पिपृतान्नो भरीमभिरि'ति ॥ १८ ॥ (B)

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ षोडशिग्रहः ]

इन्द्रो ह वै षोडशी। तं नु सकृदिन्द्रं भूतान्यत्यरिच्च्यन्त प्प्रजा वै भूतानि ता हैनेन सदृग्भवमिवाऽऽसुः ॥ १ ॥ इन्द्रो ह वा ऽईक्षाञ्चक्रे। कथं न्वहमिदᳬ सर्वमतितिष्ठेयमर्वागेव मदिदᳬ सर्वᳬ स्यादिति स ऽएतं ग्रहमपश्यत्तमगृह्णीत स ऽइदᳬ सर्वमेवाऽत्यतिष्ठदर्वागेवाऽस्मादिदᳬ सर्वमभवत्सर्वᳬ ह वा ऽइदमतितिष्ठत्यर्वागेवाऽस्मादिदᳬ सर्वं भवति यस्यैवं विदुष ऽएतं ग्रहं गृह्णन्ति ॥ २ ॥ तस्मादेतदृषिणाऽभ्यनूक्तम्। 'न ते महित्वमनुभूदध द्यौ र्यदन्यया स्फिग्ग्या क्षामवस्था' ऽइति न ह वाऽअस्याऽसौ द्यौरन्यतरां चन स्फिगीमनुबभूव तथेदᳬ सर्वमेवाऽत्यतिष्ठदर्वागेवाऽस्मादिदᳬ सर्वमभवत्सर्वᳬ ह वा ऽइदमतितिष्ठत्यर्वागेवाऽस्मादिदᳬ सर्वं भवति

* का० श्रौ० सू० २५. १०. १९।

(१) शु० सं० अ० ८ क० ३२।

(B) अत्रशतम् २७००, एतद्ब्राह्मणस्था विषयाः अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ६. ४।

(२) ऋ० सं० १. १२. ११।

यस्यैवं विदुष ऽएतं ग्रहं गृह्णन्ति ॥ ३ ॥ तं वै हरिवत्यर्चा गृह्णाति । हरिवतीषु स्तुवते हरिवतीरनुशꣳसति वीर्यं वै हर ऽइन्द्रोऽसुराणाꣳ सपत्नानाꣳ समवृङ्क्त तथो ऽएवैष ऽएतद्वीर्यꣳ हरꣳ सपत्नानाꣳ संवृङ्क्ते तस्माद्धरिवत्यर्चा गृह्णाति हरिवतीषु स्तुवते हरिवतीरनु शꣳसति ॥ ४॥ तं वा ऽअनुष्टुभा गृह्णाति । गायत्रं वै प्रातꣳ सवनं त्रैष्टुभं माध्यन्दिनꣳ सवनं जागतं तृतीयसवनमथाऽतिरिक्ताऽनुष्टुवत्ये- वैनमेतद्रेचयति तस्मादनुष्टुभा गृह्णाति ॥ ५ ॥ तं वै चतुःस्रक्तिना * पात्रेण गृह्णाति । त्रयो वा ऽइमे लोका- स्तदिमानेव लोकाँस्तिसृभिꣳ स्रक्तिभिराप्नोत्यथैवैनं चतु- र्थ्या स्रक्त्या रेचयति तस्माच्चतुःस्रक्तिना पात्रेण गृह्णाति ॥६॥ [ अर्धप्रपाठकः ॥६३॥ ] तं वै प्रातꣳ सवने गृह्णीयात् । आग्रयणं गृहीत्वा स प्रातꣳ सवने गृहीत ऽएतस्मात्कालादुपशेते तदेनꣳ सर्वाणि सवनान्यतिरेचयति ॥७॥ माध्यन्दिने वैनꣳ सवने गृह्णीयात् । आग्रयणं गृहीत्वा सो ऽएवा मीमाꣳ- सैव प्रातꣳ सवन ऽएवैनं गृह्णीयादाग्रयणं गृहीत्वा स प्रातꣳ सवने गृहीत ऽएतस्मात्कालादुपशेते ॥ ८ ॥ † अथाऽतो गृह्णात्येव । 'आतिष्ठ वृत्रहन्रथं युक्ता ते ब्रह्मणा हरी । अर्वाचीनꣳ सु ते मनो ग्रावा कृणोतु वग्नुना । उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन ऽएष ते योनिरि- न्द्राय त्वा षोडशिन' ऽइति ॥ ९ ॥ अनया वा । 'युक्ष्वा

* का० श्रौ० सू० १२ ५. ७।८.
† का० श्रौ० सू० १२. ५. २।
(१) शु० यं० सं० ८ क० ३३। (२) शु० यं० सं० ८ क० ३४।

हि केशिना हरी वृषणा कक्ष्यप्रा । अथा न ऽइन्द्र सोमपा गिरामुपश्रुतिं चर । उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन-ऽएष ते योनिरिन्द्राय त्वा षोडशिन' ऽइति ॥ १० ॥

अथेत्य. स्तोत्रमुपाकरोति । सोमोऽत्यरेच्युपाऽऽवर्त्तद्ध्व-मित्यत्रैवैनमेतद्रेचयति तं वै . पुराऽस्तमयादुपाकरोत्यस्तमि-तेऽनुशंसति तदेनेनाऽहोरात्रे सन्दधाति तस्मात्पुराऽस्त-मयादुपाकरोत्यस्तमितेऽनुशंसति ॥ ११ ॥ (C)

पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ अतिग्राह्या ग्रहाः ]

सर्वे ह वै देवाः । अग्रे सदृशा ऽआसुः सर्वे पुण्या-स्तेषाꣳ सर्वेषाꣳ सदृशानाꣳ सर्वेषां पुण्यानां त्रयोऽकाम-यन्ताऽतिष्ठावानः स्यामेत्यग्निरिन्द्रः सूर्य्यः ॥ १ ॥ तेऽर्चन्तः श्राम्यन्तश्चेरुः । त ऽएतानतिग्राह्यान्ददृशुस्तानत्यगृह्णत तद्यदेनानत्यगृह्णत तस्मादतिग्राह्या नाम तेऽतिष्ठावानो-ऽभवन्यथैत ऽएतदतिष्ठेवाऽतिष्ठेव ह वै भवति यस्यैवं विदुष ऽएतान्ग्रहान्गृह्णन्ति ॥ २ ॥ नो ह वा ऽइदमग्रेऽग्नौ वर्च्च ऽआस । यदिदमस्मिन्वर्च्चः सोऽकामयतेदं मयि वर्च्चः स्यादिति स ऽएतं ग्रहमपश्यत्तमगृह्णीत ततोऽस्मि-न्नेतद्वर्च्च ऽआस ॥ ३ ॥ नो ह वा ऽइदमग्र ऽइन्द्र ऽओज-ऽआस । यदिदमस्मिन्नोजः सोऽकामयतेदं मय्योजः स्यादिति स ऽएतं ग्रहमपश्यत्तमगृह्णीत ततोऽस्मिन्नेतदोज-

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श्रौ० ५ १ १; तै० सं० ६ १ ११, मै० सं० ४, ७ ६ ।

ऽआस ॥ ४ ॥ नो ह वा ऽइदमग्रे सूर्य्यं बभ्राज ऽआस । यदिदमस्मिंश्भ्राजः सोऽकामयतेदं मयि भ्राजः स्यादिति स ऽएतं ग्रहमपश्यत्तमगृह्णीत ततोऽस्मिन्नेतद्भ्राजऽआसैतानि ह वै तेजाᳬस्येतानि वीर्य्याण्यात्मन्धत्ते यस्यैवं विदुष ऽएतान्ग्रहान्गृह्णन्ति ॥ ५ ॥ तान्वै प्रातःसवने गृह्णीयात् । आग्रयणं गृहीत्वाऽऽत्मा वा ऽआग्रयणो बहु वा ऽइदमात्मन ऽएकैकमतिरिक्तं क्लोम हृदयं त्वद्यत्वत् ॥ ६ ॥ माध्यन्दिने वैनान्त्सवने गृह्णीयात् । उक्थ्यं गृहीत्वोपाकरिष्यन्त्वा पूतभृतोऽग्रः ह वा ऽअस्यैषोऽनिरुक्तऽआत्मा यदुक्थ्यः सो ऽएषा मीमाᳬसैव प्रातः सवनऽएवैनान्गृह्णीयादाग्रयणं गृहीत्वा ॥ ७ ॥ ते माहेन्द्रस्यैवाऽनुहोमः हूयन्ते । एष वा ऽइन्द्रस्य निष्केवल्यो ग्रहो यन्माहेन्द्रोऽप्यस्यैतन्निष्केवल्यमेव स्तोत्रं निष्केवल्यः शस्त्रमिन्द्रो वै यजमानो यजमानस्य वा ऽएते कामाय गृह्यन्ते । तस्मान्माहेन्द्रस्यैवाऽनुहोमः हूयन्ते ॥ ८ ॥ अथाऽतो * गृह्णात्येव । 'अग्ने पवस्व स्वपा ऽअस्मे वर्चः सुवीर्य्यम् । दधद्रयिं मयि पोषम् । उपयाम गृहीतोऽस्यग्नये त्वा वर्चस ऽएष ते योनिरग्नये त्वा वर्चसे' ॥ ९ ॥ 'उत्तिष्ठन्नोजसा । सह पीत्वी शिप्रे ऽअवेपयः । सोममिन्द्र चमू सुतम् । उपयामगृहीतोऽसीन्द्राय त्वौजस ऽएष ते योनिरिन्द्राय त्वौजसे' ॥ १० ॥ 'अदृश्रमस्य केतवः ।

---

* का० श्रौ० सू० १२. ३. २।

(१) शु० यं० सं० ८ क० ३८। (२) शु० यं० सं० ८ क० ३९। (३) शु० यं० सं० ८ क० ४०।

वि रश्मयो जनाँ२ ऽअनु । भ्राजन्तो ऽअग्नयो यथा । उप-
यामगृहीतोऽसि सूर्य्याय त्वा भ्राजायैष ते योनिः
सूर्य्याय त्वा भ्राजायेति ॥ ११ ॥ तेषां † भक्षः । '(१) अग्ने
वर्चस्विन्वर्चस्वाँस्त्वं देवेष्वसि वर्चस्वानहं मनुष्येषु भूया-
समिन्द्रौजिष्ठौजिष्ठस्त्वं देवेष्वस्योजिष्ठोऽहं मनुष्येषु
भूयासꣳ सूर्य भ्राजिष्ठ भ्राजिष्ठस्त्वं देवेष्वसि भ्राजि-
ष्ठोऽहं मनुष्येषु भूयासमि'त्येतानि ह वै भ्राजाꣳस्येतानि
वीर्य्याण्यात्मन्धत्ते यस्यैवं विदुष ऽएतान्ग्रहान्गृह्णन्ति
॥ १२ ॥ तान्वै पृष्ठ्ये षडहे गृह्णीयात् । पूर्वे त्र्यह ऽआग्ने-
यमेव प्रथमेऽहन्नैन्द्रं द्वितीये सौर्य्यं तृतीय ऽएवमेवाऽन्व-
हम् ॥ १३ ॥ तानु हैक ऽउत्तरे त्र्यहे गृह्णन्ति । तदु तथा
न कुर्य्यात्पूर्व ऽएवैनाँस्त्र्यहे गृह्णीयाद्यद्युत्तरे त्र्यहे ग्रहीष्य-
न्त्स्यात्पूर्व ऽएवैनाँस्त्र्यहे गृहीत्वाऽथोत्तरे ‡ त्र्यहे गृह्णीया-
देवमेव यथापूर्वं विश्वजिति सर्वपृष्ठ ऽएकाह ऽएव
गृह्णन्ते ॥ १४ ॥ (D)

पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

---

एष वै प्रजापतिः । य ऽएष यज्ञस्तायते यस्मादिमाः
प्रजाः प्रजाता ऽएतं वेवाऽप्येतर्ह्यनु प्रजायन्ते ॥ १ ॥

---

† का० श्रौ० सू० १२. ३. ६ ।

(१) शु० यं० अ० ८ क० ३८-४० ।

‡ का० श्रौ० सू० १२. १. ३-४ ।

(D) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ६. २; कपि० सं० ४६. २. ३; तै० सं० ६. ८; मै० सं० ४. ७ ३ ।

उपाᳬंशुपात्रमेवाऽन्वजाः प्रजायन्ते । तद्वै तत्पुनर्य्यज्ञे प्रयुज्यते तस्मादिमाः प्रजाः पुनरभ्यावर्त्तं प्रजायन्ते ॥ २ ॥ अन्तर्य्यामपात्रमेवाऽन्ववयः प्रजायन्ते । तद्वै तत्पुनर्य्यज्ञे प्रयुज्यते तस्मादिमाः प्रजाः पुनरभ्यावर्त्तं प्रजायन्ते ॥ ३ ॥ अथ यदेतयोरुभयोः । सह सतोरुपाᳬंशुं पूर्वं जुहोति तस्माद् सह सतोऽजाऽऽविकस्योभयस्यैवाऽजाः पूर्वा यन्त्यनूच्योऽवयः ॥ ४ ॥ अथ यदुपाᳬंशुᳬं हुत्वा । ऊर्ध्वमुन्मार्ष्टि तस्मादिमा ऽअजा ऽअराडीतरा ऽआक्रममाणा ऽइव यन्ति ॥५॥ अथ यदन्तर्य्यामᳬं हुत्वा । अवाञ्चमवमार्ष्टि तस्मादिमा ऽअवयोऽवाचीनशीर्ष्ण्यः खनन्त्य ऽइव यन्त्येता वै प्रजापतेः प्रत्यक्षतमां यदजाऽवयस्तस्मादेतास्त्रिः संवत्सरस्य विजायमाना द्वौ त्रीनिति जनयन्ति ॥ ६ ॥ शुक्रपात्रमेवाऽनु मनुष्याः प्रजायन्ते । तद्वै तत्पुनर्य्यज्ञे प्रयुज्यते तस्मादिमाः प्रजाः पुनरभ्यावर्त्तं प्रजायन्त ऽएष वै शुक्रो य ऽएष तपत्येष ऽउ ऽएवेन्द्रः पुरुषो वै पशूनामैन्द्रस्तस्मात्पशूनामीष्टे ॥ ७ ॥ ऋतुपात्रमेवाऽन्वेकशफं प्रजायते । तद्वै तत्पुनर्य्यज्ञे प्रयुज्यते तस्मादिमाः प्रजाः पुनरभ्यावर्त्तं प्रजायन्त ऽउतीव वा ऽऋतुपात्रमितीवैकशफस्य शिर ऽआग्रयणपात्रमुक्थ्यपात्रमादित्यपात्रमेतान्येवाऽनु गात्रः प्रजायन्ते तानि वै तानि पुनर्य्यज्ञे प्रयुज्यन्ते तस्मादिमाः प्रजाः पुनरभ्यावर्त्तं प्रजायन्ते ॥८॥ अथ यदजाः । कनिष्ठानि पात्राण्ययनु प्रजायन्ते तस्मादेतास्त्रिः संवत्सरस्य विजायमाना

द्वौ त्रीनिति जनयन्त्यः कनिष्ठानि हि पात्राण्यनु प्रजायन्ते ॥ ९ ॥ अथ यद्ग्रावः । भूयिष्ठानि पात्राण्यनु प्रजायन्ते तस्मादेताः सकृत्संवत्सरस्य विजायमाना ऽएकैकं जनयन्त्यो भूयिष्ठा भूयिष्ठानि हि पात्राण्यनु प्रजायन्ते ॥ १० ॥ अथ द्रोणकलशे । अन्ततो हारियोजनं ग्रहं गृह्णाति प्रजापतिर्वै द्रोणकलशः स ऽइमाः प्रजा ऽउपाऽऽवर्त्तते ता ऽअवति ता ऽअभिजिघ्रत्येतद्वा ऽएना भवति यदेनाः प्रजनयति ॥ ११ ॥ पञ्च हु त्वेव तानि पात्राणि । यानीमाः प्रजा ऽअनु प्रजायन्ते समानमुपांशश्वन्तर्या-मयोः शुक्रपात्रमृतुपात्रमाग्रयणपात्रमुक्थ्यपात्रं पञ्च वा-ऽऋतवः संवत्सरस्य संवत्सरः प्रजापतिः प्रजापतिर्यज्ञो यद्यु षडेवर्त्तवः संवत्सरस्येत्यादित्यपात्रमेवैतेषां षष्ठम् ॥ १२ ॥ एकः हु त्वेव तत्पात्रम् । यदिमाः प्रजा ऽअनु प्रजायन्त ऽउपांशुपात्रमेव प्राणो ह्युपांशुः प्राणो हि प्रजापतिः प्रजापतिꣳ ह्येवेदꣳ सर्वमनु ॥ १३ ॥ (E)

पञ्चमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

[ ग्रहावेक्षणम् ]

एष वै प्रजापतिः । य ऽएष यज्ञस्तायते यस्मा-दिमाः प्रजाः प्रजाता ऽएतम्वेवाऽप्येतर्ह्यनु प्रजायन्ते स ऽआश्विनं ग्रहं गृहीत्वाऽवकाशानवकाशयति ॥ १ ॥ स-

(E) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श्रौ० ५. १. ६; तै० सं० ६. ५. १०।

ऽउपाᳫंशुमेव * प्प्रथममवकाशयति । 'प्राणाय मे वर्चोदा वर्चसे पवस्वे'त्युपांशुसवनं 'व्यानाय मे वर्चोदा वर्चसे पवस्वे'त्यथाऽन्तर्याम'मुदानाय[3] मे वर्चोदा वर्चसे पवस्वे'त्यथैन्द्रवायवं 'वाचे मे वर्च्चोदा वर्च्चसे पवस्वे'त्यथ मैत्रावरुणं 'क्रतूदक्षाभ्यां मे वर्चोदा वर्च्चसे पवस्वे'त्यथाऽऽश्विनᳫं 'श्रोत्राय मे वर्च्चोदा वर्च्चसे पवस्वे'त्यथ शुक्रामन्थिनौ 'चक्षुर्भ्यां मे वर्चोदसौ वर्चसे पवेथा'मिति ॥ २ ॥ अथाऽऽग्रयणम् । 'आत्मने मे वर्चोदा वर्च्चसे पवस्वे'त्यथोक्थ्य'मोजसे मे वर्चोदा वर्चसे पवस्वे'त्यथ ध्रुव'मायुषे मे वर्च्चोदा वर्च्चसे पवस्वे'त्यथाऽम्भृणौ 'विश्वाभ्यो मे प्प्रजाभ्यो वर्च्चोदसौ वर्च्चसे पवेथामि'ति वैश्वदेवौ वा ऽअम्भृणावतो हि देवेभ्य ऽउन्नयन्त्यतो मनुष्येभ्योऽतः पितृभ्यस्तस्माद्वैश्वदेवावम्भृणौ ॥ ३ ॥ अथ † द्रोणकलशम् । 'कोऽसि कतमोऽसी'ति प्प्रजापतिर्वै कः 'कस्याऽसि[13] को नामाऽसी'ति प्प्रजापतिर्वै को नाम 'यस्य[14] ते नामाऽमन्मही'ति मनुते ह्यस्य नाम 'यन्त्वा[15] सोमेनाऽतीतृपामे'ति तर्प्पयति ह्येनᳫं सोमेन स ऽआश्विनं ग्रहं गृहीत्वा-

* तै० सं० ३, २, ३; का० श्रौ० सू० ९. ७. ८ ।

(१) शु० सं० अ० ७ क० २७ । (२) शु० सं० अ० ७ क० २७ । (३) शु० सं० अ० ७ क० २७ । (४) शु० सं० अ० ७ क० २७ । (५) शु० सं० अ० ७ क० २७ । (६) शु० सं० अ० ७ क० २७ । (७) शु० सं० अ० ७ क० २७ । (८) शु० सं० अ० ७ क० २८ । (९) शु० सं० अ० ७ क० २८ । (१०) शु० सं० अ० ७ क० २८ । (११) शु० सं० अ० ७ क० २८ ।

† "कोऽसीति द्रोणकलशम्" (का० श्रौ० सू० ९. ७. १४)।

(१२) शु० सं० अ० ७ क० २९ । (१३) शु० सं० अ० ७ क० २९ । (१४) शु० सं० अ० ७ क० २९ । (१५) शु० सं० अ० ७ क० २९ ।

ऽन्वङ्गमाशिषमाशास्ते 'सुप्रजाः प्रजाभिः स्यामि'ति तत्प्रजामाशास्ते 'सुवीरो वीरैरि'ति तद्वीरानाशास्ते 'सुपोषः पोषैरि'ति तत्पुष्टिमाशास्ते ॥ ४ ॥ तान्वै न सर्वमिवाऽवकाशयेत् । यो न्वेव ज्ञातस्तमवकाशयेद्योवाऽस्य प्रियः स्याद्यो वाऽनूचानोऽनूक्तेनैनाःप्राप्नुयात्स ऽआश्विनं ग्रहं गृहीत्वा कृत्स्नं यज्ञं जनयति तं कृत्स्नं यज्ञं जनयित्वा तमात्मन्धत्ते तमात्मन्कुरुते ॥ ५ ॥ (F)

पञ्चमाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥



[ सोमप्रायश्चित्तानि ]

ता वा ऽएताः । चतुस्त्रिꣳशद्व्याहृतयो भवन्ति प्रायश्चित्तयो नामैष वै प्रजापतिर्य ऽएष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाता ऽएतम्वेवाऽप्येतर्ह्यनु प्रजायन्ते ॥ १ ॥ अष्टौ वसवः । एकादश रुद्रा द्वादशाऽऽदित्या ऽइमे ऽएव द्यावापृथिवी त्रयस्त्रिꣳश्यौ त्रयस्त्रिꣳशद्वै देवाः प्रजापतिश्चतुस्त्रिꣳशस्तदेनं प्रजापतिं करोत्येतद्वा ऽअस्त्येतद्ध्यमृतं यद्ध्यमृतं तद्ध्यस्त्येतदु तद्यन्मर्त्यꣳ स ऽएष प्रजापतिः सर्वं वै प्रजापतिस्तदेनं प्रजापतिं करोति तस्मादेताश्चतुस्त्रिꣳशद्व्याहृतयो भवन्ति प्रायश्चित्तयो नाम ॥ २ ॥ ता हैके । यज्ञं तन्व ऽइत्याचक्षते यज्ञस्य हि

(१) शु० सं० अ० ७ क० २९। (२) शु० सं० अ० ७ क० २९। (३) शु० सं० अ० ८ क० २९।

(F) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते— का० श० ५, ६, ३।

त्येवैतानि पर्वाणि स ऽएष यज्ञस्तायमान ऽएता ऽएव देवता भवन्नेति ॥ ३ ॥ सा यदि घर्म्मदुघा ह्वलेत् । अन्यामुपसङ्क्रामेयुः स यस्यामेवैनां वेलायां पुरा पिन्वयन्ति तद्वैवैनामुदीचीᳬ स्थापयेदग्रेण वा शालां प्राचीम् ॥ ४ ॥ तद्ये ऽएते ऽअभितः । पुच्छकाण्डः शिखण्डास्तये ऽउच्छ्याते तयोर्यद्दक्षिणं तस्मिन्नेताश्चतुस्त्रिᳬशतमाज्याहुतीर्जुहोत्येतावान्वै सर्वो यज्ञो यावत्य ऽएताश्चतुस्त्रिᳬशदाहुतयो भवन्ति तदस्यां कृत्स्नमेव सर्वं स्यज्ञं दधात्येषा ह्यतो घर्मं पिन्वत ऽएषो तत्र प्रायश्चित्तिः क्रियते ॥ ५ ॥ अथ यद्यजस्य ह्वलेत् । तत्समन्वीक्ष्य जुहुयाद्दीक्षोपसत्स्वाहवनीये प्रसुत ऽआग्नीध्रे वि वा ऽएतद्यज्ञस्य पर्व स्रᳬसते यद्ध्वलति सा यैव तर्हि तत्र देवता भवति तयैवैतद्भिषज्यति तया सन्दधाति ॥ ६ ॥ अथ * यदि स्कन्देत् । तदद्भिरुपनिनयेदद्भिर्वा ऽइदᳬ सर्वमाप्तᳬ सर्वस्यैवाऽऽप्त्यै वैष्णववारुण्यर्चा यद्वा ऽइदं किञ्चार्च्छति वरुण ऽएवेदᳬ सर्वमार्प्पयति '(१)ययोरोजसा स्कभिता रजाᳬसि वीर्येभिर्वीरतमा शविष्ठा । या पत्येते ऽअप्रतीता सहोभिर्विष्णू ऽअगन्वरुणा पूर्वहूतावि'ति यज्ञो वै विष्णुस्तस्यैतदार्च्छति वरुणो वा ऽआर्प्पयिता तद्यस्याश्चैवैतद्देवताया ऽआर्च्छति यो च देवताऽऽर्प्पयति ताभ्यामेवैतदुभाभ्यां भिषज्यत्युभाभ्याᳬ सन्दधाति ॥ ७ ॥ अथो ऽअभ्येव † मृशेत् ।

* का० श्रौ० सू० १०, ९, १।
(१) शु० य० अ० ८ क० ५९।
† का० श्रौ० सू० २५, २, २०।

ऽएतस्मेवाऽऽस्येतद्धिनु प्रजायन्ते तदेनं मध्यत ऽएवैतस्य प्रजापतेर्दधाति मध्यतः सुवति ॥ १ ॥ अगृहीते माहेन्द्रे । एष वा ऽइन्द्रस्य निष्केवल्यो ग्रहो यन्माहेन्द्रोऽऽप्यस्यै-तन्निष्केवल्यमेव स्तोत्रं निष्केवल्यं शस्त्रमिन्द्रो वै यजमान-स्तदेनथ्स्व ऽएवाऽऽयतनेऽभिषिञ्चति तस्मादगृहीते माहेन्द्रे ॥ २ ॥ अग्रेण मैत्रावरुणस्य धिष्ण्यः । शार्दूल * चर्मोपस्तृणाति 'सोमस्य त्विषिरसी'ति यत्र वै सोम-ऽइन्द्रमत्यपवत स यत्ततः शार्दूलः समभवत्तेन सोमस्य त्विषिस्तस्मादाह सोमस्य त्विषिरसीति 'तवेव मे त्विषि-र्भूयादिति शार्दूलत्विषिमेवाऽस्मिन्नेतद्दधाति तस्मादाह तवेव मे त्विषिर्भूयादिति ॥ ३ ॥ अथ † पार्थानि जुहोति । ‡ पृथी ह वै वैन्यो मनुष्याणां प्रथमोऽ§ऽभिषिषिचे सोऽकामयत सर्वमन्नाद्यमवरुन्धीयेति तस्मा ऽएतान्यजुहवुः स ऽइदथ्ठ सर्वमन्नाद्यमवरुरुधेऽपि ह स्मास्मा ऽआरण्यान्पशूनभि ह्वयन्त्यसावेहि राजा त्वा पश्यत ऽइति तथेदथ्ठ सर्वमन्नाद्य-मवरुरुधे सर्वथ्ठ ह वा ऽअन्नाद्यमवरुन्धे यस्यैवं विदुष ऽएतानि हूयन्ते ॥ ४ ॥ तानि वै द्वादश भवन्ति । द्वादश वै मासाः संवत्सरस्य तस्माद् द्वादश भवन्ति ॥ ५ ॥ षट् पुरस्तादभिषेकस्य जुहोति । षडुपरिष्टात्तदेनं मध्यत-

* का० श्रौ० सू० १५ ५ १ ।
( १ ) शु० स० अ० १० क० ५ । ( २ ) शु० सं० अ० १० क० ५ ।
† का० श्रौ० सू० १५. ५. २ ।
‡ 'पृथुर्ह वै' इति 'च' पुस्तके ।
§ 'अभिषिषिचे' इति पाठ 'ख' पुस्तके दृश्यते ।

ऽएवैतस्य प्रजापतेर्दधाति मध्यतः सुवति ॥ ६ ॥ स यानि पुरस्तादभिषेकस्य जुहोति । बृहस्पतिस्तेषामुत्तमो भवत्यथ यान्युपरिष्टादभिषेकस्य जुहोतीन्द्रस्तेषां प्रथमो भवति ब्रह्म वै बृहस्पतिरिन्द्रियं वीर्य्यमिन्द्र ऽएताभ्यामेवैनमेतद्वीर्य्याभ्यामुभयतः परिवृꣳहति ॥ ७ ॥ स जुहोति । यानि पुरस्तादभिषेकस्य जुहो'त्यग्नये स्वाहे'ति तेजो वाऽअग्निस्तेजसैवैनमेतदभिषिञ्चति 'सोमाय स्वाहे'ति क्षत्रं वै सोमः क्षत्रेणैवैनमेतदभिषिञ्चति 'सवित्रे स्वाहे'ति सविता वै देवानां प्रसविता सवितृप्रसूत ऽएवैनमेतदभिषिञ्चति 'सरस्वत्यै स्वाहे'ति वाग्वै सरस्वती वाचैवैनमेतदभिषिञ्चति 'पूष्णे स्वाहे'ति पशवो वै पूषा पशुभिरेवैनमेतदभिषिञ्चति 'बृहस्पतये स्वाहे'ति ब्रह्म वै बृहस्पतिर्ब्रह्मणैवैनमेतदभिषिञ्चत्येतानि पुरस्तादभिषेकस्य जुहोति तान्येतान्यग्निनामानीत्याचक्षते ॥ ८ ॥ अथ जुहोति । यान्युपरिष्टादभिषेकस्य 'जुहोतीन्द्राय स्वाहे'ति वीर्य्यं वाऽइन्द्रो वीर्य्येणैवैनमेतदभिषिञ्चति 'घोषाय स्वाहे'ति वीर्य्यं वै घोषो वीर्य्येणैवैनमेतदभिषिञ्चति 'श्लोकाय स्वाहे'ति वीर्य्यं वै श्लोको वीर्य्येणैवैनमेतदभिषिञ्च'त्यꣳशाय स्वाहे'ति वीर्य्यं वा ऽअꣳशो वीर्य्येणैवैनमेतदभिषिञ्चति 'भगाय स्वाहे'ति वीर्य्यं वै भगो वीर्य्येणैवैनमेतदभिषिञ्च'त्यर्य्यम्णे

(१) शु० स० अ० १० क० ५। (२) शु० स० अ० १० क० ५। (३) शु० स० अ० १० क० ५। (४) शु० स० अ० १० क० ५। (५) शु० सं० अ० १० क० ५। (६) शु० स० अ० १० क० ५। (७) शु० सं० अ० १० क० ५। (८) शु० स० अ० ९ क० २४। (९) शु० सं० अ० १० क० ५। (१०) शु० सं० अ० १० क० ५। (११) शु० सं० अ० १० क० ५। (१२) शु० स० अ० १० क० ५।

स्वाहे॑ति त॒देनमस्य सर्व॒स्याऽर्य॑म॒णं करोत्येता॒न्युपरिष्टाद॒भिषेक॒स्य जु॒होति ता॒न्येता॒न्यादित्यनामानी॑त्याचक्षते ॥ ९ ॥ अ॒ग्रेण मैत्रावरुण॒स्य धि॒ष्ण्यम् । अभिषेचनीयानि पा॒त्राणि भवन्ति य॒त्रैता ऽआपोऽभिषेचनी॒या भ॒वन्ति ॥१०॥ पा॒लाशं भवति । ते॒न ब्राह्म॒णोऽभि॒षिञ्चति ब्रह्म॒ वै पलाशो ब्रह्म॒णैवैनमेतदभि॒षिञ्चति ॥ ११ ॥ औ॒दुम्बरं * भवति । ते॒न स्वोऽभि॒षिञ्चत्यन्नं॒ वा ऽऊर्गु॒दुम्बर ऽऊर्ग्वै स्वं य्यावद्वै पु॒रुषस्य स्वं भ॒वति॒ नैव ता॒वदशनायति ते॒नोर्क्स्वं त॒स्मादौ॒दुम्बरे॒ण स्वोऽभि॒षिञ्चति ॥ १२ ॥ नैयग्रोधपादं॒ भवति । ते॒न मि॒त्र्यो रा॒जन्न्योऽभि॒षिञ्चति पद्भिर्वै॒ न्न्यग्रो॒धः प्प्रतिष्ठितो मित्रे॒ण वै राज॒न्न्यः प्प्रतिष्ठितस्तस्मान्नैयग्रोधपादेन मि॒त्र्यो राज॒न्न्योऽभि॒षिञ्चति ॥ १३ ॥ आ॒श्वत्थं भवति । ते॒न वै॒श्योऽभि॒षिञ्चति य॒देवा॒ऽदोऽश्वत्थे तिष्ठत ऽइन्द्रो मरुत ऽउपाऽऽमन्त्रयत त॒स्मादा॒श्वत्थेन वै॒श्योऽभि॒षिञ्चत्येतान्य॒भिषेचनी॒यानि पा॒त्राणि भवन्ति ॥ १४ ॥ अ॒थ † पवित्रे करोति । 'पवित्रे' स्थो वैष्णव्या'वि॒ति सोऽसावेव ब॒न्धुस्त॒योर्हि॒रण्यं प्रवयति ता॒भ्यामेता॒ऽअभिषेचनी॒या ऽअप ऽउत्पुनाति तद्य॒द्धिरण्यं प्रव॒यत्यमृ॒तमा॒युर्हि॒रण्यं त॒दा स्वमृ॒तमा॒युर्दधाति त॒स्माद्धि॒रण्यं प्र॒वयति ॥ १५ ॥ स ‡ ऽउत्पुनाति । 'सवि-

* का० श्रौ० सू० १५, ४, ३४।
† का० श्रौ० सू० १५ ५, ४।
(१) शु० सं० अ० १० क० ६।
‡ का० श्रौ० सू० १५. ५. ५।
(२) शु० सं० अ० १० क० ६।

तुर्वः प्रसव ऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिरिति सोऽसावेव बन्धु'रनिभृष्टमसि वाचो बन्धुस्तपोजा' ऽइत्यनाधृष्टा स्थ रक्षोभिरित्येवैतदाह यदाहाऽनिभृष्टमसीति वाचो बन्धुरिति यावद्वै प्राणेष्वापो भवन्ति तावद्वाचा वदति तस्मादाह वाचो बन्धुरिति ॥ १६ ॥ तपोजा ऽइति । अग्नेर्वै धूमो जायते धूमादभ्रमभ्राद्वृष्टिरग्नेर्वा ऽएता जायन्ते तस्मादाह तपोजा ऽइति ॥ १७ ॥ 'सोमस्य दात्रमसी'ति । यदा वा ऽएनमेताभिरभिषुण्वन्त्यथाऽऽहुतिर्भवति तस्मादाह सोमस्य दात्रमसीति 'स्वाहा राजस्व' ऽइति तदेनाः स्वाहाकारेण वोत्पुनाति ॥ १८ ॥ ता ऽएतेषु पात्रेषु * व्यानयति । 'सधमादो द्युम्निनीराप ऽएता' ऽइत्यनतिमानिन्य ऽइत्येवैतदाह यदाह सधमाद ऽइति द्युम्निनीराप ऽएता ऽइति वीर्य्यवत्यऽइत्येवैतदाहा'ऽनाधृष्टा ऽअपस्यो वसाना' ऽइत्यनाधृष्टा स्थ रक्षोभिरित्येवैतदाह यदाहाऽनाधृष्टा ऽअपस्यो वसानाऽइति 'पस्त्यासु चक्रे वरुणः सधस्थमि'ति विशो वै पस्त्या विक्षु चक्रे वरुणः प्रतिष्ठामित्येवैतदाहा'ऽपाᳬ शिशुर्म्मातृतमास्वन्तरि'त्यपां वा ऽएष शिशुर्भवति यो राजसूयेन यजते तस्मादाहाऽपाᳬ शिशुर्म्मातृतमास्वन्तरिति ॥१९॥

---

(१) शु० स० अ० १० क० ६। (२) शु० स० अ० १० क० ६। (३) शु० स० अ० १० क० ६।

* का० श्रौ० सू० १५ ५ ६।

(४) शु० स० अ० १० क० ७। (५) शु० स० १० क० ७। (६) शु० स० अ० १० क० ७। (७) शु० स० अ० १० क० ७।

अथैनं वासाꣳसि * परिधापयति । तत्तार्प्यमिति वासो भवति तस्मिन्त्सर्वाणि यज्ञरूपाणि निष्यूतानि भवन्ति तदेनं परिधापयति 'क्षत्रस्योल्बमसी'ति तद्यदेव क्षत्रस्योल्वं तत एवैनमेतज्जनयति ॥ २० ॥ अथैनं पाण्ड्वं † परिधापयति । 'क्षत्रस्य जराय्वसीति' तद्यदेव क्षत्रस्य जरायु तत एवैनमेतज्जनयति ॥२१॥ अथाधीवासं ‡ प्रतिमुञ्चति । 'क्षत्रस्य योनिरसी'ति तद्यैव क्षत्रस्य योनिस्तस्या एवैनमेतज्जनयति ॥ २२ ॥ अथोष्णीषꣳ सꣳहृत्य । पुरस्तादवगूहति 'क्षत्रस्य नाभिरसी'ति तद्यैव क्षत्रस्य नाभिस्तामेवाऽस्मिन्नेतद्दधाति ॥ २३ ॥ तद्धैके । समन्तं परिवेष्टयन्ति नाभिर्वा अस्यैषा समन्तं वा इयं नाभिः पर्य्येतीति वदन्तस्तदु तथा न कुर्य्यात्पुरस्तादेवावगूहेत्पुरस्ताद्धीयं नाभिस्तद्यदेनं वासाꣳसि परिधापयति जनयत्येवैनमेतज्जातमभिषिञ्चानीति तस्मादेनं वासाꣳसि परिधापयति ॥२४॥ तद्धैके । निदधत्येतानि वासाꣳस्यथैनं पुनर्दीक्षितवसनं परिधापयन्ति तदु तथा न कुर्य्यादङ्गानि वा अस्य जनूर्वासाꣳस्यङ्गैर्हैनꣳ समर्द्धयन्ति वरुण्यं दीक्षितवसनꣳ स एतेषामेवैकं वाससां परिदधीत तदेनमङ्गैर्जन्वा तन्वा समर्द्धयति वरुण्यं दीक्षितवसनं तदेनं

---

* "तार्प्यं परिधापयति, क्षौमम्, त्रिपाणं वा घृतोक्षमेके, यज्ञरूपस्यूतम्" (का० श्रौ० सू० १५ ५ ७-११)।

(१) शु० सं० अ० १० क० ८।

† "पाण्ड्व च निवस्ते" का० श्रौ० सू० १५ ५ १२।

‡ का० श्रौ० सू० १५ ५. १३,१४।

(२) शु० सं० अ० १० क० ८। (३) शु० सं० अ० १० क० ८। (४) शु० सं० अ० १० क० ८।

वरुणण्याद्दीक्षितवसनात्प्रमुञ्चति ॥ २५ ॥ स यत्राऽवभृथमभ्यवैति । तदेतदभ्यवहरन्ति तत्सलोम क्रियते सऽएतेषामेवैकं वाससां परिधायोदैति तानि वशायै वा वपायाᳪ हुतायां दद्यादुदवसानीयायां वेष्टौ ॥ २६ ॥ अथ * धनुरधितनोति । 'इन्द्रस्य वार्त्रघ्नमसी'ति वार्त्रघ्नं वै धनुरिन्द्रो वै यजमानो द्वयेन वा ऽएष ऽइन्द्रो भवति यच्च क्षत्रियो यदु च यजमानस्तस्मादाहेन्द्रस्य वार्त्रघ्नमसीति ॥ २७ ॥ अथ † बाहू विमार्ष्टि । 'मित्रस्याऽसि वरुणस्याऽसी'ति बाह्वोर्वै धनुर्बाहुभ्यां वै राजन्यो मैत्रावरुणस्तस्मादाह मित्रस्याऽसि वरुणस्याऽसीति तदस्मै प्रयच्छति 'त्वयाऽयं वृत्रं वधेदि'ति त्वयाऽयं द्विषन्तं भ्रातृव्यं वधेदित्येवैतदाह ॥ २८ ॥ अथाऽस्मै तिस्र ऽइषूः प्रयच्छति । स यया प्रथमया समर्प्पणेन पराभिनत्ति सैका सेयं पृथिवी सैषा दृबा नामाऽथ यया विद्धः शयित्वा जीवति वा म्रियते वा सा द्वितीया तदिदमन्तरिक्षᳪ सैषा रुजा नामाऽथ ययाऽपैव राध्नोति सा तृतीया साऽसौ द्यौः सैषा क्षुमा नामैता हि वै तिस्र ऽइषवस्तस्मादस्मै तिस्र ऽइषूः प्रयच्छति ॥ २९ ॥ ‡ ताः प्रयच्छति । 'पातैनं प्राञ्चं पातैनं प्रत्यञ्चं पातैनं तिर्यञ्चं दिग्भ्यः पाते'ति

* का० श्रौ० सू० १५ ५ १७ ।
(१) शु० सं० अ० १० कं० ८ ।
† का० श्रौ० सू० १५. ५. १८, १९ ।
(२) शु० सं० अ० १० कं० ८ । (३) शु० सं० अ० १० [illegible]
‡ का० श्रौ० सू० १५. ५. २० ।
(४) शु० सं० अ० १० कं० ८ ।

तदस्मै सर्वा ऽएव दिशोऽशरव्या᳘ करोति तद्यदस्मै धनु᳘ प्रयच्छति वीर्यं वा ऽएतद्राजन्यस्य यद्धनुर्वीर्यवन्तम-भिषिञ्चानीति तस्माद्वा ऽअस्मा ऽआयुधं प्रयच्छति ॥३०॥ अथैनमाविदो * वाचयति। 'आविर्मर्या' ऽइत्यनिरुक्तं प्रजापतिर्वा ऽअनिरुक्तस्तदेनं प्रजापतय ऽआवेदयति सोऽस्मै सवमनुमन्यते तेनाऽनुमत᳘ सूयते ॥ ३१ ॥ 'आवित्तो ऽअग्निर्गृहपतिरि'ति। ब्रह्म वा ऽअग्निस्तदेनं ब्रह्मण-ऽआवेदयति तदस्मै सवमनुमन्यते तेनाऽनुमत᳘ सूयते ॥ ३२ ॥ [अर्धप्रपाठकः ॥६०॥] 'आवित्त ऽइन्द्रो वृद्धश्रवा' ऽइति। क्षत्रं वाऽइन्द्रस्तदेनं क्षत्रायाऽऽवेदयति तदस्मै सव-मनुमन्यते तेनाऽनुमत᳘ सूयते ॥३३॥ 'आवित्तौ मित्रावरुणौ धृतव्रतावि'ति। प्राणोदानौ वै मित्रावरुणौ तदेनं प्राणोदाना-भ्यामावेदयति तावस्मै सवमनुमन्येते ताभ्यामनुमत᳘ सूयते ॥ ३४ ॥ 'आवित्त᳘ पूषा विश्ववेदा' ऽइति। पशवो वै पूषा तदेनं पशुभ्य ऽआवेदयति तेऽस्मै सवमनुम-न्यन्ते तैरनुमत᳘ सूयते ॥ ३५ ॥ 'आवित्ते द्यावापृथिवी विश्वशम्भुवा'विति। तदेनमाभ्यां द्यावापृथिवीभ्यामा-वेदयति ते ऽअस्मै सवमनुमन्येते ताभ्यामनुमत᳘ सूयते ॥ ३६ ॥ 'आवित्तादितिरुरुशर्म्मे'ति। इयं वै पृथि-व्यदितिस्तदेनमस्यै पृथिव्या ऽआवेदयति साऽस्मै सव-

---

* का॰ श्रौ॰ सू॰ १५ ५ २१।

(१) शु॰ सं॰ अ॰ १० क॰ ९। (२) शु॰ सं॰ अ॰ १० ९। (३) शु॰ सं॰ अ॰ १० क॰ ९। (४) शु॰ सं॰ अ॰ १० क॰ ९। (५) शु॰ सं॰ अ॰ १० क॰ ९। (६) शु॰ सं॰ अ॰ १० क॰ ९। (७) शु॰ सं॰ अ॰ १० क॰ ९।

मनुमन्यते तयाऽनुमतः सूयते तद्याभ्य ऽएवैनमेतद्देवताभ्य ऽआवेदयति ता ऽअस्मै सवमनुमन्यन्ते ताभिरनुमतः सूयते ॥ ३७ ॥ (E)

तृतीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥



[ लम्बकेशपुरुषमुखे लोहशलाकाप्रक्षेपः, सीसनिरसनम्, रुक्मनिधानं च ]

केशवस्य पुरुषस्य । * लोहायसमास्य ऽआविध्य'त्यवेष्टा दन्दशूका' ऽइति सर्वाश्वा ऽएष मृत्यूनतिमुच्यते सर्वान्वधान्यो राजसूयेन यजते तस्य जरैव मृत्युर्भवति तद्यो मृत्युर्यो वधस्तमेवैतदतिनयति यद्दन्दशूकान् ॥ १ ॥ अथ यत्केशवस्य पुरुषस्य । न वा ऽएष स्त्री न पुमान्यत्केशवः पुरुषो यदह पुमाँस्तेन स्त्री यदु केशवस्तेनो न पुमान्नैतदयो न हिरण्यं यल्लोहायसं नैते क्रिमयो नाऽक्रिमयो यद्दन्दशूका ऽअथ यल्लोहायसं भवति लोहिता ऽइव हि दन्दशूकास्तस्मात्केशवस्य पुरुषस्य ॥ २ ॥ अथैनं † दिशः समारोहयति । 'प्राचीमारोह गायत्री त्वाऽवतु रथन्तरः साम त्रिवृत्स्तोमो वसन्त ऽऋतुर्ब्रह्म द्रविणम्' ॥ ३ ॥

---

(E) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— वा० श० ७ ३. ४, काठ० १५. ७, ८, मै० सं० ११ ६. १०, १०, तै० सं० १ ८. १३ ।

* का० श्रौ० सू० १५ ५ २२ ।

( १ ) शु० स० अ० १० क० १० ।

† का० श्रौ० सू० १५. ५. २३ ।

( २ ) शु० सं० अ० १० क० १० ।

'दक्षिणामारोह । त्रिष्टुप्त्वाऽवतु बृहत्साम पञ्चदश स्तोमो ग्रीष्म ऽऋतुः क्षत्रं द्रविणम्' ॥ ४ ॥ 'प्रतीचीमारोह । जगती त्वाऽवतु वैरूपᳪं साम सप्तदशस्तोमो वर्षा ऽऋतुर्विड्द्रविणम्' ॥ ५ ॥ 'उदीचीमारोह । अनुष्टुप्त्वाऽवतु वैराजᳪं सामैकविᳪंशस्तोमः शरदृतुः फलं द्रविणम्' ॥ ६ ॥ 'ऊर्ध्वामारोह । पङ्क्तिस्त्वाऽवतु शाक्वररैवते सामनी त्रिणवत्रयस्त्रिᳪंशौ स्तोमौ हेमन्तशिशिरावृतू वर्चो द्रविणमि'ति ॥ ७ ॥ तद्यदेनं दिशः समारोहयति । ऋतूनामेवैनमेतद्रूपमृतूनेवैतत्संवत्सरᳪं समारोहयति स ऽऋतून्त्संवत्सरᳪं समारुह्य सर्वमेवेदमुपर्युपरि * भवत्यर्वागेवाऽस्मादिदᳪं सर्वं भवति ॥ ८ ॥ शार्दूलचर्म्मणो जघनार्द्धे । सीसं निहितं भवति † तत्पदा प्रत्यस्यति 'प्रत्यस्तं नमुचेः शिर' ऽइति नमुचिर्ह वै नामाऽसुर ऽआस तमिन्द्रो निविव्याध तस्य पदा शिरोऽभितष्ठौ स यदभिष्ठित ऽउदवाधत स उच्छ्वङ्कस्तस्य पदा शिरः प्रचिच्छेद ततो रक्षः समभवत्तद्ध स्मैनमनुभाषते क्व गमिष्यसि क्व मे मोक्ष्यसऽइति ॥ ९ ॥ तत्सीसेनाऽपजघान । तस्मात्सीसं मृदु सत्तजवᳪं हि सर्वेण हि वीर्य्येणाऽपजघान तस्माद्धिरण्यरूपᳪं सन्न कियच्चनाऽर्हति सत्तजवᳪं हि सर्वेण हि वीर्य्येणाऽपजघान तद्वै स तन्नाष्ट्रा रक्षाᳪंस्यपजघान तथो-

(१) शु० स० अ० १० क० ११ । (२) शु० स० अ० १० क० १२ । (३) शु० स० अ० १० क० १३ । (४) शु० सं० अ० १० क० १४ ।

* 'अर्वागेव' इति पाठ 'ग च' पुस्तकयो ।

† का० श्रौ० सू० १५ ५ १४ ।

(५) शु० स० अ० १० क० १४ ।

ऽएवैष ऽएतन्नाष्ट्रा रक्षाꣳस्यतोऽपहन्ति ॥ १० ॥ अथैनꣳ * शार्दूलचर्म्माऽऽरोहयति । 'सोमस्य त्विषिरसी'ति यत्र वै सोम ऽइन्द्रमत्यपवत स यत्ततः शार्दूलः समभवत्तेन सोमस्य त्विषिस्तस्मादाह सोमस्य त्विषिरसीति 'तवेव मे त्विषिर्भूयादि'ति शार्दूलत्विषिमेवाऽस्मिन्नेतद्दधाति तस्मादाह तवेव मे त्विषिर्भूयादिति ॥ ११ ॥ अथ † रुक्ममधस्तादुपाऽस्यति । 'मृत्योः पाही'त्यमृतमायुर्हिरण्यं तदमृतऽआयुषि प्रतितिष्ठति ॥ १२ ॥ अथ रुक्मꣳ शतवितृण्णो वा भवति । नववितृण्णो वा स यदि शतवितृण्णꣳ शतायुर्वाऽअयं पुरुषः शततेजाः शतवीर्य्यस्तस्माच्छतवितृण्णो यद्यु नववितृण्णो नवेमे पुरुषे प्राणास्तस्मान्नववितृण्णꣳ ॥ १३ ॥ तमुपरिष्टाच्छीर्ष्णो ‡ निदधाति । 'ओजोऽसि सहोऽस्यमृतमसी'त्यमृतमायुर्हिरण्यं तदस्मिन्नमृतमायुर्दधाति तद्यद्रुक्मा ऽउभयतो भवतोऽमृतमायुर्हिरण्यं तदमृतेनैवैनमेतदायुषोभयतः परिवृꣳहति तस्माद्रुक्मा ऽउभयतो भवतः ॥ १४ ॥ अथ § बाहू ऽउद्गृह्णाति । 'हिरण्यरूपा ऽउषसो विरोक ऽउभाविन्द्रा ऽउदिथः सूर्य्यश्च । आ रोहतं वरुण

---

* का० श्री० सू० १५. ५. १५।
(१) उ० ग० अ० १० क० १५। (२) उ० ग० अ० १० क० १५।
† का० श्री० सू० १५. ५. १६।
(३) उ० ग० अ० १० क० १५।
‡ का० श्री० सू० १५. ५. १७।
(४) उ० ग० अ० १० क० ५१।
§ का० श्री० सू० १५. ६. ११।
(५) उ० सं० अ० १० क० १६।

मित्र गर्त्तं ततश्चक्षाथामदितिं दितिं चे'ति बाहू वै मित्रावरुणौ पुरुषो गर्त्तस्तस्मादाहाऽऽरोहतं वरुण मित्र गर्त्तमिति ततश्चक्षाथामदितिं दितिं चेति ततः पश्यतथं स्वं चारणं चेत्येवैतदाह ॥ १५ ॥ नैतेनोद्गृह्णीयात् । 'मित्रोऽसि वरुणोऽसी'त्येवोद्गृह्णीयाद्बाहू वै मित्रावरुणौ बाहुभ्यां वै राजन्यो मैत्रावरुणस्तस्मान्मित्रोऽसि वरुणोऽसीत्येवोद्गृह्णीयात् ॥ १६ ॥ तद्यदेनमूर्द्ध्वबाहुमभिषिञ्चति । वीर्य्यं वा ऽएतद्राजन्यस्य यद्बाहू वीर्य्यं वा ऽएतदपाथं रसः सम्भृतो भवति येनैनमेतदभिषिञ्चति नेन्न्म ऽइदं वीर्य्यं वीर्य्यमपाथं रसः सम्भृतो बाहू विलिनादिति तस्मादेनमूर्द्ध्वबाहुमभिषिञ्चति ॥ १७ ॥ (A)

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

[ अथाऽभिषेकः ]

तं वै प्राञ्चं * तिष्ठन्तमभिषिञ्चति । पुरस्ताद् ब्राह्मणोऽभिषिञ्चत्यद्ध्वर्य्युर्वा यो वाऽस्य पुरोहितो भवति पश्चादितरे ॥ १ ॥ 'सोमस्य त्वा द्युम्नेनाऽभिषिञ्चामी'ति । वीर्य्येणैतदा'हाऽग्नेर्भ्राजसे'ति वीर्य्येणैवैतदाह 'सूर्य्यस्य वर्चसे'ति वीर्य्येणैवैतदाहे'न्द्रस्येन्द्रियेणे'ति वीर्य्येणैवैतदाह

( १ ) शु० सं० अ० १० क० १६ ।

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श्रौ० ७ ३ १, काठ० १५. ७, ८, मै० सं० ११ ६ ४, तै० सं० १ ८ १२, १३ ।

* का० श्रौ० सू० १५ ५ ३०–३१ ।

( २ ) शु० सं० अ० १० क० १७ । ( ३ ) शु० सं० अ० १० क० १७ । ( ४ ) शु० सं० अ० १० क० १७ । ( ५ ) शु० सं० अ० १० क० १७ ।

'क्षत्राणां क्षत्रपतिरेधी'ति राज्ञामधिराज ऽएधीत्येवैतदा'हा-ऽतिदि॑द्यून्पाही'तीषवो वै दिद्यव ऽइषुवधमेवैनमेतद् तिनयति तस्मादाहाऽतिदिद्यून्पाहीति ॥ २ ॥ इमं देवाऽ । असपत्नꣳ सुवद्ध्वमि'तीमं देवा ऽआभ्रातृव्यꣳ सुवद्ध्वमि-त्येवैतदाह 'महते क्षत्राय महते ज्यैष्ठ्याये'ति नाऽत्रतिरो-हितमिवाऽस्ति महते जानराज्याये'ति महते जनानाꣳ राज्या-येत्येवैतदा'हेन्द्रस्येन्द्रियाये'ति वीर्य्यायेत्येवैतदाह यदाहेन्द्रस्ये न्द्रियाये'तीममुमुष्य पुत्रममुष्यै पुत्रमि'ति तद्यद्देवाऽस्य जन्म तत ऽएवैतदा'हाऽस्यै विशꣳ ऽइति यस्यै विशो राजा भवत्ये'ष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानाꣳ राजे'ति तदस्मा-ऽइदꣳ सर्वमाद्यं करोति ब्राह्मणमेवाऽपोद्धरति तस्माद् ब्रा-ह्मणोऽनाद्यꣳ सोमराजा हि भवति ॥३॥ * अथैतमभिषेकम् । कृष्णविषाणयाऽनुविमृष्टे वीर्य्यं वा ऽएतदपाꣳ रसꣳ सम्भृतो भवति येनैनमेतदभिषिञ्चतीदं मे वीर्य्यꣳ सर्वमात्मानमुप-स्पृशादिति तस्माद्वा ऽअनुविमृष्टे ॥ ४ ॥ † सोऽनुविमृष्टे । 'प्र पर्वतस्य वृषभस्य पृष्ठादि'ति यथाऽयं पर्वतोऽतिष्ठावा यथऽर्षभꣳ पशूनतिष्ठावैवं वा ऽएष ऽइदꣳ सर्वमतितिष्ठ-त्यर्व्वागेनाऽस्मादिदꣳ सर्वं भवति यो राजसूयेन यजते

(१) शु० मा० सं० १० क० १७। (२) शु० मा० सं० १० क० १७। (३) शु० मा० सं० ९ क० ४०। (४) शु० मा० सं० १० क० १८। (५) शु० मा० सं० १० क० १८। (६) शु० मा० सं० १० क० १८। (७) शु० मा० सं० १० क० १८। (८) शु० मा० सं० १० क० ११। (९) शु० मा० सं० १० क० १८।

* अत्र दशतम् ।१००।

† का० श्रौ० सू० १५, ६, ८।

तस्मादाह 'प्र पर्वतस्य वृषभस्य पृष्ठान्नावश्चरन्ति स्वसिच-ऽइयानाः । ता ऽआवव्रृत्रन्नधरागुदक्ता ऽअहिं बुध्न्यमनु रीयमाणा' ऽइति ॥ ५ ॥ अथैनमन्तरेव शार्दूलचर्म्मणि * विष्णुक्रमान्क्रमयति । 'विष्णोर्विक्रमणमसि विष्णोर्विक्रान्तमसि विष्णोः क्रान्तमसी'तीमे वै लोका विष्णोर्विक्रमणं विष्णोर्विक्रान्तं विष्णोः क्रान्तं तदिमानेव लोकान्त्समारुह्य सर्वमेवेदमुपर्य्युपरि भवत्यर्वागेवाऽस्मादिदᳪ सर्वं भवति ॥ ६ ॥ अथ ब्राह्मणस्य पात्रे । सᳪस्रवान्त्समवनयति तद् ब्राह्मणः राजानमनुयशᳪ करोति तस्माद् ब्राह्मणो राजानमनुयशः ॥ ७ ॥ तद्योऽस्य पुत्रः प्रियतमो भवति । तस्मा ऽएतत्पात्रं प्रयच्छतीदं मेऽयं वीर्य्यं पुत्रोऽनुसन्तनव'दिति ॥ ८ ॥ अथ प्रतिपरेत्य † गार्हपत्यमन्वारब्धे जुहोति । 'प्रजापते नै त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो ऽअस्त्वयममुष्य पिते'ति तद्यः पुत्रस्तं पितरं करोति यः पिता तं पुत्रं तदेनयोर्वीर्य्ये व्यतिषजत्य'सावस्य पिते'ति तद्यः पिता तं पितरं करोति यः पुत्रस्तं पुत्रं तदेनयोर्वीर्य्ये व्यतिषज्य पुनरेव यथायथं करोति 'वयᳪ स्याम पतयो रयीणाᳪ स्वाहे'त्याशी-

---

(१) शु० सं० अ० १० क० १९।
* का० श्रौ० सू० १५ ६ ९।
(२) शु० सं० अ० १० क० १९। (३) का० श्रौ० सू० १५ ६ १०।
† का० श्रौ० सू० १५ ६. ११।
(४) शु० सं० अ० १० क० २०। (५) शु० सं० अ० १० क० २०। (६) शु० सं० अ० १० क० २०।

रेवैपैतस्य कर्म्मण ऽआशिषमेवैतदाशास्ते ॥ ९ ॥ अथ य-ऽएष सꣳस्रवोऽतिरिक्तो भवति । तमाग्नीध्रीये * जुहो-त्यतिरिक्तो वा ऽएष सꣳस्रवो भवत्यतिरिक्त ऽआग्नीध्रीयो गार्हपत्ये हवीꣳष्यपि श्रपयन्त्याहवनीये जुह्वत्यथैषोऽतिरिक्त-स्तदतिरिक्त ऽएवैतदतिरिक्तं दधात्युत्तरार्द्धे जुहोत्येषा ह्येतस्य देवस्य दिक्तस्मादुत्तरार्द्धे जुहोति स जुहोति 'रुद्र यत्ते क्रिवि परं नाम तस्मिन्हुतमस्यमेष्टमसि स्वाहे'ति ॥ १० ॥ (B)

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥२॥



[ रथोपावहरणम् ]

तद्योऽस्य स्त्रो भवति । तस्य शतं वा परः शता वा गा ऽउत्तरेणाऽऽहवनीयꣳ सꣳ स्थापयति तद्यदेवं करोति ॥ १ ॥ वरुणाद्ध वा ऽअभिषिषिचानात् । इन्द्रियं वीर्य्यमप-चक्राम शश्वद्य ऽएषोऽपाꣳ रसः सम्भृतो भवति येनैन-मेतदभिषिञ्चति ,सोऽस्येन्द्रियं वीर्य्यं निर्ज्जघान तत्पशु-ष्वन्वविन्दत्तस्मात्पशवो पशो यदेष्वन्वविन्दत्तत्पशुष्वनु-विद्येन्द्रियं वीर्य्यं पुनरात्मन्नधत्त तथो ऽएवैष ऽएतन्नाऽऽ-हैवाऽस्माऽन्विन्द्रियं वीर्य्यमपक्रामति वरुणसवो वा ऽएष यद्राजसूयमिति वरुणोऽकरोदिति त्वेवैष ऽएतत्करोति ॥२॥ अथ रथमुपाऽवहरति । यद्वै राजन्यात्पराभवति रथेन

* का० श्रौ० सू० १५ ६, १२।

(१) शु० य० अ० १० क० २०।

(B) एतद्ब्राह्मणस्या रिपया अन्यत्राऽप्युपलभ्यन्ते यथा — का० सं० ७, १, १, काठ० १५. ७ मै० सं० ११, ६. ५, १२, तै० ब्रा० १, ८, १२, १२।

वै तदनुयुङ्क्ते तस्माद्रथमुपाऽवहरति ॥ ३ ॥ * सऽउपाऽवहरति । 'इन्द्रस्य वज्रोऽसी'ति वज्रो वै रथ ऽइन्द्रो वै यजमानो द्वयेन वा ऽएष ऽइन्द्रो भवति यच्च क्षत्रियो यदु च यजमानस्तस्मादाहेन्द्रस्य वज्रोऽसीति ॥ ४ ॥ तमन्तर्वेद्यवभ्यवत्र्य युनक्ति । 'मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मीति बाहू वै मित्रावरुणौ बाहुभ्यां वै राजन्यो मैत्रावरुणस्तस्मादाह मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मीति ॥ ५ ॥ तं चतुर्युजं युनक्ति । स जघनेन सदोऽग्रेण शालां येनैव दक्षिणा यन्ति तेन प्रतिपद्यते तं जघनेन चात्वालमग्रेणाऽऽग्नीध्रमुद्यच्छति ॥ ६ ॥ † तमातिष्ठति । 'अव्यथायै त्वा स्वधायै त्वे'त्यनार्त्यै त्वेत्येवैतदाह यदाहाऽव्यथायै त्वेति स्वधायै त्वेति रसाय त्वेत्येवैतदा'हाऽरिष्टो ऽअर्जुन' ऽइत्यर्जुनो ह वै नामेन्द्रो यदस्य गुह्यं नाम द्वयेन वा ऽएष ऽइन्द्रो भवति यच्च क्षत्रियो यदु च यजमानस्तस्मादाहाऽरिष्टो ऽअर्जुनऽइति ॥ ७ ॥ अथ दक्षिणायुग्यमुपार्पति । 'मरुतां प्रसवेन जये'ति विशो वै मरुतो विशा वै तत्क्षत्रियो जयति यस्मिन्नीपति तस्मादाह मरुतां प्रसवेन जयेति ॥ ८ ॥ अथ मध्ये गवामुद्यच्छति । 'आपाम मनसे'ति मनसा वा ऽइदꣳ सर्वमाप्तं तन्मनसैवैतत्सर्वमाप्नोति तस्मादाहाऽऽपाम मन

* का० श्रौ० सू० १४. ३. १, १५. ६. १५ ।

( १ ) शु० सं० अ० १० क० २१ । ( २ ) शु० सं० अ० १० क० २१ ।

† का० श्रौ० सू० १५. ६. १७–२० ।

( ३ ) शु० सं० अ० १० क० २१ । ( ४ ) शु० सं० अ० १० क० २१ । ( ५ ) शु० सं० अ० १० क० २१ । ( ६ ) शु० सं० अ० १० क० २१ ।

सेति ॥ ९ ॥ अथ धनुरार्त्न्या गामुपस्पृशति । 'संमिन्द्रियेण'तीन्द्रियं वै वीर्य्यं गाव ऽइन्द्रियमेवैतद्वीर्य्यमात्मन्धत्तेऽथाऽऽह जिनामीमाः कुर्वे ऽइमा ऽइति ॥ १० ॥ तद्यरस्वस्य गोपूयच्छति । यद्वै पुरुषात्पराग्भवति यशो वा किञ्चिद्वा स्वः हैवाऽस्य तत्प्रतमामिवाऽभ्यपक्रामति तत्स्वादेवैतदिन्द्रियं वीर्य्यं पुनरात्मन्धत्ते तस्मात्स्वस्य गोपूयच्छति ॥ ११ ॥ तस्मै तावन्मात्रीर्वा भूयसीर्वा प्रतिददाति । न वा ऽएष क्रूरकर्म्मणे भवति यद्यजमानः क्रूरमिव वा ऽएतत्करोति यदाह * जिनामीमाः कुर्वे ऽइमाऽइति तथो हाऽस्यैतदक्रूरं कृतं भवति तस्मात्तावन्मात्रीर्वा भूयसीर्वा प्रतिददाति ॥ १२ ॥ अथ दक्षिणानायच्छति । सोऽग्रेण यूपं † दक्षिणेन वेदिं स्येनैव दक्षिणा यन्ति तेन प्रतिपद्यते तं जघनेन सदोऽग्रेण शालामुद्यच्छति ॥ १३ ॥ 'मा त ऽइन्द्रे ते वयम् । तुराषाडयुक्तासो ऽअब्रह्मता विदसाम । तिष्ठा रथमधि यं वज्रहस्ता रश्मीन्देव यमसे स्वश्वानि'त्युद्यच्छत्येवैतयाऽभीशवो वै रश्मयस्तस्मादाहा रश्मीन्देव यमसे स्वश्वानित्यथ रथविमोचनीयानि जुहोति प्रीतो रथो विमुच्च्याता ऽइति तस्माद्रथविमोचनीयानि जुहोति ॥ १४ ॥ ‡ स जुहोति । 'अग्नये गृहपतये स्वाहे'ति स

(१) शु० सं० अ० १० क० २१।
* का० श्रौ० सू० ५. ६. २२।
† का० श्रौ० सू० ५. ६. २२।
(२) शु० सं० अ० १० क० २२।
‡ "अग्नये गृहपतय इति चत्वारि रथविमोचनीयानि जुहोति प्रतिमन्त्रम्" (का० श्रौ० सू० १५. ६. २१)।
(३) शु० सं० अ० १० क० २३।

यदेवाऽऽग्नेयꣳ रथस्य तदेवैतेन प्रीणाति ब्रह्म वा ऽआग्नेया रथस्य ब्रह्मनेवैतेन प्रीणाति श्रीर्वै गार्हपतं यावतो–यावत-ऽईष्टे तच्छ्रियमेवाऽस्यैतद्गार्हपतꣳ राज्यमभिविमुच्यते॥१५॥ 'सोमाय वनस्पतये स्वाहे'ति। द्वयानि वै वानस्पत्यानि चक्राणि रथ्यानि चानसानि च तेभ्यो न्वेवैतदुभयेभ्यो-ऽरिष्टिं कुरुते सोमो वै वनस्पतिः स यदेव वानस्पत्यꣳ रथस्य तदेवैतेन प्रीणाति दारूणि वै वानस्पत्यानि रथस्य दारूण्येवैतेन प्रीणाति क्षत्रं वै सोमः क्षत्रमेवाऽस्यै तद्रा-ज्यमभिविमुच्यते ॥ १६ ॥ 'मरुतामोजसे स्वाहे'ति। स यदेव मारुतꣳ रथस्य तदेवैतेन प्रीणाति चत्वारोऽश्वा रथः पञ्चमो द्वौ सव्यष्ट्रसारथी ते सप्त-सप्त-सप्त वै मारुतो गणः सर्वमेवैतेन रथं प्रीणाति विशो वै मरुतो विशमेवा-ऽस्यैतद्राज्यमभिविमुच्यते ॥१७॥ 'इन्द्रस्येन्द्रियाय स्वाहे'ति। स यदेवैन्द्रꣳ रथस्य तदेवैतेन प्रीणाति सव्यष्टा वा-ऽऐन्द्रो रथस्य सव्यष्टारमेवैतेन प्रीणातीन्द्रियं वै वीर्य-मिन्द्र ऽइन्द्रियमेवाऽस्यैतद्वीर्यꣳ राज्यमभिविमुच्यते ॥ १८ ॥ अथ * वाराह्या ऽउपानहा ऽउपमुच्यते। अग्नौ ह वै देवा घृतकुम्भं प्रवेशयाञ्चक्रुस्ततो वराहः सम्बभूव तस्माद्वराहो मेदुरो घृताद्धि सम्भूतस्तस्माद्वराहे गावः सञ्जानते स्वमेवैतद्रसमभि सञ्जानते तत्पशूनामेवैतद्रसे प्रतितिष्ठति तस्माद्वाराह्या ऽउपानहा ऽउपमुञ्चते ॥१९॥

(१) शु० सं० अ० १० क० २३। (२) शु० सं० अ० १० क० २३। (३) शु० सं० अ० १० क० २३।

* का० श्री० सू० १५ ६ २४।

अथेमां प्रत्यवेक्षमाणो * जपति । 'पृथिवि मातर्म्मा मा हिᳫ सीर्म्मो ऽअहन्त्वामि'ति वरुणाद्ध वा ऽअभिषिषिचा- नात्पृथिवी बिभयाञ्चकार महद्वा ऽअयमभूद्योऽभ्यषेचि यद्वै माऽयं नाऽवद्दृणीयादिति वरुण ऽउ ह पृथिव्यै बिभ- याञ्चकार यद्वै मेऽयं नाऽवधून्वीतेति तदनयैवैतन्मित्रधेय- मकुरुत न हि माता पुत्रᳫ हिनस्ति न पुत्रो मातरम् ॥२०॥ वरुणसवो वा ऽएष यद्राजसूयम् । पृथिव्यु हैतस्माद्बि- भेति महद्वा ऽअयमभूद्योऽभ्यषेचि यद्वै' माऽयं नाऽव- द्दृणीयादित्येष ऽउ हाऽस्यै बिभेति यद्वै मेऽयं नाऽवधून्वी- तेति तदनयैवैतन्मित्रधेयं कुरुते न हि माता पुत्रᳫ हिनस्ति न पुत्रो मातरं तस्मादेवं जपति ॥ २१ ॥ † सोऽवतिष्ठति । 'हᳫसᳫ शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऽऋतजा ऽअद्रिजा- ऽऋतं बृहदि'त्येतामतिच्छन्दसं जपन्नेषा वै सर्वाणि च्छन्दाᳫसि यदतिच्छन्दास्तथैनं पाप्मा नाऽन्ववतिष्ठति ॥ २२ ॥ तं न सङ्ग्रहीताऽन्ववतिष्ठेत् । नेत्तं लोकमन्ववतिष्ठाद्यᳫ सुपुत्राणोऽन्ववाऽस्त्थादिति तᳫ सरथमेव रथवाहन ऽआदधति ततोऽवाङुप- प्प्रवते तथा तँल्लोकं नाऽन्ववतिष्ठति यᳫ सुपुत्राणोऽन्व- वाऽस्त्थात् ॥ २३ ॥ उत्तरेणाऽऽहवनीयं पूर्वाग्निरुद्धृतो

* का॰ श्रौ॰ सू॰ १५. ६. २५।
(१) शु॰ यं॰ अ॰ १० क॰ २३।
† का॰ श्रौ॰ सू॰ १५. ६. २६।
(२) शु॰ यं॰ अ॰ १० क॰ २४।

भवति । स रथवाहनस्य दक्षिणमन्वनुप्यन्दह शतमानौ प्र-
वृत्तावाबध्नाति ॥२४॥ औदुम्बरीᳬ * शाखामुपगूहति । तयोर-
न्यतरमुपस्पृश'तीयदस्याऽऽयुरस्याऽऽयुर्मयि धेहि युङ्ङसि
वर्चोऽसि वर्चो मयि धेही'ति तदायुर्वर्च्च ऽआत्मन्धत्ते ॥२५॥
अथौदुम्बरीᳬ † शाखामुपस्पृशति । 'ऊर्गस्यूर्ज्जं मयि
धेही'ति तदूर्जमात्मन्धत्ते तस्यैतस्य कर्म्मण ऽएतावेव
शतमानौ प्रवृत्तौ दक्षिणा तौ ब्रह्मणे ददाति ब्रह्मा हि यज्ञं
दक्षिणतोऽभिगोपायति तस्मात्तौ ब्रह्मणे ददाति ॥ २६ ॥
अग्रेण मैत्रावरुणस्य धिष्ण्यम् । मैत्रावरुणी पयस्या निहिता
भवति तामस्य बाहू ऽअभ्युपाऽवहर'तीन्द्रस्य वां वीर्य्य-
कृतो बाहू ऽअभ्युपाऽवहरामी'ति पशूनां वा ऽएष रसो
यत्पयस्या तत्पशूनामेवाऽस्यैतद्रसं बाहू ऽअभ्युपाऽव-
हरति तद्यन्मैत्रावरुणी भवति मित्रावरुणा ऽउ हि बाहू
तस्मान्मैत्रावरुणी भवति ॥ २७ ॥ (C)

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥

कण्डिकासंख्या ११९ ॥



* का॰ श्रौ॰ सू॰ १५. ६. ३१ ।

(१) शु॰ सं॰ अ॰ १० क॰ २५ ।

† का॰ श्रौ॰ सू॰ १५. ६. ३१,३२ ।

(२) शु॰ सं॰ अ॰ १० क॰ २५ । (३) शु॰ सं॰ अ॰ १० क॰ २५ ।

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का॰ श॰ ७. ३. ३; काठ॰ १५. ५. ८, मै॰ सं॰ ११. ६. ११,१२; तै॰ सं॰ १. ८. १२,१३; तै॰ ब्रा॰ १. ७. ६ ।

[ पयस्याप्रचारः ]

मैत्रावरुण्या * पयस्यया प्रचरति । तस्या ऽअनिष्ट-ऽएव स्विष्टकृद् भवत्यथाऽस्मा ऽआसन्दीमाहरन्त्युपरिसद्यं वा ऽएष जयति यो जयत्यन्तरिक्षसद्यं तदेनमुपर्य्यासीन-मधस्तादिमाः प्रजा ऽउपाऽऽसते तस्मादस्मा ऽआसन्दी-माहरन्ति सैषा खादिरी वितृण्णा भवति येयं † वर्द्ध्रव्यूता भरतानाम् ॥ १ ॥ तामग्रेण । मैत्रावरुणस्य धिष्ण्यं ‡ निद-धाति 'स्योनाऽसि सुषदाऽसी'ति शिवामेवैतच्छग्मां करोति ॥ २ ॥ अथाऽधीवासमास्तृणाति । 'क्षत्रस्य योनिरसी'ति तथैव क्षत्रस्य योनिस्तामेवैतत्करोति ॥ ३ ॥ अथैनमासा-दयति । 'स्योनामासीद सुषदामासीदे'ति शिवाꣳ शग्मा-मासीदेत्येवैतदाह 'क्षत्रस्य योनिमासीदे'ति तथैव क्षत्रस्य योनिस्तस्यामेवैनमेतद्दधाति ॥ ४ ॥ अथाऽन्तराꣳसेऽभि-मृश्य ‡‡ जपति । 'निषसाद धृतव्रत' ऽइति धृतव्रतो वै राजा न वा ऽएष सर्वस्मा ऽइव वदनाय न सर्वस्मा-ऽइव कर्मणे यदेव साधु वदेद्यत्साधु कुर्य्यात्तस्मै वा ऽएष च श्रोत्रियश्चैतौ ह वै द्वौ मनुष्येषु धृतव्रतौ तस्मादाह निष-साद धृतव्रत ऽइति 'वरुणः पस्त्यास्वे'ति विशो वै पस्त्या

---

* "उत्तरवेदिं हृत्वा पयस्यया प्रचरति प्राक् स्विष्टकृत" (का० श्रौ० सू० १५ ६ ३५)।

† चर्मं वर्धरज्जुः, नाभिर्व्यूता मध्यदेशश्च ।

‡ का० श्रौ० सू० १५ ७ १ ३।

(१) शु० य० अ० १० क० २६। (२) शु० य० अ० १३. १० क० २६। (३) शु० य० अ० १० क० २६। (४) शु० य० अ० १० क० २६।

‡‡ का० श्रौ० सू० १५ ७ ४।

(५) शु० य० अ० १० क० २७, काण्व० स० ७ ३ ४। (६) शु० य० अ० १० क० २७, काण्व० स० ७ ३ ४।

विश्वेत्येवैतदाह 'साम्राज्याय सुक्रतुरि'ति राज्यायेत्ये-
वैतदाह यदाह साम्राज्याय सुक्रतुरिति ॥ ५ ॥ अथाऽस्मै *
पञ्चाऽक्षान्पाणावावपति । अभिभूरस्येतास्ते पञ्च दिशः
कल्पन्तामि'त्येष वा ऽअयानभिभूर्यत्कलिरेष हि सर्वानया-
नभिभवति तस्मादाहाऽभिभूरसीत्येतास्ते पञ्च दिशः
कल्पन्तामिति पञ्च वै दिशस्तदस्मै सर्वा ऽएव दिशः
कल्पयति ॥ ६ ॥ अथैनं पृष्ठतस्तूष्णीमेव दण्डैर्घ्नन्ति ।
तं दण्डैर्घ्नन्तो दण्डवधमतिनयन्ति तस्माद्राजा दण्ड्यो
यदेनं दण्डवधमतिनयन्ति ॥ ७ ॥ अथ † वरं वृणीते ।
यद्ध ह वै कश्च सुपवाणो वरं वृणीते सोऽस्मै सर्वः
समृध्यते तस्माद्वरं वृणीते ॥ ८ ॥ स 'ब्रह्मन्नि'त्येव प्रथ-
ममामन्त्रयते । ब्रह्म प्रथममभिव्याहराणि ब्रह्मप्रसूतां
वाचं वदानीति तस्माद् ब्रह्मन्नित्येव प्रथममामन्त्रयते 'त्वं
ब्रह्माऽसी'तीतरः प्रत्याह 'सविताऽसि सत्यप्रसव' ऽइति
वीर्य्यमेवाऽस्मिन्नेतद्दधाति सवितारमेव सत्यप्रसवं करोति
॥ ९ ॥ ब्रह्मन्नित्येव द्वितीयमामन्त्रयते । त्वं ब्रह्माऽसीती-
तरः प्रत्याह 'वरुणोऽसि सत्यौजा' ऽइति वीर्य्यमेवाऽस्मि-
न्नेतद्दधाति वरुणमेव सत्यौजसं करोति ॥ १० ॥ ब्रह्मन्नि-

---

( १ ) शु० सं० अ० १० क० २७, कपि० सं० ५, ३ ४ ।

* का० श्रौ० सू० १५. ६, ५ ।

( २ ) शु० सं० अ० १० क० २८ ।

† का० श्रौ० सू० १५. ७, ७,८ ।

( ३ ) शु० सं० अ० १० क० २८ । ( ४ ) शु० सं० अ० १० क० २८ । ( ५ ) शु० सं० अ० १० क० २८ ।

त्येव तृतीयमामन्त्रयते। त्वं ब्रह्माऽसीतीतरः प्रत्या(१)हेन्द्रोऽसि विशौजा' इति वीर्य्यमेवाऽस्मिन्नेतद्दधातीन्द्रमेव विशौजसं करोति ॥ ११ ॥ ब्रह्मन्नित्येव चतुर्थमामन्त्रयते। त्वं ब्रह्माऽसीतीतरः प्रत्याह (२)'रुद्रोऽसि सुशेव' इति तद्वीर्य्याण्येवाऽस्मिन्नेतत्पूर्वाणि दधात्यथैनमेतच्छमयत्येव तस्मादेष सर्वस्येशानो मृडयति यदेनः शमयति ॥ १२ ॥ ब्रह्मन्नित्येव पञ्चममामन्त्रयते। त्वं ब्रह्माऽसीतीतरोऽनिरुक्तं प्रत्याह परिमितं वै निरुक्तं तत्परिमितमेवाऽस्मिन्नेतत्पूर्वं वीर्य्यं दधात्यथाऽत्राऽनिरुक्तं प्रत्याहाऽपरिमितं वा अनिरुक्तं तदपरिमितमेवाऽस्मिन्नेतत्सर्वं वीर्य्यं दधाति तस्मादत्राऽनिरुक्तं प्रत्याह ॥१३॥ अथ * सुमङ्गलनामानं ह्वयति। (३)'बहुकार श्रेयस्कर भूयस्करे'ति य एवन्नामा भवति कल्याणमेवैतन्मानुष्यै वाचो वदति ॥ १४ ॥ अथाऽस्मै ब्राह्मण † स्फ्यं प्रयच्छति। अध्वर्य्युर्वा यो वाऽस्य पुरोहितो भवती(४)'न्द्रस्य वज्रोऽसि तेन मे रध्ये'ति वज्रो वै स्फ्यः स एतेन वज्रेण ब्राह्मणो राजानमात्मनोऽबलीयांसं कुरुते यो वै राजा ब्राह्मणादबलीयानमित्रेभ्यो वै स बलीयान्भवति तदमित्रेभ्य एवैनमेतद् बलीयांसं करोति ॥ १५॥ तः राजा ‡ राजभ्रात्रे प्रयच्छति। 'इन्द्रस्य वज्रोऽसि

(१) शु० स० अ० १० क० २८। (२) शु० स० अ० १० क० २८।
* का० श्रौ० सू० १५ ७ १०।
(३) शु० स० अ० १० क० २८।
† का० श्रौ० सू० १५ ७ ११।
(४) शु० स० अ० १० क० २८।
‡ का० श्रौ० सू० १५ ७ ११।

तेन मे रध्येति तेन राजा राजभ्रातरमात्मनोऽवलीयार्थंसं कुरुते ॥ १६ ॥ तं राजभ्राता सूताय वा स्थपतये वा प्रयच्छति । 'इन्द्रस्य वज्रोऽसि तेन मे रध्येति' तेन राजभ्राता सूतं वा स्थपतिं वाऽऽत्मनोऽवलीयार्थंसं कुरुते ॥ १८ ॥ तं सूतो वा स्थपतिर्वा ग्रामण्ये प्रयच्छति । 'इन्द्रस्य वज्रोऽसि तेन मे रध्येति' तेन सूतो वा स्थपतिर्वा ग्रामण्यमात्मनोऽवलीयार्थंसं कुरुते ॥ १८ ॥ तं ग्रामणीः सजाताय प्रयच्छति । 'इन्द्रस्य वज्रोऽसि तेन मे रध्येति' तेन ग्रामणीः सजातमात्मनोऽवलीयार्थंसं कुरुते तद्यदेवं सम्प्रयच्छन्ते नेत्पापवस्यसमसद्यथापूर्वम-सदिति तस्मादेवं सम्प्रयच्छन्ते ॥ १९ ॥ अथ * सजातश्च प्रतिप्रस्थाता च । एतेन स्फ्येन पूर्वाग्नौ शुक्रस्य पुरोरुचाऽधिदेवनं कुरुतोऽत्ता वै शुक्रोऽत्तारमेवैतत्कुरुतः ॥ २० ॥ अथ मन्थिनः पुरोरुचा विमितं विमिनुतः । आद्यो वै मन्थी तदत्तारमेवैतत्कृत्वाऽथाऽस्मा ऽएतदाद्यं जनयतस्तस्मान्मन्थिनः पुरोरुचा विमितं विमिनुतः ॥२१॥ अथाऽक्षान्जुहोति । † चतुर्गृहीतमाज्यं गृहीत्वाऽधिदेवने हिरण्यं निधाय जुहोत्यग्निः पृथुर्धर्म्मणस्पतिर्जुषाणो ऽअग्निः पृथुर्धर्म्मणस्पतिराज्यस्य वेतु स्वाहेति ॥ २२ ॥ अथाऽक्षान्निवपति । 'स्वाहाकृताः सूर्यस्य रश्मिभिर्यतध्वं सजातानां मध्यमेष्ठ्यायेत्येष वा ऽअग्निः पृथुर्यदधिदेवनं

* का॰ श्रौ॰ सू॰ १५. ७. १३ ।

† का॰ श्रौ॰ सू॰ १५. ७. २५, २६ ।

( १ ) शु॰ यं॰ अ॰ १० क॰ २८ । ( २ ) शु॰ यं॰ अ॰ १० क॰ २८ ।

तस्यैतेऽङ्गारा यदक्षास्तमेवैतेन प्रीणाति तस्य ह वा ऽएषाऽनुमता गृहेषु हन्यते यो वा राजसूयेन यजते यो वैतदेवं वेदैतेष्वक्षेष्वाह गां * दीव्यद्ध्वमिति पूर्वाग्निवाहौ † दक्षिणा ॥ २३ ॥ अथाहाऽग्नये स्विष्टकृतेऽनुब्रूहीति । तद्यदन्तरेणाऽऽहुतीऽ ऽएतत्कर्म्म क्रियत ऽएष वै प्रजापतिर्य ऽएष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाता ऽएतम्वेवाऽप्येतर्ह्यनु प्रजायन्ते तदेनं मध्यत ऽएवैतस्य प्रजापतेर्दधाति मध्यतः सुवति तस्मादन्तरेणाऽऽहुती ऽएतत्कर्म्म क्रियतऽआश्राव्याऽऽहाऽग्निꣳ स्विष्टकृतं यजेति वषट्कृते जुहोति ॥ २४ ॥ अथेडामादधाति । उपहूतायामिडायामपऽउपस्पृश्य माहेन्द्रं ग्रहं गृह्णाति माहेन्द्रं ग्रहं गृहीत्वा स्तोत्रमुपाकरोति तꣳ स्तोत्राय प्रमीवति स ऽउपाऽवरोहति सोऽन्ते स्तोत्रस्य भवत्यन्ते शस्त्रस्य ॥ २५ ॥ (D)

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ संसृपाहविः, दशपेयः, उपसद्यागश्च ]

वरुणाद्ध वा ऽअभिषिषिचानाद्भर्गोऽपचक्राम । वीर्यं वै भर्ग ऽएष विष्णुर्यज्ञः सोऽस्मादुपचक्राम शश्वद्ध ऽएषोऽपाꣳ रसः सम्भृतो भवति येनैनमेतदभिषिञ्चति सोऽस्य

* का० श्रौ० सू० १५ ७. १७।

† 'पूर्वाग्निवाहो इति 'क' पुस्तके दृश्यते।

(D) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ७ ३ ४ काठ० १५ ८ मै० स० ११ ६ १२, तै० स० १ ८ १५।

भर्गं निर्जघान ॥ १ ॥ * तमेताभिर्देवताभिरनु समसर्पत् । '(१)सवित्रा प्रसवित्रा सरस्वत्या वाचा त्वष्ट्रा रूपैः पूष्णा पशुभिरिन्द्रेणाऽस्मे बृहस्पतिना ब्रह्मणा वरुणेनौजसाऽग्निना तेजसा सोमेन राज्ञा विष्णुनै'व '(२)दशम्या देवतया'ऽन्वविन्दत् ॥ २॥ तद्यदेनमेताभिर्देवताभिरनु समसर्पत् । तस्मात्संसृपो नामाऽथ यद्दशमेऽहन्प्रसुतो भवति तस्माद्दशपेयोऽथो यद्दश-दशैकैकं चमसमनुप्रसृप्ता भवन्ति तस्माद्वेव दशपेयः ॥ ३ ॥ तदाहुः । दश † पितामहान्त्सोमपान्त्संख्याय प्रसर्पेत्तथो हाऽस्य सोमपीथमश्नुते दशपेयो हीति तद्वै ज्या द्वौ त्रीनित्येव पितामहान्त्सोमपान्विन्दन्ति तस्मादेता ऽएव देवताः संख्याय प्रसर्पेत् ॥ ४ ॥ एताभिर्ह देवताभिर्वरुण ऽएतस्य सोमपीथमाश्नुत । तथोऽएवैष ऽएताभिरेव देवताभिरेतस्य सोमपीथमश्नुते तस्मादेता ऽएव देवताः संख्याय प्रसर्पेदथ यद्वैवैपोदवसानीयेष्टिः सन्तिष्ठत ऽएतस्याऽभिषेचनीयस्य ॥ ५ ॥ अथैतानि हवींष्यपि ‡ निर्वपति । सावित्रं ‡‡ द्वादशकपालं वाऽष्टाकपालं

---

* का० श्रौ० सू० १५. ८, १७ ।

(१) शु० सं० अ० १० क० ३० । (२) शु० सं० अ० १० क० १० ।

† "पितामहदशगणं सोमपानं सङ्ख्याय सर्पणम्" ( का० श्रौ० सू० १५. ८. १६ ) ।

‡ अभिषेचनीयशालात आरभ्य दशपेययजनम्प्रति गच्छेत् । प्रतीष्टि-न्मोर्ग च भवति । तत्र प्रथमं हविरभिषेचनीयशालाया उत्तरत समीप एवाऽग्नीन् स्थापयित्वा कर्तव्यम् । पुनस्तस्मात् स्थानात् उत्तरदेशेऽग्नीन् स्थापयित्वा द्वितीयम्, तस्योत्तरतस्तथैव तृतीयप्रभृति-दशमहवि-पर्यन्तं कुर्यादुत्थाप्योत्थाप्य । अनेन प्रकारेण कुर्वन् दशपेयशालामध्ये दशमं हविः कुर्यात् । तथा च "देवयजनान्तरमेकैकेनोत्सर्पति, शालायामन्त्यम्" ( का० श्रौ० सू० १५ ८. २,३ ) ।

‡‡ "सावित्र सारस्वत-त्वाष्ट्र-पौष्णैन्द्र-बार्हस्पत्य-वारुणाऽऽग्नेय-सौम्य-वैष्णवानि यथोक्तम्" ( का० श्रौ० सू० १५. ८. ४ ) ।

वा पुरोडाशꣳ सविता वै देवानां प्रसविता सवितृप्प्रसूत-
ऽएव तद्वरुणोऽनुसमसर्प्पत्तथो ऽएवैष ऽएतत्सवितृप्प्रसूत-
ऽएवाऽनु सꣳसर्प्पति तत्रैकं पुण्डरीकं प्रयच्छति ॥ ६ ॥
अथ सारस्वतं चरुं निर्वपति । वाग्वै सरस्वती वाचैव तद्व-
रुणोऽनुसम सर्प्पत्तथो ऽएवैष ऽएतद्वाचैवाऽनु सꣳसर्प्पति
तत्रैकं पुण्डरीकं प्रयच्छसि ॥ ७ ॥ अथ त्वाष्ट्रं दशकपालं
पुरोडाशं निर्वपति । त्वष्टा वै रूपाणामीष्टे त्वष्ट्रैव तद्रूपै
र्वरुणोऽनु समसर्प्पत्तथो ऽएवैष ऽएतत्त्वष्ट्रैव रूपैरनुसꣳ-
सर्प्पति तत्रैकं पुण्डरीकं प्रयच्छति ॥ ८ ॥ अथ पौष्णं
चरुं निर्वपति । पशवो वै पूषा पशुभिरेव तद्वरुणोऽनुसम-
सर्प्पत्तथो ऽएवैष ऽएतत्पशुभिरेवाऽनु सꣳसर्प्पति तत्रैकं
पुण्डरीकं प्रयच्छति ॥ ९ ॥ अथैन्द्रमेकादशकपालं पुरोडाशं
निर्वपति । इन्द्रियं वै वीर्य्यमिन्द्र ऽइन्द्रियेणैव तद्वीर्य्येण
वरुणोऽनु समसर्प्पत्तथो एवैष ऽएतदिन्द्रियेणैव वीर्य्येणाऽनु
सꣳसर्प्पति तत्रैकं पुण्डरीकं प्रयच्छति ॥१०॥ अथ बार्हस्पत्यं
चरुं निर्वपति । ब्रह्म वै बृहस्पतिर्ब्रह्मणैव तद्वरुणोऽनु सम-
र्प्पत्तथो ऽएवैष ऽएतद् ब्रह्मणैवाऽनु सꣳसर्प्पति तत्रैकं पुण्ड-
रीकं प्रयच्छति ॥ ११ ॥ अथ वारुणं यवमयं चरुं निर्वपति ।
स येनैवौजसेमाः प्प्रजा वरुणोऽगृह्णात्तेनैव तदोजसा वरुणो-
ऽनु समसर्प्पत्तेनो ऽएवैष तदोजसाऽनु सꣳसर्प्पति तत्रैकं
पुण्डरीकं प्रयच्छति ॥ १२ ॥ उपसदो दशम्म्यो देवताः ।
तत्र पञ्च * पुण्डरीकाण्ण्युप प्प्रयच्छति तां द्वादशपुण्डरीका-

* का० श्रौ० सू० १५ ८ ५ ।

ᳯस्रजं * प्रतिमुञ्चते सा दीक्षा तया दीक्षया दीक्षते ॥१३॥
अथ यद् द्वादश भवन्ति । द्वादश वै मासाः संवत्सरस्य
सर्वं वै संवत्सरᳯ सर्वेणैवैनमेतद्दीक्षयति यानि पुण्डरी-
काणि तानि दिवो रूपं तानि नक्षत्राणाᳯ रूपं य्ये बुधका-
स्तेऽन्तरिक्षस्य रूपं य्यानि विसानि तान्यस्यै तदेनमेषु
लोकेष्वधि दीक्षयति ॥ १४ ॥ अथ राजानं क्रीत्वा ।
द्वेधोपनह्य परिवहन्ति ततोऽर्द्धमासन्द्यामासाद्य प्प्रचरत्यथ
य ऽएषोऽर्द्धो ब्रह्मणो गृहे निहितो भवति तमासन्द्यामा-
साद्याऽऽतिथ्येन प्प्रचरति यदातिथ्येन प्प्रचरत्यथोपसद्भिᳯ
प्प्रचरति यदोपसद्भिᳯ प्प्रचरति ॥ १५ ॥ अथैतानि हवी-
ᳯषि निर्वपति । आग्नेयमष्टाकपालं पुरोडाशᳯ सौम्म्यं चरुं
वैष्णवं त्रिकपालं वा पुरोडाशं चरुं वा तेन यथेष्ट्यैवं
य्यजते ॥ १६ ॥ तद्‌ तथा न कुर्य्यात् । ह्वलति वा ऽएष
यो यज्ञपथादेत्येति वा ऽएष यज्ञपथाद्य ऽउपसत्पथादेति
तस्म्मादुपसत्पथादेव नेयात् ॥ १७ ॥ स यदग्निं य्यजति ।
अग्निनैवैतत्तेजसाऽनु सᳯसर्प्पत्यथ यत्सोमं य्यजति सोमे-
नैवैतद्ब्राह्मणाऽनु सᳯसर्प्पत्यथ यद्विष्णुं य्यजति यज्ञो वै विष्णु-
स्तद्यज्ञं प्रत्यक्षमाप्नोति तं प्रत्यक्षमाप्त्वाऽऽत्मन्न्कुरुते
॥ १८ ॥ स ऽएष सप्तदशोऽग्निष्टोमो भवति । सप्तदशो
वै प्प्रजापतिᳯ प्प्रजापतिर्य्यज्ञस्तद्यज्ञं प्रत्यक्षमाप्नोति तं
प्रत्यक्षमाप्त्वाऽऽत्मन्न्कुरुते ॥१९॥ तस्य द्वादश प्प्रथमगर्भाᳯ
पष्ठौह्यो दक्षिणा । द्वादश वै मासाᳯ संवत्सरस्य संवत्सरᳯ

* का० श्रौ० सू० १५. ८. ८ ।

स्स्तोमान्यच्छन्दाꣳसि तस्मादेवैनमेतेन निष्क्रीणाति सꣳस्रवं बार्हस्पत्ये चरावनयति तद्यत्सꣳस्रवान्बार्हस्पत्ये चरावनयति सर्वत एवास्मिन्नेतदन्नाद्यं दधाति तस्माद्दु दिशो दिश एव राज्ञेऽन्नाद्यमभिह्रियते ॥ ६ ॥ अथ यद्बार्हस्पत्येन चरुणा प्रचरति । यद्देवैनमूर्ध्वां दिशꣳ समारोहयति यद्वृतून्यत्स्तोमान्यच्छन्दाꣳसि तस्मादेवैनमेतेन निष्क्रीणाति ॥ ७ ॥ स य एष आग्नेयोऽष्टाकपालः पुरोडाशो भवति । तस्य * हिरण्यं दक्षिणाऽऽग्नेयो वा एष यज्ञो भवत्यग्ने रेतो हिरण्यं तस्माद्धिरण्यं दक्षिणा तदग्नीधे ददात्यग्निर्वा एष निदानेन यदाग्नीध्रस्तस्मात्तदग्नीधे ददाति ॥ ८ ॥ अथ य एष ऐन्द्र एकादशकपालः पुरोडाशो भवति । † तस्यर्षभो दक्षिणा स हैन्द्रो यदृषभो यद्यु सौम्यश्चरुर्भवति तस्य बभ्रुर्गौर्दक्षिणा स हि सौम्यो यद्बभ्रुस्तं ब्रह्मणे ददाति ब्रह्मा हि यज्ञं दक्षिणतोऽभिगोपायति तस्मात्तं ब्रह्मणे ददाति ॥ ९ ॥ अथ य एष वैश्वदेवश्चरुर्भवति । तस्य पृषन्गौर्दक्षिणा भूमा वा एतद्रूपाणां यत्पृषतो गोर्विशो वै विश्वे देवा भूमा वै विट् तस्मात्पृषन्गौर्दक्षिणा तꣳ होत्रे ददाति होता हि भूमा तस्मात्तꣳ होत्रे ददाति ॥ १० ॥ अथ यैषा मैत्रावरुणी पयस्या भवति । तस्यै वशा दक्षिणा सा हि मैत्रावरुणी यद्वशा यदि वशां न विन्देदपि यैव का

* का० श्रौ० सू० १५ १ ५ ।
† का० श्रौ० सू० १५ १. ११ ।

चाऽप्रवीता स्यात्सर्वा ह्येव वशाऽप्रवीता तामध्वर्युभ्यां ददाति प्राणोदानौ वा ऽअध्वर्यू प्राणोदानौ मित्रावरुणौ तस्मात्तामध्वर्युभ्यां ददाति ॥ ११ ॥ अथ य ऽएष बार्हस्पत्यश्चरुर्भवति । तस्य शितिपृष्ठो गौर्दक्षिणैषा वाऽऊर्द्ध्वा बृहस्पतेर्दिक्तदेष ऽउपरिष्टादर्य्यम्णः पन्थास्तस्माच्छितिपृष्ठो बार्हस्पत्यस्य दक्षिणा तं ब्रह्मणे ददाति बृहस्पतिर्वै देवानां ब्रह्मैष वा ऽएतस्य ब्रह्मा भवति तस्मात्तं ब्रह्मणे ददाति स हैतेनाऽपि विष्टाव्राज्यन्नाद्यकामो * यजेत तदस्मिन्त्सर्वतोऽन्नाद्यं दधाति स हाऽन्नाद ऽएव भवति ॥ १२ ॥(A)

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ प्रयुग्घविः ]

स वै † प्रयुजाᳪं हविर्भिर्यजते । तद्यत्प्रयुजाᳪं हविर्भिर्यजत ऽऋतून्वा ऽएतत्सुपुवाणो युङ्क्ते त ऽएनमृतवो युक्ता वहन्त्यृतून्वा प्रयुक्ताननुचरति तस्मात्प्रयुजाᳪं हविर्भिर्यजते ॥ १ ॥ तानि वै द्वादश भवन्ति । द्वादश वै मासाः संवत्सरस्य तस्माद् द्वादश भवन्ति मासि-मासि यजेतेत्याहुः को वेद मनुष्यस्य तस्मान्न मासि-

---

* का० श्रौ० सू० १५ ९ ६ ।

(A) एतद्ब्राह्मणस्था विषया अत्र ( का० श्रौ० ७ ४. २ ) द्रष्टव्या ।

† वैशाख्या पञ्चविलानन्तर तस्मिन्नेवाऽहनि प्रथम हवि , ज्येष्ठ्या द्वितीय हवि , आषाढ्या तृतीयमित्येव मासान्तरता । द्वादशोत्तराणि प्रयुग्घवींषि मासान्तराणि" ( का० श्रौ० सू० १५ ९. ७ ) इति ।

तैताᳬ श्रियं जिह्मां विनाशयेद्व्युदुह्यात्तस्मात्केशान्न वपते ॥ १ ॥ संवत्सरं न वपते । संवत्सरसम्मिता वै व्रतचर्य्या तस्मात्संवत्सरं न वपते स ऽएष व्रतविसर्ज्जनीयोपयोगो नाम स्तोमो भवति * केशवपनीयः ॥ २ ॥ तस्यैकविᳬशं प्रातःसवनᳬ । सप्तदशं माध्यन्दिनᳬसवनं पञ्चदशं तृतीयसवनᳬ सहोक्थैः सह षोडशिना सह रात्र्या ॥ ३ ॥ त्रिवृद्राथन्तरः सन्धिर्भवति । एष ऽएवैकविᳬशो य ऽएष तपति स ऽएतस्मादेकविᳬशादपयुङ्क्ते स सप्तदशमभि प्प्रत्यवैति सप्तदशात्पञ्चदशं पञ्चदशादस्यामेव त्रिवृति प्प्रतिष्ठायां प्रतितिष्ठति ॥ ४ ॥ तस्य रथन्तरं पृष्ठं भवति । इयं वै रथन्तरमस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठत्यतिरात्रो भवति प्प्रतिष्ठा वा ऽअतिरात्रस्तस्मादतिरात्रो भवति ॥ ५ ॥ स वै न्न्येव वर्त्तयते । केशान्न वपते वीर्य्यं वा ऽएतदपाᳬ रसः सम्भृतो भवति येनैनमेतदभिषिञ्चति तस्याऽभिषिक्तस्य केशान्प्रथमाम्प्राप्नोति स यत्केशान्वपेतैताᳬ श्रियं जिह्मां विनाशयेद्व्युदुह्यादथ यन्निवर्त्तयते तदात्मन्न्येवैताᳬ श्रियं नियुनक्ति तस्मान्न्येव वर्त्तयते केशान्न वपते तस्यैषैव व्रतचर्य्या भवति यावज्जीवं नाऽस्यां प्रतितिष्ठति ॥ ६ ॥ आसन्द्या ऽउपनह्य ऽउपमुञ्चते । उपानद्भ्यामधि यदस्य यानं भवति रथो वा किञ्चिद्वा सर्वं वा ऽएष ऽइदमुपर्य्युपरि भवत्यर्वागेवाऽस्मादिदᳬ सर्वं भवति यो राज-

* का० श्रौ० सू० १५ ९. २११

सूयेन यजते तस्मादुस्यैषवं व्रतचर्य्या भवति यावज्जीवं नाऽस्यां प्रतितिष्ठति ॥ ७ ॥ (C)

पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ अथ चरकसौत्रामणीप्रयोगः ]

( तत्र त्रिशीर्षवधः, सुरानिर्माणम्, पितृणामुत्थानादिकञ्च )

श्येत ऽआश्विनो भवति । * श्येताविव ह्यश्विनाव-विर्म्मल्हा † सारस्वती भवत्यृषभमिन्द्राय सुत्राम्ण ऽआल-भते दुर्वेदा ऽएवह्र समृद्धाः पशवो यथेवह्र समृद्धान्न विन्देदुप्प्यजानेचाऽऽलभेरँस्ते हि सुश्रपतरा भवन्ति स यद्यजानालभेरँल्लोहित ‡ ऽआश्विनो भवति तद्यदेतया यजते ॥ १ ॥ त्वष्टुर्ह वै पुत्रः । त्रिशीर्षा षडक्ष ऽआस तस्य त्रीण्येव मुखान्यासुस्तद्यदेवह्र रूप ऽआस तस्मा-द्विश्वरूपो नाम ॥ २ ॥ तस्य सोमपानमेवैकं मुखमास । सुरापाणमेकमन्यस्म्मा ऽअशनायैकं तमिन्द्रो दिद्वेष तस्य तानि शीर्षाणि प्प्रचिच्छेद ॥ ३ ॥ स यत्सोमपानमास । ततः कपिञ्जलः समभवत्तस्मात्स बभ्रुक ऽइव बभ्रुरिव हि सोमो राजा ॥ ४ ॥ अथ यत्सुरापाणमास । ततः कलविङ्कः समभवत्तस्मात्सोऽभिमाद्यत्क ऽइव वदत्यभि-

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा — श० ब्रा० ७. ५. ३, काठ० २५ ८, ९; मै० सं० ११. ६. १२, तै० सं० १. ८ १६ ।

* "उत्तरे शुक्ले सौत्रामण्यौ" का० श्रौ० सू० १५. ९. २२; "सन्तिष्ठते राजसूयः तेनेष्ट्वा सौत्रामण्या यजेत" आप० श्रौ० सू० १८. २२. २०, २१ ।

† का० श्रौ० सू० १५. १०. ४-७ ।

‡ का० श्रौ० सू० १५. १०. ५ ।

माद्यन्निव हि सुरां पीत्वा वदति ॥ ५ ॥ अथ यदस्यस्मा- ऽअशनायाऽऽस । ततस्तित्तिरिः समभवत्तस्मात्स विश्व- रूपतम ऽइव सन्त्येव घृतस्तोका ऽइव त्वन्मधुस्तोका- ऽइव त्वत्पर्णेष्वाश्चुतिता ऽएवᳪ रूपमिव हि स तेनाऽश- नमावयत् ॥ ६ ॥ स त्वष्टा चुक्रोध । कुविन्मे पुत्रमवधी- दिति सोऽपेन्द्रमेव सोममाजह्रे स यथाऽयᳪ सोमᳪ प्रसुत ऽएवमपेन्द्र ऽएवाऽऽस ॥ ७ ॥ इन्द्रो ह वा ऽईक्षा- ञ्चक्रे । इदं वै मा सोमादन्तर्यन्तीति स यथा बलीयान- बलीयस ऽएवमनुपहूत ऽएव यो द्रोणकलशे शुक्र ऽआस तं भक्षयाञ्चकार स हैनं जिहिᳪस सोऽस्य विष्वङ्ङेव प्राणेभ्यो दुद्राव मुखाद्धैवाऽस्य न दुद्राव तस्मात्प्राय- श्चित्तिरास स यद्धाऽपि मुखादद्रोष्यन्न हैव प्रायश्चित्तिर- भविष्यत् ॥ ८ ॥ चत्वारो वै वर्णाः । ब्राह्मणो राजन्यो वैश्यः शूद्रो न हैतेषामेकश्चन भवति यः सोमं वमति स यद्धैतेषामेकश्चित्स्यात्स्याद्धैव प्रायश्चित्तिः ॥ ९ ॥ स यन्नस्तोऽद्रवत् । ततः सिᳪहः समभवदथ यत्कर्णा- भ्यामद्रवत्ततो वृकः समभवदथ यदवाचः प्राणाद- द्रवत्ततः शार्दूलज्येष्ठाः श्वापदाः समभवन्नथ यदुत्तरा- त्प्राणाऽदद्रवत्सा परिस्रुदथ त्रिर्निरष्ठीवत्ततः कुवलं कर्कन्धु बदरमिति समभवत्स सर्वेणैव व्यार्ध्यत सर्वᳪ हि सोमः ॥ १० ॥ स सोमातिपूतो मद्गुरिव चचार । तमेतयाऽऽ- श्विनानभिषज्यतां तᳪ सर्वेणैव समर्द्धयताᳪ सर्वᳪ हि सोमः स वसीयानेवेष्ट्वाऽभवत् ॥ ११ ॥ ते देवा ऽअब्रुवन् ।

सुत्रा तं व्रतेनमत्राऽऽसतामिति तस्मात्सौत्रामणी नाम ॥ १२ ॥ स हैतयाऽपि सोमातिपूतं भिषज्येत् । सर्वेण वा ऽएष व्यृध्यते यः सोमोऽतिपवते सर्वꣳ हि सोमस्ततः सर्वेणैव समर्द्धयति सर्वꣳ हि सोमः स वसीयानेवेष्ट्वा भवति तस्मादु हैतयाऽपि सोमातिपूतं भिषज्येत् ॥ १३ ॥ तद्यदेतया राजसूययाजी यजते । सर्वाश्वा ऽएष यज्ञक्रतू-नवरुन्धे सर्वा ऽइष्टीरपि दर्विहोमान्यो राजसूयेन यजते देवसृष्टो वा ऽएषेष्टिर्यत्सौत्रामण्यनया मेऽपीष्टमसदन-याऽपि सूया ऽइति तस्माद्वा ऽएतया राजसूययाजी यजते ॥ १४ ॥ अथ यदाश्विनो भवति । अश्विनौ वा ऽएनम-भिषज्यतां तथो ऽएवैनमेष ऽएतदश्विभ्यामेव भिषज्यति तस्मादाश्विनो भवति ॥ १५ ॥ अथ यत्सारस्वतो भवति । वाग्वै सरस्वती वाचा वा ऽएनमश्विनावभिषज्यतां तथोऽ-एवैनमेष ऽएतद्वाचैव भिषज्यति तस्मात्सारस्वतो भवति ॥१६॥ अथ यदैन्द्रो भवति । इन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तयैवैनमेतद्भिषज्यति तस्मादैन्द्रो भवति ॥१७॥ एतेषु पशुषु । * सिꣳहलोमानि वृकलोमानि शार्दूल-लोमानीत्यावपत्येतद्वै ततः समभवद्यदेनꣳ सोमोऽत्य-पवत तेनैवैनमेतत्समर्द्धयति कृत्स्नं करोति तस्मादेतान्या-वपति ॥ १८ ॥ तदु तथा न कुर्यात् । उल्कया ह स नखिन्या पशूननु पुवति य ऽएतानि पशुष्वावपति तस्मादु परिस्रुत्येवाऽऽवपेत्तथा होल्कया नखिन्या पशून्नाऽनु पुवति

* का० श्रौ० सू० १५. ९. २५ ।

तथो ऽएवैनदः समर्द्धयति कृत्स्नं करोति तस्माद् परिस्रुत्येवाऽऽवपेत ॥ १९ ॥ अथ पूर्वेद्युः * परिस्रुतः सन्दधा'त्यश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्वे'ति सा यदा परिस्रुद्भवत्यथैनया प्रचरति ॥ २० ॥ द्वावग्नी † ऽउद्धरन्ति । उत्तरवेदावेवोत्तरमुद्धते दक्षिणं नेत्सोमाहुतीश्च सुराहुतीश्च सह जुहवामेति तस्माद् द्वावग्नी ऽउद्धरन्त्युत्तरवेदावेवोत्तरमुद्धते दक्षिणमथ यदा वपाभिः प्रचरत्यथैतया परिस्रुता प्रचरति ॥ २१ ॥ तां दर्भैः ‡ पावयति । पूतासदिति 'वायुः पूतः पवित्रेण प्रत्यङ् सोमो ऽअतिस्रुतः । इन्द्रस्य युज्यः सखे'ति तत्कुवलसक्तून्कर्कन्धुसक्तून्वदरसक्तूनित्यावपत्येतद्वै ततः समभवद्यत्त्रिर्निरष्ठीवत्तेनैवैनमेतत्समर्द्धयति कृत्स्नं करोति तस्मादेतानावपति ॥ २२ ॥ अथ ग्रहान्गृह्णाति । एकं वा त्रीन्वैकस्त्वेव ग्रहीतव्य ऽएका हि पुरोरुग्भवत्येकाऽनुवाक्यैका याज्या तस्मादेक ऽएव ग्रहीतव्यः ॥ २३ ॥ स ‡‡ गृह्णाति । 'कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय । इहेहैषां कृणुहि भोजनानि ये बर्हिषो नमऽउक्तिं यजन्ति । उपयामगृहीतोऽस्यश्विभ्यां त्वा सरस्वत्यै

---

* का० श्रौ० सू० १५ ९ २४।

(१) शु० स० अ० १० क० ३१।

† का० श्रौ० सू० १५ १० ७।

‡ का० श्रौ० सू० १५ १० ९।

(२) शु० स० अ० १० क० ३१।

‡‡ का० श्रौ० सू० १५ १० १०,११।

(३) शु० स० अ० १० क० ३२।

त्वेन्द्राय त्वा सुत्राम्ण' इति यद्यु त्रीन्गृह्णीयादेतयैव गृह्णीयादुपयामैस्तु तर्हि नाना गृह्णीयादुथाऽऽहाऽश्विभ्याꣳ सरस्वत्या इन्द्राय सुत्राम्णेऽनुब्रूहीति ॥ २४ ॥ सोऽन्वाह । 'युवꣳ सुराममश्विना नमुचावासुरे सचा। विपिपाना शुभस्पती इन्द्रं कर्मस्वावतमि'त्याश्राव्याऽऽहाऽश्विनौ सरस्वतीमिन्द्रꣳ सुत्रामाणं यजेति ॥ २५ ॥ स यजति । 'पुत्रमिव पितरावश्विनोभेन्द्रावथुः काव्यैर्दꣳसनाभिः । यत्सुरामं व्यपिबः शचीभिः सरस्वती त्वा मघवन्नभिष्णगि'ति द्विर्होता वषट्करोति द्विरध्वर्युर्जुहोत्याहरति भक्षं यद्यु त्रीन्गृह्णीयादेतस्यै वाऽनुहोममितरौ हूयेते ॥ २६ ॥ अथ कुम्भः । 'शतवितृण्णो वा भवति नववितृण्णो वा स यदि शतवितृण्णः शतायुर्वा अयं पुरुषः शततेजाः शतवीर्यस्तस्माच्छतवितृण्णो यद्यु नववितृण्णो नवेमे पुरुषे प्राणास्तस्मान्नववितृण्णः ॥ २७ ॥ तꣳ * शिक्योदुतम् । उपर्युपर्य्याहवनीयं धारयन्ति स या परिशिष्टा परिस्रुद्भवति तामासिञ्चति तां विक्षरन्तीमुपतिष्ठते पितॄणाꣳ सोमवतां तिसृभिर्ऋग्भिः पितॄणां बर्हिषदां तिसृभिर्ऋग्भिः पितॄणामग्निष्वात्तानां तिसृभिर्ऋग्भिस्तद्यदेवमुपतिष्ठते यत्र वै सोम इन्द्रमत्यपवत स यत्पितॄनगच्छन्नया वै पितरस्तेनैवैनमेतत्समर्द्धयति कृत्स्नं करोति तस्मादेवमुपतिष्ठते ॥ २८ ॥ अथैतानि † हवीꣳषि निर्व-

( १ ) शु० स० अ० १० क० ३३ । ( २ ) शु० स० अ० १० क० ३४ ।

* का० श्रौ० सू० १५. १०. १६ ।

† का० श्रौ० सू० १५ १० १७ ।

पति । सावित्रं द्वादशकपालं वाऽष्टाकपालं वा पुरोडाशं वारुणं यवमयं चरुमैन्द्रमेकादशकपालं पुरोडाशम् ॥ २९ ॥ स यत्सावित्रो भवति । सविता वै देवानां प्रसविता सवितृप्रसूत ऽएवैतद्भिषज्ज्यति तस्मात्सावित्रो भवति ॥ ३० ॥ अथ यद्वारुणो भवति । वरुणो वा ऽआर्प्पयिता तद्य ऽएवाऽऽर्प्पयिता तेनैवैतद्भिषज्ज्यति तस्माद्वारुणो भवति ॥ ३१ ॥ अथ यदैन्द्रो भवति । इन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तयैवैतद्भिषज्ज्यति तस्मादैन्द्रो भवति ॥ ३२ ॥ स यदि हैतयाऽपि सोमातिपूतं भिषज्ज्येत् । इष्ट्वा ऽअनुयाजा भवन्त्यव्व्यूढे स्रुचावथैतैर्हविर्भिः प्प्रचरति पश्चाद्धि सोमोऽतिपवते पश्चादेवैनमेतेन मेधेनाऽपि दधात्याश्विनमु तर्हि द्विकपालं पुरोडाशं निर्वपेदथ यदा वपाभिः प्प्रचरत्यथैतेनाऽश्विनेन द्विकपालेन पुरोडाशेन प्प्रचरति ॥ ३३ ॥ तदु तथा न कुर्य्यात् । ह्वलति वा ऽएष यो यज्ञपथादेत्येति वा ऽएष यज्ञपथाद्य ऽएवं करोति तस्माद्यत्रैवैतेषां पशूनां वपाभिः प्प्रचरन्ति तदेवैतैर्हविर्भिः प्प्रचरेयुर्न्नो तर्ह्याश्विनं द्विकपालं पुरोडाशं निर्वपेत् ॥ ३४ ॥ तस्य नपुꣳसको * गौर्द्दक्षिणा । न वा ऽएष स्त्री न पुमान्यन्नपुꣳसको गौर्य्यदह पुमाँस्तेन न स्त्री यदु स्त्री तेनो न पुमाँस्तस्मान्नपुꣳसको गौर्द्दक्षिणा ऽश्वा वा रथवाही सा हि न स्त्री न पुमान्यदश्वा रथवाही

* का॰ श्रौ॰ सू॰ १५. १०. १८ ।

यद्रुहरथं ब्रुहति तेन न स्त्री यद्रु स्त्री तेनो न पुमाँस्तस्मा-द्रश्वा रथवाही दक्षिणा ॥ ३५ ॥ (D)

पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ त्रैधातवीष्टिः ]

ऐन्द्रावैष्णवं * द्वादशकपालं पुरोडाशं निर्वपति । तद्य-देवतया † यजते व्वृत्रे ह वा ऽइदमग्रे सर्वमास यदृचो यद्यजूᳬष्यपि यत्सामानि तस्मा ऽइन्द्रो व्वज्रं प्राऽजिहीर्षीत् ॥ १ ॥ स ह व्विष्णुमुवाच । व्वृत्राय वै व्वज्रं प्रहरिष्याम्यनु मा तिष्ठस्वेति तथेति ह व्विष्णुरुवाचाऽनु त्वा स्थास्ये प्रहरेति तस्मा ऽइन्द्रो व्वज्रमुद्ययाम स ऽउद्यताद्वज्राद्वृत्रो विभयाञ्चकार ॥ २ ॥ स होवाच । अस्ति वा-ऽइदं व्वीर्यं तन्नु ते प्प्रयच्छानि मा नु मे प्प्रहार्षीरिति तस्मै यजूᳬष्यपि प्प्राऽयच्छत्तस्मै द्वितीयमुद्ययाम ॥३॥ स होवाच । अस्ति वा ऽइदं व्वीर्यं तन्नु ते प्प्रयच्छानि मा नु मे प्प्रहार्षीरिति तस्मा ऽऋचः प्राऽयच्छत्तस्मै तृतीयमुद्ययाम ॥४॥ स होवाच । अस्ति वा ऽइदं व्वीर्यं तन्नु ते प्प्रयच्छानि मा नु मे प्प्रहार्षीरिति तस्मै सामानि प्प्राऽयच्छत्तस्मादुप्येतर्ह्येवमेवैतैर्व्वेदैर्यज्ञं तन्वते यजुर्भिरेवाऽग्रेऽथर्ग्भिरथ सामभिरेवᳬ

(D) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—श० श० ७ ५ १ काठ० १५ ८, ९, मै० स० ११ ६ १२ तै० स० ८ १६, १७।

* "द्वादशकपाल पुरोडाशो भवति ते त्रयश्चतुष्कपाला" इत्यादि—( तै० स० २ ४ ११ १२ )।

† आप्यायिकेय ( तै० स० १, ४, १२ ) अनुवाकेऽपि श्रुत ।

ह्यस्मा ऽएतद्ग्राऽयच्छत् ॥५॥ तस्य यो योनिराशय ऽआस । तमनुपरामृश्य सँल्लुप्याऽच्छिनत्सैषेष्टिरभवत्तद्यदेतस्मिन्ना-शये त्रिधातुरिवैषा विद्याऽऽशेत तस्मात्त्रैधातवी नाम ॥६॥ अथ यदैन्द्रा*वैष्णवः हविर्भवति । इन्द्रो हि वज्रमुदय-च्छद्विष्णुरन्वतिष्ठत् ॥७॥ अथ यद् द्वादशकपालो भवति । द्वादश वै मासाः संवत्सरस्य संवत्सरसम्मितैषेष्टिस्तस्माद् द्वादशकपालो भवति ॥ ८ ॥ तमुभयेषां व्रीहियवाणां गृह्णाति । व्रीहिमयमेवाऽग्रे पिण्डमधिश्रयति तद्यजुषाꣳ रूपमथ यवमयं तदृचाꣳ रूपमथ व्रीहिमयं तत्साम्नाꣳ रूपं तदेतत्त्रय्यै विद्यायै रूपं क्रियते सैषा राजसूययाजिन-ऽउदवसानीयेष्टिर्भवति ॥ ९ ॥ सर्वान्वा ऽएष यज्ञक्रतू-नवरुन्धे । सर्वा ऽइष्टीरपि दर्विहोमान्यो राजसूयेन यजते तस्य यातयामेव यज्ञो भवति सोऽस्मात्पराङिव भवत्येता-वान्वै सर्वो यज्ञो यावानेष त्रयो वेदस्तस्यैतद्रूपं क्रियत ऽएष योनिराशयस्तदेतेन त्रयेण वेदेन पुनर्यज्ञमारभते तथाऽस्या-ऽयातयामा यज्ञो भवति तथो ऽअस्मान्न पराङ् भवति ॥ १० ॥ सर्वान्वा ऽएष यज्ञक्रतूनवरुन्धे । सर्वा ऽइष्टीरपि दर्विहोमान्यो राजसूयेन यजते देवसृष्टो वा ऽएषेष्टिर्यत्त्रै-धातव्यनया मेऽपीष्टमसदनयाऽपि सूया ऽइति तस्माद्वा-ऽएषा राजसूययाजिन ऽउदवसानीयेष्टिर्भवति ॥ ११ ॥ अथो यः सहस्रं वा भूयो वा दद्यात् । तस्य ह्यप्युदवसा-नीया स्याद्रिरिचान ऽइव वा ऽएष भवति यः सहस्रं वा

* का० श्रौ० सू० १५. ७. १०, ११ ।

भूयो वा दुदात्येतद्वै सहस्रं वाचः प्प्रजातं युदेषु त्रयो ब्वेदस्तत्सहस्रेण रिरिचानं पुनराप्प्याययति तुस्माद् ह तस्याऽप्प्युदवसानीया स्यात् ॥ १२ ॥ अथो ये दीर्घसत्र-मासीरन् । संवत्सरं व्वा भूयो वा तेषाᳬ ह्याऽप्प्युदवसानीया स्यात्सर्वं वै तेषामासं भवति सर्वं जितं स्ये दीर्घसत्रमासते संवत्सरं वा भूयो वा सर्वमेषा तुस्माद् ह तेषामप्प्युदव-सानीया स्यात् ॥ १३ ॥ अथो हैनयाऽप्प्यभिचरेत् । एतया वै भद्रसेनमाजातशत्रवमारुणिरभि चचार क्षिप्रं किलाऽऽ-स्तृणुतेति ह स्माऽऽह याज्ञवल्क्योऽपि ह व्वा ऽएनयेन्द्रो व्वृत्रस्याऽऽस्थानमच्छिनदुपि ह व्वा ऽएनयास्थानं छिनत्ति य ऽएनयाऽभिचरति तुस्माद् हैनयाऽप्प्यभिचरेत् ॥ १४ ॥ अथो हैनयाऽपि भिषज्येत् । यं न्वेवैकयर्चा भिषज्ये-द्देकेन यजुषैकेन साम्ना तं न्वेवाऽगदं कुर्य्यात्किमु यं त्रयेण व्वेदेन तुस्माद् हैनयाऽपि भिषज्येत् ॥ १५ ॥ तस्यै त्रीणि शतमानानि हिरण्ययानि दुक्षिणा । तानि ब्रह्मणे ददाति न वै ब्रह्मा प्प्रचरति न स्तुतेन् शᳬसत्यथ स यशो न वै हिरण्येन किञ्चन कुर्वन्त्यथ तद्यशस्तस्मात्त्रीणि शतमानानि ब्रह्मणे ददाति ॥ १६ ॥ तिस्रो † धेनूर्होत्रे । भूमा वै तिस्रो धेनवो भूमा होता तुस्मात्तिस्रो धेनूर्होत्रे ॥ १७ ॥ त्रीणि व्वासाᳬस्यद्ध्वर्य्यवे । तनुते व्वा ऽअद्ध्वर्यु-र्य्यज्ञं तन्वते व्वासाᳬसि तुस्मात्त्रीणि व्वासाᳬस्यद्ध्वर्य्यवे

† का० श्रौ० सू० १५. ७. ३०, ३१ ।

* ग्राममीधे ॥ १८ ॥ ता वा ऽएताः । द्वादश वा त्रयोदश वा दक्षिणा भवन्ति द्वादश वा वै त्रयोदश वा संवत्सरस्य मासाः संवत्सरसम्मितैवेष्टिस्तस्माद् द्वादश वा त्रयोदश वा दक्षिणा भवन्ति ॥ १९ ॥(E)

पञ्चमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥४॥ कण्डिकासंख्या ॥१३१॥

इति पञ्चमोऽध्यायः ॥ ५ ॥

सवनाम † पञ्चमं काण्डं समाप्तम् ॥ ५ ॥



* का० श्रौ० सू० १५ १० २४ ।

(E) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— वा० श० ७ ५ ३ ।

† अस्मिन् काण्डे कण्डिका संख्या ४७१ ।

# अथोखासम्भरणं नाम षष्ठं काण्डम्

अस्मिन् काण्डे प्रतिपाद्या विषयाः—उखास-
म्भरणम्, विष्णुक्रम-वात्सप्रोपस्थाने,
वनीवाहनं च।



[ अथ हिरण्यगर्भकर्तृकसृष्टिवर्णनम् ]

( तत्र विराडुत्पत्तिः, पृथिव्याद्युत्पत्तिवर्णनं च )।

॥ ओ३म् ॥ * असद्वा ऽइदमग्र ऽआसीत्। तदाहुः किं
† तदसदासीदित्यृषयो वाऽव तेऽग्रेऽसदासीत्तदाहुः के त
ऽऋषय ऽइति प्राणा वा ऽऋषयस्ते यत्पुराऽस्मात्सर्व-
स्मादिदमिच्छन्तः श्रमेण तपसाऽरिषँस्तस्मादृषयः॥ १ ॥
स योऽयं मध्ये प्राणः। एष ऽएवेन्द्रस्तानेष प्राणान्मध्यत-
ऽइन्द्रियेणैन्ध यदैन्ध तस्मादिन्ध ऽइन्धो ह वै तमिन्द्र-
ऽइत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवास्त ऽइद्धाः
सप्त नाना पुरुषानसृजन्त ॥२॥ तेऽब्रुवन्। न वा ऽइत्थं
सन्तः शक्ष्यामः प्रजनयितुमिमान्त्सप्त पुरुषानेकं पुरुषं कर-
वामेति त ऽएतान्त्सप्त पुरुषानेकं पुरुषमकुर्वन्यदूर्ध्वं नाभेस्तौ
द्वौ समौब्जन्यदवाङ्नाभेस्तौ द्वौ पक्षः पुरुषः पक्षः पुरुषः
प्रतिष्ठैक ऽआसीत् ॥ ३ ॥ अथ यैतेषाᳪं सप्तानां
पुरुषाणां श्रीः। यो रस ऽआसीत्तमूर्ध्वᳪं समुदौहँस्तदस्य

* "नैवेह किञ्चनाऽग्र आसीत्" इत्यादि-बृ० उप० ब्रा० १०, ६. ५, छान्दोग्यब्राह्मणे तु "सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम्" इत्यादि ( ८ २ १-४ )।

† ऋ० सं० १०. १२९. १-१७।

शिरोऽभवद्यच्छ्रियः समुदौहँस्तस्माच्छिरस्तस्मिन्नेतस्मिन्प्राणा ऽअश्रयन्त तस्माद्वेवैतच्छिरोऽथ यत्प्राणा ऽअश्रयन्त तस्मादु प्राणाः श्रियोऽथ यत्सर्वस्मिन्नश्रयन्त तस्मादु शरीरम् ॥ ४ ॥ स ऽएव पुरुषः प्रजापतिरभवत् । स यः सः पुरुषः प्रजापतिरभवदयमेव स योऽयमग्निश्चीयते ॥ ५ ॥ स वै सप्त पुरुषो भवति । सप्त पुरुषो ह्ययं पुरुषो यच्चत्वार ऽआत्मा त्रयः पक्षपुच्छानि चत्वारो हि तस्य पुरुषस्याऽऽत्मा त्रयः पक्षपुच्छान्यथ यदेकेन पुरुषेणाऽऽत्मानं वर्द्धयति तेन वीर्य्येणायमात्मा पक्षपुच्छान्युद्यच्छति ॥ ६ ॥ अथ यश्चितेऽग्निर्निधीयते । ये वै तेषाꣳ सप्तानां पुरुषाणाꣳ श्रीर्यो रसस्तमेतदूर्द्ध्वꣳ समुदूहन्ति तदस्यैतच्छिरस्तस्मिन्नेतस्मिन्त्सर्वे देवाः श्रिता ऽअत्र हि सर्वेभ्यो देवेभ्यो जुह्वति तस्माद्वेवैतच्छिरः ॥ ७ ॥ सोऽयं पुरुषः प्रजापतिरकामयत । भूयान्त्स्यां प्रजायेयेति सोऽश्राम्यत्स तपोऽतप्यत स श्रान्तस्तपानो ब्रह्मैव प्रथममसृजत त्रयीमेव विद्याꣳ सैवास्मै प्रतिष्ठाऽभवत्तस्मादाहुर्ब्रह्माऽस्य सर्वस्य प्रतिष्ठेति तस्मादनूच्य प्रतितिष्ठति प्रतिष्ठा ह्येषा यद् ब्रह्म तस्यां प्रतिष्ठायां प्रतितिष्ठितोऽतप्यत ॥ ८ ॥ सोऽपोऽसृजत । वाच ऽएव लोकाद्वागेवाऽस्य सोऽसृज्यत सेदꣳ सर्वमाप्नोद्यदिदं किञ्च यदाप्नोत्तस्मादापो यदवृणोत्तस्माद्वाः * ॥ ९ ॥ सोऽकामयत ।

---

* सा वाक् सर्वव्यापकत्वात् 'आप' उच्यन्ते, जगदावरणाद्वासा वा शब्दवाच्यत्वम् । वृणोतेरप्पनो 'वा' शब्द इति ( सा० भा० ६. १. १ ९ ) ।

आभ्योऽद्भ्योऽधि प्रजायेयेति सोऽनया त्रय्या विद्यया सहाऽपः प्राऽऽविशत्तत ऽआण्डᳬ समवर्त्तत तदभ्यमृशद-स्त्वित्यस्तु भूयोऽस्त्वित्येव तदब्रवीत्ततो ब्रह्मैव प्रथममसृज्यत त्रय्येव विद्या तस्मादाहुर्ब्रह्माऽस्य सर्वस्य प्रथमजमित्यपि हि तस्मात्पुरुषाद् ब्रह्मैव पूर्वमसृज्यत तदस्य तन्मुखमेवाऽसृज्यत तस्मादनूचानमाहुरग्निकल्प ऽइति मुखᳬ ह्येतदग्नेर्यद् ब्रह्म ॥ १० ॥ अथ यो गर्भोऽन्तराऽऽसीत्। सोऽग्निरसृज्यत स यदस्य सर्वस्याऽग्रमसृज्यत तस्मादग्रिरग्निर्ह* वै तमग्निरित्याचक्षते परोऽक्षं परोऽक्षकामा हि देवा ऽअथ यदश्रु सङ्क्षरितमासीत्सोऽश्रुरभवदश्रुर्ह वै तमश्व ऽइत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवा ऽअथ यदरसदिव स रासभोऽभवदथ यᳬ कपाले रसो लिप्त ऽआसीत्सोऽजोऽभवदथ यत्कपालमासीत्सा पृथिव्यभवत् ॥ ११ ॥ सोऽकामयत। आभ्योऽद्भ्योऽधीमां प्रजनयेयमिति ताᳬ संक्लिश्याऽप्सु प्राऽविध्यत्तस्यै यᳬ पराङ् रसोऽत्यक्षरत्स कूर्म्मोऽभवदथ यदूर्ध्वमुदौक्ष्यतेदं तद्यदिदमूर्ध्वमद्भ्योऽधि जायते सेयᳬ सर्वाऽप ऽएवाऽनुव्यैत्तदिदमेकमेव रूपᳬ समदृश्यताऽप ऽएव ॥ १२ ॥ सोऽकामयत। भूय ऽएव स्यात्प्रजायेतेति सोऽश्राम्यत्स तपोऽतप्यत स श्रान्तस्तेपानᳬ फेनमसृजत सोऽवेदन्यद्वाऽएतद्रूपं भूयो वै भवति श्राम्याण्येवेति स श्रान्तस्तेपानो मृदᳬ शुष्काऽपमूषसिकतᳬ शर्करामश्मानमयो हिरण्य-

* 'तस्मादग्निरग्निर्ह वै' इति पाठ 'क' पुस्तके दृश्यते।

मोषधिवनस्पत्यसृजत तेनेमां पृथिवीं प्राऽच्छादयत् ॥ १३ ॥ ता वा ऽएता नव सृष्टयः । इयमसृज्यत तस्मादाहुस्त्रिवृदग्निरितीयꣳ ह्यग्निरस्यै हि सर्वोऽग्निश्चीयते ॥ १४ ॥ अभूद्वा ऽइयं प्रतिष्ठेति । तद्भूमिरभवत्तामप्रथयत्सा पृथिव्यभवत्सेयꣳ सर्वा कृत्स्ना मन्यमाना गायद्यदगायत्तस्मादियं गायत्र्यथो ऽआहुरग्निरेवाऽस्यै पृष्ठे सर्वꣳ कृत्स्नो मन्यमानोऽगायद्यदगायत्तस्मादग्निर्गायत्र ऽइति तस्मादु हैतद्यः सर्वꣳ कृत्स्नो मन्यते गायति वैव गीते वा रमते ॥ १५ ॥ (A)

प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

[ वाय्वन्तरिक्षादिसृष्टिः ]

सोऽकामयत प्रजापतिः । भूय ऽएव स्यात्प्रजायेतेति सोऽग्निना पृथिवीं मिथुनꣳ समभवत्तत ऽआण्डꣳ समवर्त्तत तदभ्यमृशत्पुष्यत्विति, पुष्यतु भूयोऽस्त्वित्येव तदब्रवीत् ॥ १ ॥ स यो गर्भोऽन्तरासीत् । स वायुरसृज्यताऽथ यदश्रु सङ्क्षरितमासीत्तानि वयाꣳस्यभवन्नथ यः कपाले रसो लिप्त ऽआसीत्ता मरीचयोऽभवन्नथ यत्कपालमासीत्तदन्तरिक्षमभवत् ॥ २ ॥ सोऽकामयत । भूय ऽएव स्यात्प्रजायेतेति स वायुनाऽन्तरिक्षं मिथुनꣳ समभवत्तत ऽआण्डꣳ समवर्त्तत तदभ्यमृशद्यशो बिभृहीति ततोऽसावा-

(A) एतद्ब्राह्मणस्य स्थिता [illegible] ब्राह्मणे यथा— का० श० ८. १. १ ।

दित्योऽसृज्यतैष वै यशोऽथ यदश्रु सङ्क्षरितमासीत्सोऽश्मा पृश्निरभवदश्रुर्ह वै तमश्मेत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवा ऽअथ यः कपाले रसो लिप्त ऽआसीत्ते रश्मयोऽभवन्नथ यत्कपालमासीत्सा द्यौरभवत् ॥ ३ ॥ सोऽकामयत । भूय ऽएव स्यात्प्रजायेतेति स ऽआदित्येन दिवं मिथुनꣳ समभवत्तत ऽआण्डꣳ समवर्त्तत तदभ्यमृशद्रेतो बिभृहीति ततश्चन्द्रमा ऽअसृज्यतैष वै रेतोऽथ यदश्रु सङ्क्षरितमासीत्तानि नक्षत्राण्यभवन्नथ यः कपाले रसो लिप्त ऽआसीत्ता ऽअवान्तरदिशोऽभवन्नथ यत्कपालमासीत्ता दिशोऽभवन् ॥४॥ स ऽइमाँल्लोकान्त्सृष्ट्वाऽकामयत । ताः प्रजाः सृजेय या म ऽएषु लोकेषु स्युरिति ॥ ५ ॥ स मनसा वाचं मिथुनꣳ समभवत् । सोऽष्टौ द्रप्साग्गर्भ्यभवत्तेऽष्टौ वसवोऽसृज्यन्त तानस्यामुपाऽऽदधात् ॥ ६ ॥ स मनसैव । वाचं मिथुनꣳ समभवत्स ऽएकादश द्रप्साग्गर्भ्यभवत्त ऽएकादश रुद्रा ऽअसृज्यन्त तानन्तरिक्ष ऽउपाऽऽदधात् ॥७॥ स मनसैव । वाचं मिथुनꣳ समभवत्स द्वादश द्रप्साग्गर्भ्यभवत्ते द्वादशाऽऽदित्या ऽअसृज्यन्त तान्दिव्युपाऽऽदधात् ॥ ८ ॥ स मनसैव । वाचं मिथुनꣳ समभवत्स गर्भ्यभवत्स विश्वान्देवानसृजत तान्दिक्षूपाऽऽदधात् ॥ ९ ॥ अथो ऽआहुः । अग्निमेव सृष्टं वसवोऽन्वसृज्यन्त तानस्यामुपाऽऽदधाद्वायुꣳ रुद्रास्तानन्तरिक्ष ऽआदित्यमादित्यास्तान्दिवि विश्वे देवाश्चन्द्रमसं तान्दिक्षूपाऽऽदधादिति ॥ १० ॥ अथो ऽआहुः । प्रजापतिरेवेमाँल्लोकान्त्सृष्ट्वा पृथिव्यां

च्चिनोति ॥ २८ ॥ तदाहुः । । कस्मादस्या ऽअग्निश्चीयत ऽइति यत्र वै सा देवता व्यस्रꣳसत तदिमामेव रसेनाऽनु व्यक्षरत्तं यत्र देवाः . समस्कुर्वꣳस्तदेनमस्या- ऽएवाऽधि समभरन्त्सैषैकेवेष्टकेयमेवेयꣳ ह्यग्निरस्यै हि सर्वोऽग्निश्चीयते सेयं चतुः स्रक्तिर्दिशो ह्यस्यै स्रक्तयस्तस्माच्चतुःस्रक्तय ऽइष्टका भवन्तीमाꣳ ह्यनु सर्वा- ऽइष्टकाः ॥ २९ ॥ तदाहुः । यदेवमेकेष्टकोऽथ कथं * पञ्चेष्टक ऽइतीयं न्वेव प्रथमा मृन्मयीष्टका तद्यत्किञ्चाऽत्र मृन्मयमुपदधात्येकैव सेष्टकाऽथ यत्पशुशीर्षाण्युपदधाति सा पञ्चिष्टकाऽथ यद्रुक्मपुरुषा ऽउपदधाति यद्धिरण्यशकलैः प्रोक्षति सा हिरण्येष्टकाऽथ यत्स्रुचा- ऽउपदधाति यदुलूखलमुसले याः समिध ऽआदधाति सा वानस्पत्येष्टकाऽथ यत्पुष्करपर्णमुपदधाति यत्कूर्म्मं यद्दधि मधु घृतं यत्किञ्चाऽन्नाऽन्नमुपदधाति सैवाऽन्नं पञ्चमीष्टकैवमु पञ्चेष्टकः ॥३०॥ तदाहुः । कतरत ऽइष्टकायाः शिर- ऽइति यत ऽउपस्पृश्य यजुर्वदतीत्यु हैक ऽआहुः स स्वयमातृण्णाया ऽएवाऽर्द्धादुपस्पृश्य यजुर्वदेत्तथो हाऽस्यैताः सर्वाः स्वयमातृण्णामभ्यावृत्ता भवन्तीति न तथा कुर्य्यादुङ्गानि वा ऽअस्यैतानि परूꣳषि यदिष्टका यथा वा ऽअङ्गेऽङ्गे पर्वन्पर्वञ्छिरः कुर्य्यात्तादृक्तद्यो वाऽवचितेऽग्निर्निधीयते तद्देवैतासाꣳ सर्वासाꣳ शिरः ॥ ३१ ॥ तदाहुः । कति पशवोऽग्ना ऽउपधीयन्त ऽइति पञ्चेति न्वेव ब्रूयात्पञ्च

* तै० सं० ४. ७. ५,६।

ह्येतान्पशूनुपदधाति ॥ ३२ ॥ अथो ऽएक ऽइति ब्रूयात् । अविरितीयं वा ऽअविरियꣳ हीमाः सर्वाः प्रजा ऽअवतीयमु वा ऽअग्निरस्यै हि सर्वोऽग्निश्चीयते तस्मादेक ऽइति ब्रूयात् ॥ ३३ ॥ अथो द्वाविति ब्रूयात् । अवी ऽइतीयं चाऽसौ चेमे हीमाः सर्वाः प्रजा ऽअवतो यन्मृदियं तद्यदापोऽसौ तन्मृच्चाऽऽपश्चेष्टका भवन्ति तस्माद्द्वाविति ब्रूयात् ॥ ३३ ॥ अथो गौरिति ब्रूयात् । इमे वै लोका गौर्यद्धि किञ्च गच्छतीमाँस्तल्लोकान्गच्छतीम ऽउ लोका ऽएषोऽग्निश्चितस्तस्माद्गौरिति ब्रूयात् ॥ ३४ ॥ तदाहुः । कस्मै कामायाऽग्निश्चीयत ऽइति सुपर्णो मा भूत्वा दिवं वहादित्यु हैक ऽआहुर्न तथा विद्यादेतद्वै रूपं कृत्वा प्राणाः प्रजापतिरभवन्नेतद्रूपं कृत्वा प्रजापतिर्देवानसृजतैतद्रूपं कृत्वा देवा ऽअमृता ऽअभवँस्तद्यदेवैतेन प्राणा ऽअभवन्यत्प्रजापतिर्यद्देवास्तदेवैतेन भवति ॥ ३५ ॥ (B)

प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ अपादीनामग्नरूपत्वादि ]

प्रजापतिर्वा ऽइदमग्र ऽआसीत् । एक ऽएव सोऽकामयत स्यां प्रजायेयेति सोऽश्राम्यत्स तपोऽतप्यत तस्माच्छ्रान्तात्तेपानादापोऽसृज्यन्त तस्मात्पुरुषात्तप्तादापो जायन्ते ॥ १ ॥ आपोऽब्रुवन् । क वयं भवामेति तप्यध्वमित्यब्रवीत्ता ऽअतप्यन्त ताः फेनमसृजन्त तस्मादपां

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— शा॰ ब्रा॰ ८. १. २ ।

तप्तानां फेनो जायते ॥ २॥ फेनोऽब्रवीत् । काऽहं भवानीति तप्यस्वेत्यब्रवीत्सोऽतप्यत स मृदमसृजतैतद्वै फेनस्तप्यते यदप्स्वावेष्टमानः प्लवते स यदोपहन्यते मृदेव भवति ॥३॥ मृदब्रवीत्। काऽहं भवानीति तप्यस्वेत्यब्रवीत्साऽतप्यत सा सिकता ऽअसृजतैतद्वै मृत्तप्यते यदेनां विकृषन्ति तस्माद्यद्यपि सुमार्त्स्नं विकृषन्ति सैकतमिवैव भवत्येतावन्नु तद्यत्स्वाऽहं भवानि काऽहं भवानीति ॥४॥ [ अर्धप्रपाठकः ॥५॥ ] सिकताभ्यः शर्करामसृजत। तस्मात्सिकताः शर्करैवाऽन्ततो भवति शर्कराया ऽअश्मानं तस्माच्छर्कराऽश्मैवाऽन्ततो भवत्यश्मनोऽयस्तस्मादश्मनोऽयो धमन्त्ययसो हिरण्यं तस्मादयो बहुध्मातꣳ हिरण्यसङ्काशमिवैव भवति ॥ ५ ॥ तद्यदसृज्यताऽक्षरत् । तद्यदक्षरत्तस्मादक्षरं यदष्टौ कृत्वोऽक्षरत्सैवाऽष्टाक्षरा गायत्र्यभवत् ॥ ६ ॥ अभूद्वा ऽइयं प्रतिष्ठेति । तद्भूमिरभवत्तामप्रथयत्सा पृथिव्यभवत्तस्यामस्यां प्रतिष्ठायां भूतानि च भूतानां च पतिः संवत्सरायाऽदीक्षन्त भूतानां पतिर्गृहपतिरासीदुषाः पत्नी ॥७॥ तद्यानि तानि भूतानि। ऋतवस्तेऽथ यः स भूतानां पतिः संवत्सरः सोऽथ या सोषाः पत्न्यौषसी तानीमानि भूतानि च भूतानां च पतिः संवत्सर ऽउषसि रेतोऽसिञ्चन्त्स संवत्सरे कुमारोऽजायत सोऽरोदीत् ॥ ८ ॥ तं प्रजापतिरब्रवीत् । कुमार ! किꣳ रोदिषि यच्छ्रमात्तपसोऽधि जातोऽसीति सोऽब्रवीदनपहतपाप्मा वा ऽअस्म्यहितनामा नाम मे धेहीति तस्मात्पुत्रस्य जातस्य नामकुर्यात्पाप्मा

नमेवाऽस्य तदुपहन्त्यपि द्वितीयमपि तृतीयमभिपूर्वमेवाऽस्य तत्पाप्मानमपहन्ति ॥ ९ ॥ तमब्रवीद्रुद्रोऽसीति । तद्यदस्य तन्नामाऽकरोदग्निस्तद्रूपमभवदग्निर्वै रुद्रो यदरोदीत्तस्माद्रुद्रः सोऽब्रवीज्ज्यायान्वा ऽअतोऽस्मि धेह्येव मे नामेति ॥ १० ॥ तमब्रवीत्सर्वोऽसीति । तद्यदस्य तन्नामाऽकरोदापस्तद्रूपमभवन्नापो वै सर्वोऽद्भ्यो हीदꣳ सर्वं जायते सोऽब्रवीज्ज्यायान्वा ऽअतोऽस्मि धेह्येव मे नामेति ॥ ११ ॥ तमब्रवीत्पशुपतिरसीति । तद्यदस्य तन्नामाऽकरोदोषधयस्तद्रूपमभवन्नोषधयो वै पशुपतिस्तस्माद्यदा पशव ऽओषधीर्ल्लभन्तेऽथ पतीयन्ति सोऽब्रवीज्ज्यायान्वा ऽअतोऽस्मि धेह्येव मे नामेति ॥ १२ ॥ तमब्रवीदुग्रोऽसीति । तद्यदस्य तन्नामाऽकरोद्वायुस्तद्रूपमभवद्वायुर्वा ऽउग्रस्तस्माद्यदा बलवद्वात्युग्रो वातीत्याहुः सोऽब्रवीज्ज्यायान्वा ऽअतोऽस्मि धेह्येव मे नामेति ॥ १३ ॥ तमब्रवीदशनिरसीति । तद्यदस्य तन्नामाऽकरोद्विद्युत्तद्रूपमभवद्विद्युद्वा ऽअशनिस्तस्माद्यं विद्युद्धन्त्यशनिरवधीदित्याहुः सोऽब्रवीज्ज्यायान्वा ऽअतोऽस्मि धेह्येव मे नामेति ॥ १४ ॥ तमब्रवीद्भवोऽसीति । तद्यदस्य तन्नामाऽकरोत्पर्ज्जन्यस्तद्रूपमभवत्पर्ज्जन्यो वै भवः पर्ज्जन्याद्धीदꣳ सर्वं भवति सोऽब्रवीज्ज्यायान्वा ऽअतोऽस्मि धेह्येव मे नामेति ॥ १५ ॥ तमब्रवीन्महान्देवोऽसीति । तद्यदस्य तन्नामाऽकरोच्चन्द्रमास्तद्रूपमभवत्प्रजापतिर्वै चन्द्रमाः प्रजापतिर्वै महान्देवः सोऽब्रवीज्ज्यायान्वा ऽअतोऽस्मि धेह्येव मे नामेति ॥ १६ ॥ तमब्रवीदीशानोऽसीति ।

तद्यदस्य तन्नामाऽकरोदादित्यस्तद्रूपमभवदादित्यो वा ऽईशान ऽआदित्यो ह्यस्य सर्वस्येष्टे सोऽब्रवीदेतावान्वा ऽअस्मि मामेतः परो नाम धा ऽइति ॥ १७ ॥ तान्येतान्यष्टावग्निरूपाणि । कुमारो नवमः सैवाऽग्नेस्त्रिवृत्ता ॥ १८ ॥ यद्वेवाऽष्टावग्निरूपाणि । अष्टाक्षरा गायत्री तस्मादाहुर्गायत्रोऽग्निरिति सोऽयं कुमारो रूपाण्यनु प्राऽऽविशन्न वा ऽअग्निं कुमारमिव पश्यन्त्येतान्येवाऽस्य रूपाणि पश्यन्त्येतानि हि रूपाण्यनु प्राऽऽविशत् ॥ १९ ॥ तमेतः संवत्सरऽएव चिनुयात् । संवत्सरे*ऽनुब्रूयाद् द्वयोरित्यु हैक ऽआहुः संवत्सरे वै तद्रेतोऽसिञ्चन्स संवत्सरे कुमारोऽजायत तस्माद् द्वयोरेव चिनुयाद् द्वयोरनुब्रूयादिति संवत्सरे त्वेव चिनुयात्संवत्सरेऽनुब्रूयाद्यद्वाऽवरेतः सिक्तं तदेव जायते तत्ततो विक्रियमाणमेव वर्द्धमानः शेते तस्मात्संवत्सरऽएव चिनुयात्संवत्सरेऽनुब्रूयात्तस्य चितस्य नाम करोति पाप्मानमेवाऽस्य तदुपहन्ति चित्रनामानं करोति चित्रोऽसीति सर्वाणि हि चित्राण्यग्निः ॥ २० ॥ (C)

प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति प्रथमोऽध्यायः ॥ १ ॥



* ऐ॰ आ॰ ५. ३. ३ ४ ।

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का॰ श॰ ८. १. ३ ।

[ अथ पुरुषाश्वादिपञ्चपश्वालम्भनविधिः ]

( तत्र चतुर्विंशतिसामिधेन्यादि', इष्टकोपधानादिकं च )

प्रजापतिरग्निरूपाण्यभ्यध्यायत् । स योऽग्नं कुमारो रूपाण्यनु प्रविष्ट ऽआसीत्तमन्वैच्छत्सोऽग्निरवेदनु वै मा पिता प्रजापतिरिच्छति हन्त तद्रूपमसानि यन्म ऽएष न वेदेति ॥ १ ॥ स ऽएतान्पञ्च पशूनपश्यत् । * पुरुषमश्वं गामविमजं यदपश्यत्तस्मादेते पशवः ॥ २ ॥ स ऽएतान्पञ्च पशून्प्राऽऽविशत् । स ऽएते पञ्च पशवोऽभवत्तमु वै प्रजापतिरन्वेवैच्छत् ॥ ३ ॥ स ऽएतान्पञ्च पशूनपश्यत् । यदपश्यत्तस्मादेते पशवस्तेष्वेतमपश्यत्तस्माद्वेवैते पशवः ॥ ४ ॥ स ऽऐक्षत । इमे वा ऽअग्निरिमानेवाऽऽत्मानमभिसंस्करवै यथा वा ऽअग्निः समिद्धो दीप्यत ऽएवमेषां चक्षुर्दीप्यते यथाऽग्नेर्धूम ऽउद्यत ऽएवमेषामूष्मोद्यते यथाऽग्निरभ्याहितं दहत्येवं वप्सति यथाऽग्नेर्भस्म सीदत्येवमेषां पुरीषः सीदतीमे वा ऽअग्निरिमानेवाऽऽत्मानमभिसंस्करवा ऽइति तान्नाना देवताभ्य ऽआलिप्सत वैश्वकर्मणं पुरुषं वारुणमश्वमैन्द्रमृषभं त्वाष्ट्रमविमाग्नेयमजः ॥ ५ ॥ स ऽऐक्षत । नाना वा ऽइदं देवताभ्य ऽआलिप्सेऽग्नेर्वहत् रूपाणि कामये हन्तैनानग्निभ्यः कामायाऽऽलभा ऽइति तानग्निभ्यः कामायाऽऽलभत तद्यदग्निभ्य ऽइति बहूनि ह्यग्निरूपाण्यभ्यध्यायदथ यत्कामायेति कामेन ह्यालभत तानाप्रीतान्पर्यग्निकृतानु-

* का० श्रौ० सू० १६ । १ ५ ।

दीचो नीत्वा समज्ञपयत् ॥६॥ स ऽऐक्षत । या वै *श्रीरब्भ्युधासिषमिमास्ताः शीर्षसु हन्त शीर्षाण्ण्येवोपदधा ऽइति स शीर्षाण्ण्येवोत्कृत्योपाऽऽधत्ताऽथेतराणि कुसिन्धान्न्यप्सु प्प्राऽऽप्लावयदङ्गेन यज्ञः समस्थापयन्नेश्मे यज्ञो विक्रुष्टोऽसदिित्यात्मा वै यज्ञो नेश्मेऽयमात्मा विक्रुष्टोऽसदित्येतेन पशुनेष्ट्वा तत्प्रजापतिरपश्यद्यथैतस्याऽग्नेरन्तं न पर्य्यैत् ॥ ७ ॥ स ऽऐक्षत । यमिममात्मानमप्सु प्प्राऽपिप्लवं तमन्विच्छानीति तमन्वैच्छत्तद्यदेषामप्सु प्प्रविद्धानां प्रत्यतिष्ठत्ता ऽअपः समभरदथ यदस्यां तां मृदं तदुभयः सम्भृत्य मृदं चाऽपश्चेष्टकामकरोत्तस्मादेतदुभयमिष्टका भवति मृच्चाऽऽपश्च ॥ ८ ॥ स ऽऐक्षत । यदि वा ऽइदमित्थमेव सदात्मानमभिसंस्करिष्ष्ये मर्त्यः कुणपोऽनपहतपाप्प्मा भविष्यामि हन्तैनदग्निना पचानीति तदग्निनाऽपचत्तदेनदमृतमकरोदेतद्वै हविरमृतं भवति यदग्निना पचन्ति तस्मादग्निनेष्टकाः पचन्त्यमृता ऽएवैनास्तत्कुर्वन्ति ॥ ९ ॥ तद्यदिष्ट्वा पशुनाऽऽपश्यत् । तस्मादिष्टकास्तस्मादिष्ट्वैव पशुनेष्टकाः कुर्य्यादनिष्टका ह ता भवन्ति याः पुरा पशोः कुर्वन्त्यथो ह तदन्न्यदेव ॥ १० ॥ तद्यास्ताः श्रियः । एतानि तानि पशुशीर्षाण्ण्यथ यानि तानि कुसिन्धान्न्येतास्ताः पञ्च चितयस्तद्यत्पशुशीर्षाण्ण्युपधाय चितीश्चिनोत्येतैरेव तच्छीर्षभिरेतानि कुसिन्धानि सन्दधाति ॥११॥ तऽएते सर्वे पशवो यदग्निः । तस्मादग्नौ पशवो रमन्ते पशु-

* 'श्रीरभ्युध्यासिषम्' इति पाठः 'क' पुस्तके ।

भिरेव तत्पशवो रमन्ते तस्मादायस्य पशवो भवन्ति तस्मिन्न-
ग्निराधीयतेऽग्निर्ह्येष यत्पशवस्ततो वै प्रजापतिरग्निरभवत्
॥ १२ ॥ तद्धैक ऽआहुः । अत्रैवैतैः सर्वैः पशुभिर्यजेत यद्वा
ऽएतैरत्र सर्वैः प्रजापतिरयक्ष्यत तदेवाऽस्तैरन्तं पर्य्यैष्यत्तद्यदे-
तैरत्र सर्वैर्य्यजेत तदेवाऽस्यैरन्तं परीयादिति न तथा कुर्य्या-
द्देवानां तदितादियादथो पथस्तदियादथो किं ततः सम्भ-
रेदेतानि वा ऽएतत्कुसिन्धान्येताश्चिचतीः सम्भरति तस्मा-
त्तथा न कुर्य्यात् ॥ १३ ॥ यद्वेवैतान्पशूनालभते । आयतन-
मेवैतदग्नये करोति न ह्यनायतने कश्चन रमतेऽन्नं वा
ऽआयतनं तदेतत्पुरस्तान्निदधाति तदेनं पश्यन्नग्निरुपाऽऽव-
र्त्तते ॥ १४ ॥ पुरुषोऽश्वोगौरविरजो भवन्ति । एतावन्तो
वै सर्वे पशवोऽन्नं पशवस्तद्यावदन्नं तदेतत्पुरस्तान्निदधाति
तदेनं पश्यन्नग्निरुपाऽऽवर्त्तते ॥ १५ ॥ पञ्च भवन्ति । पञ्च
ह्येतेऽग्नयो यदेताश्चितयस्तेभ्य ऽएतत्पञ्चाऽऽयतनानि
निदधाति तदेनं पश्यन्नग्निरुपाऽऽवर्त्तते ॥१६॥ तद्यदग्निभ्य-
ऽइति वहुवो ह्येतेऽग्नयो यदेताश्चितयोऽथ यत्कामायेति
यथा तं काममाप्नुयाद्यजमानो यत्काम ऽएतत्कर्म्म कुरुते
॥ १७ ॥ पुरुषं प्रथममालभते। पुरुषो हि प्रथमः पशूनाम-
थाऽश्वं पुरुषꣳ ह्यन्वश्वोऽथ गामश्वꣳ ह्यनु गौरथाऽविं गाꣳ
ह्यन्वविरथाऽजमविꣳ ह्यन्वजस्तदेनाऽयथापूर्वं यथाश्रेष्ठ-
मालभते ॥ १८ ॥ तेषां विषमा रशनाः स्युः । पुरुषस्य
वर्षिष्ठाऽथ ह्रसीयस्यथ ह्रसीयसी तद्यथारूपं पशूनाꣳ रशनाः
करोत्यपापवस्यसाय सर्वास्त्वेव समाः स्युः सर्वाः सद्रूशयः

सर्वे ह्येते समाः सर्वे सदृशा ऽअग्नयो ह्युच्यन्तेऽग्नयो ह्युच्यन्ते तेन समास्तेन सदृशाः ॥ १९ ॥ तदाहुः । कथमस्यैषोऽग्निः पञ्चेष्टकः सर्वः पशुष्वारब्धो भवतीति पुरोडाशकपालेषु श्वेवाऽऽप्यत ऽइयं प्रथमा मृन्मयीष्टकाऽथ यत्पशुमालभेत तेन पश्विष्टकाऽऽप्यतेऽथ यद्रुपामभितो * हिरण्यशकलौ भवतस्तेन हिरण्येष्टकाऽऽप्यतेऽथ यदिध्मो यूपः परिधयस्तेन वानस्पत्येष्टकाऽऽप्यतेऽथ यदाज्यं प्रोक्षण्यः पुरोडाशस्तेनाऽन्नं पञ्चमीष्टकाऽऽप्यत ऽएवमु हाऽस्यैषोऽग्निः पञ्चेष्टकः सर्वः पशुष्वारब्धो भवति ॥ २० ॥ तेषां चतुर्विंशतिः सामिधेन्यः । चतुर्विंशत्यर्द्धमासो वै संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्धे ॥ २१ ॥ यद्वेव चतुर्विंशतिः । चतुर्विंशत्यक्षरा वै गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्धे ॥ २२ ॥ यद्वेव चतुर्विंशतिः । चतुर्विंशो वै पुरुषो दश हस्त्या ऽअङ्गुलयो दश पाद्याश्चत्वार्यङ्गानि पुरुषः प्रजापतिः प्रजापतिरग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्धे ॥ २३ ॥ उभयीर्गायत्रीश्च त्रिष्टुभश्चाऽन्वाह । प्राणो गायत्र्यात्मा त्रिष्टुप्प्राणमेवाऽस्य गायत्रीभिः समिन्ध ऽआत्मानं त्रिष्टुब्भिर्मध्ये त्रिष्टुभो भवन्त्यभितो गायत्र्यो मध्ये ह्ययमात्माऽभित प्राणाः भूयसीः पुरस्ताद्गायत्रीरन्वाह कनीयसीरु-

---

* "शृङ्गासुपस्तीर्य हिरण्यशकलमवधाय कृत्स्नां वपामवदाय हिरण्यशकलमुपरिष्टात्कृत्वाऽभिघारयति" ( आप० श्रौ० सू० १६. १७ ) ।

परिष्टाद्भूयाᳬंसो हीमे पुरस्तात्प्राणाः कनीयाᳬंस ऽउप-
रिष्टात् ॥ २४ ॥ * सोऽब्रवाह । 'समास्त्वाग्न ऽऋतवो
वर्द्धयन्त्वि'ति प्रजापतिं विस्रस्तं यत्राऽग्निः समदधात्त-
मब्रवीद्या मत्सम्मिताः सामिधेन्यस्ताभिर्मा समिन्त्स्वेति
॥ २५ ॥ स ऽएता ऽअपश्यत् । समास्त्वाऽग्न ऽऋतवो
वर्द्धयन्त्वि'ति समाश्च त्वाऽग्न ऽऋतवश्च वर्द्धयन्त्वित्येत-
'त्संवत्सरा ऽऋषयो यानि सत्ये'ति संवत्सराश्च त्वर्षयश्च
सत्यानि च वर्द्धयन्त्वित्येत'त्सं दिव्येन दीदिहि रोचनेने'-
त्यसौ वा ऽआदित्यो दिव्यः रोचनं तेन सन्दीदिहीत्येत-
'द्विश्वा ऽआभाहि प्रदिशश्चतस्र' ऽइति सर्वा ऽआभाहि
प्रदिशश्चतस्र ऽइत्येतत् ॥ २६ ॥ ता ऽएता ऽएकव्या-
ख्यानाः । एतमेवाऽभि यथेऽतमेव संस्कुर्य्यादेतः सन्द-
ध्यादेतं जनयेत्ता ऽआग्नेय्यः प्राजापत्या यदग्निरपश्यत्ते-
नाऽऽग्नेय्यो यत्प्रजापतिः समैन्ध तेन प्राजापत्याः ॥२७॥
द्वादशा † ऽऽप्रियः । द्वादश मासाः संवत्सरः संवत्सरोऽग्नि-
र्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदाप्रीणाति
॥ २८ ॥ यद्वेव द्वादश । द्वादशाक्षरा वै जगतीयं वै जग-
त्यस्याः हीदः सर्वं जगदियमु वा ऽअग्निरस्यै हि सर्वो-
ऽग्निश्चीयते यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदा-

* समिध्यमान समिद्वत्यन्तरेण "समास्त्वाग्न" इति नव दधाति" (का० श्रौ० सू० १६ १.११)।

(१) शु० य० सं० १७ क० १। (२) शु० य० अ० २७ क० १। (३) शु० य० अ० २७ क० १। (४) शु० सं० अ० २७ क० १।

† अथात आप्रियः। आप्रियः कस्मात्? आप्नोतेः, प्रीणातेर्वा। 'आप्रीभिराप्रीणाति' इति च ब्राह्मणम् (निरु० ८ १.४.)।

प्प्रीणाति ॥ २९ ॥ युद्वेव द्वादश । द्वादशाक्षरा वै जगती जगती सर्वाणि च्छन्दाᳫंसि सर्वाणि च्छन्दाᳫंसि प्प्रजापतिः प्प्रजापतिरग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदाप्प्रीणाति ॥३०॥ ता * ऽएता 'ऽऊर्द्ध्वा ऽअस्य समिधो भवन्ती'ति । प्रजापतिं विस्रस्तं ग्यत्राऽग्निः समदधात्तमब्रवीद्या मत्सम्मिता ऽआप्प्रियस्ताभिर्म्माऽऽप्प्रीणीहीति ॥ ३१ ॥ सऽएता ऽअपश्यत् । 'ऊर्द्ध्वा ऽअस्य समिधो भवन्ती'त्यूर्द्ध्वा ह्येतस्य समिद्धस्य समिधो भवन्त्यूर्द्ध्वा शुक्रा शोचीᳫंष्यग्नेरि'त्यूर्द्ध्वानि ह्येतस्य शुक्राणि शोचीᳫंष्यर्च्चीᳫंषि भवन्ति 'द्युमत्तमे'ति वीर्य्यवत्तमेत्येतत्'सुप्प्रतीकस्ये'ति सर्व्वतो वाऽअग्निः सुप्प्रतीकः 'सूनोरि'ति यदेनं जनयति तेनाऽस्यैष सूनुः ॥ ३२ ॥ ता ऽएता ऽएकव्याख्यानाः । एतमेवाऽभि यथैनमेव संस्कुर्य्यादेतद्‌ सन्दध्यादेतं जनयेत्ता ऽआग्नेय्यः प्प्राजापत्या यदग्निरपश्यत्तेनाऽऽग्नेय्यो यत्प्रजापतिमाप्प्रीणात्तेन प्प्राजापत्याः ॥३३॥ ता विषमा विषमपदाः । विषमाक्षरा विषमाणि हि च्छन्दाᳫंस्यथो यान्यस्याऽध्यात्ममङ्गानि विषमाणि तान्यस्यैताभिराप्प्रीणाति ॥ ३४ ॥ वैश्वानरः पशुपुरोडाशः । वैश्वानरो वै सर्वेऽग्नयः सर्वेषामग्नीनामुपाऽऽसत्यै ॥ ३५ ॥ यद्वेव वैश्वानरः । ऋतवो ह्येते यदेताश्चितयोऽग्नयो वा ऽऋतव ऽऋतवः संवत्सरः संवत्सरो

* "आग्नियो द्वादशोर्ध्वा अस्येति" ( का० श्रौ० सू० १६. १. १२ ) ।

( १ ) शु० सं० अ० २७ क० ११ । ( २ ) शु० सं० अ० २७ क० ११ । ( ३ ) शु० सं० अ० २७ क० ११ । ( ४ ) शु० सं० अ० २७ क० ११ । ( ५ ) शु० सं० अ० २७ क० ११ ।

वैश्वानरो यदग्नय ऽइति स्यादुति तद्वेचयेद् द्वादशकपालो द्वादश मासाः संवत्सरः संवत्सरो वैश्वानर ऽआग्नेय्यो याज्यानुवाक्या ऽअग्निरूपाणामुपाऽऽप्त्यै कामवत्यः कामानामुपाऽऽप्त्यै ॥३६॥ तद्धैके। इत्येवैतानि पशुशीर्षाणि विल्वोपदधत्युभयेनैते पशव ऽइति ते ह ते मर्त्याः कुणपाः सम्भवन्त्यनाप्रीतानि हि तानि तद्ध तथाऽऽपाढेः सौश्रोमते यस्योपदधुः स ह क्षिप्र ऽएव ततो ममार ॥ ३७ ॥ हिरण्मयान्यु हैके कुर्वन्ति। अमृतेष्टका ऽइति वदन्तस्ता ह ता ऽअनृतेष्टका न हि तानि पशुशीर्षाणि ॥ ३८ ॥ मृन्मयान्यु हैके * कुर्वन्ति । उत्सन्ना वा ऽएते पशवो यद्वै किञ्चोत्सन्नमियं तस्य सर्वस्य प्रतिष्ठा तद्यत्रैते पशवो गतास्तत ऽएनानधि सम्भराम ऽइति न तथा कुर्याद्यो वा ऽएतेषामावृतं च ब्राह्मणं च न विद्यात्तस्यैत ऽउत्सन्नाः स्युः स ऽएतानेव पञ्च पशूनालभेत यावदस्य वशः स्यात्ताश्हैताश्प्रजापतिः प्रथम ऽआलेभे श्यापर्णः सायकायनोऽन्तमोऽथ ह स्मैतानेवाऽन्तरेणाऽऽलभन्तेऽथैतर्हीमौ द्वावेवाऽऽलभ्येते प्राजापत्यश्च वायव्यश्च तयोरुक्तो ब्राह्मणमुच्यते ॥ ३९ ॥ (A)

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥

कण्डिकासंख्या ॥ ११० ॥



* का० श्रौ० सू० १६. १. ३६-४२।

(A) एतद्ब्राह्मणस्य विषया अन्यत्राप्युपलभ्यन्ते यथा—का० सं० ८. २. १; कठ० सं० १८. १६, १७; कपि० २९. ४. ४; मै० सं० ११. १२. ५, ६; तै० सं० ४. १. ७, ८।

[ अथ प्राजापत्यादिपश्वनुष्ठानसम्प्रदायः ]

( तत्र प्राजापत्यपशुः, वायव्यपशुः, पश्वालम्भकालः, उखासम्भरणविधिश्च )

प्राजापत्यं चरका ऽआलभन्ते । प्रजापतिरग्निं चित्वाऽग्निरभवत्तद्यदेतमालभते तदेवाऽग्नेरन्तं पर्यंतीति ॥ १ ॥ श्यामो * भवति । द्वयानि वै श्यामस्य लोमानि शुक्लानि च कृष्णानि च द्वन्द्वं मिथुनं प्रजननं तदस्य प्राजापत्यꣳ रूपं तूपरो भवति तूपरो हि प्रजापतिः ॥ २ ॥ तस्यैकविꣳशतिः सामिधेन्यः । द्वादश मासाः पञ्चर्त्तवस्त्रय ऽइमे लोका ऽअसावादित्य ऽएकविꣳश ऽएष प्रजापतिः प्रजापतिरग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्धे ॥ ३ ॥ यद्वेवैकविꣳशतिः । एकविꣳशो वै पुरुषो दश हस्त्या ऽअङ्गुलयो दश पाद्या ऽआत्मैकविꣳशः पुरुषः प्रजापतिः प्रजापतिरग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्धे ॥ ४ ॥ उभयीर्गायत्रीश्च त्रिष्टुभश्चाऽन्वाह । तासामुक्तो बन्धुरुक्तम्वेवाऽन्वृचꣳ † हिरण्यगर्भवत्याघारमाघारयति प्रजापतिर्वै ‡ हिरण्यगर्भः प्रजापतिरग्निर्द्वादशाऽऽप्रियस्तासामुक्तो बन्धुरुक्तम्वेवाऽन्वृचं प्राजापत्यः पशुपुरोडाशो य ऽएव पशोर्बन्धुः स पुरोडाशस्य द्वादशकपालो द्वादशमासाः संवत्सरः संवत्सरः प्रजापतिः कद्वत्यो याज्यानुवाक्याः को हि प्रजापतिः ॥ ५ ॥ अथैतं वायवे नियुत्वते । शुक्लं तूपरमालभते प्रजापतिः

* का० श्रौ० सू० १६. १. ३३ ।

† का० श्रौ० सू० १६ १ ३५, ३७ ।

‡ तै० सं० १ ७ ६,६ ।

प्रजाः सृष्ट्वाऽनुव्यैक्षत तस्याऽत्यानन्देन रेतः परापतत्सोऽजः शुक्लस्तूपरो लप्सुद्यभवद्रसो वै रेतो या वाऽनु वै रसस्तावानात्मा तद्यदेतमालभते तद्देवाऽग्नेरन्तं पर्य्येति शुक्लो भवति शुक्लः हि रेतस्तूपरो भवति तूपरः हि रेतो वायवे भवति प्राणो वै वायुर्न्नियुत्वते भवत्युदानो वै नियुतः प्राणोदानावेवाऽस्मिन्नेतद्दधाति ॥ ६ ॥ यद्वेवैतं वायवे नियुत्वते। शुक्लं तूपरमालभते प्रजापतिं विस्रस्तं यत्र देवाः समस्कुर्वंस्स योऽस्मात्प्राणो मध्यत उदक्रामत्तमस्मिन्नेतेन पशुनाऽदधुस्तथैवाऽस्मिन्नयमेतद्दधाति वायवे भवति प्राणो वै वायुर्न्नियुत्वते भवत्युदानो वै नियुतः प्राणोदानावेवाऽस्मिन्नेतद्दधाति शुक्लो भवति शुक्लो हि वायुस्तूपरो भवति तूपरो हि वायुः ॥ ७ ॥ तस्य सप्तदश सामिधेन्यः। सप्तदशो वै संवत्सरो द्वादश मासाः पञ्चऽर्त्तवः संवत्सरः प्रजापतिः प्रजापतिरग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्धे ॥ ८ ॥ यद्वेव सप्तदश। सप्तदशो वै पुरुषो दश प्राणाश्चत्वार्य्यङ्गान्यात्मा पञ्चदशो ग्रीवाः षोडश्यः शिरः सप्तदशं पुरुषः प्रजापतिः प्रजापतिरग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्धे ॥ ९ ॥ उभयीर्गायत्रीश्च त्रिष्टुभश्चाऽन्वाह । तासामुक्तो बन्धुरुक्तम्वेवाऽन्वृचं द्वादशाऽऽप्रियस्तासामुक्तो बन्धुरुक्तम्वेवाऽन्वृचं * प्राजापत्यः पशुपुरोडाशोऽन्नो स काम ऽउपाऽऽसऽइति ह स्माऽऽह माहित्थिरथ चरकाः प्राजापत्ये पशा-

* का० श्रौ० सू० १६. १. ३९।

वाहुरिति ॥ १० ॥ यद्वेव वायव्यः पशुर्भवति । प्राजापत्यः पशुपुरोडाशोऽर्द्धः ह प्रजापतेर्वायुरर्द्धं प्रजापतिस्तद्युभौ वायव्यौ स्यातामुभौ वा प्राजापत्यावर्द्धः हैवाऽस्य कृतः स्यान्नार्द्धमथ यद्वायव्यः पशुर्भवति प्राजापत्यः पशुपुरोडाशस्तेन हैवैतः सर्वं कृत्स्नं प्रजापतिः संस्करोति ॥ ११ ॥ यद्वेव वायव्यः पशुर्भवति । प्राजापत्यः पशुपुरोडाशः प्रजापतिं विस्रस्तं यत्र देवाः समस्कुर्वन्त्स यो ऽस्मात्प्राणो मध्यत ऽउदक्रामत्तमस्मिन्नेतेन पशुनाऽऽदधुरथाऽस्यैतेन पुरोडाशेनाऽऽत्मानः समस्कुर्वन्त्स यत्प्राजापत्यो भवति प्रजापतिर्ह्यात्मा द्वादशकपालो द्वादश मासाः संवत्सरः संवत्सरः प्रजापतिः कद्वत्यौ याज्यानुवाक्ये को हि प्रजापतिः ॥१२॥ तस्य वपां* पुरस्ताज्जुहोति । य ऽएवाऽयं पुरस्तात्प्राणस्तमस्मिन्नेतद्दधात्यथ यदेतेन मध्यतश्चरन्ति मध्यतो ह्ययमात्माऽथ यद्धविषोपरिष्टाच्चरन्ति य ऽएवाऽयमुपरिष्टात्प्राणस्तमस्मिन्नेतद्दधाति शुक्रवत्यो याज्यानुवाक्याः स्युः शुक्ररूपाणामुपाऽऽप्त्यै नियुत्वत्यो यदेव नियुत्वद्रूपं तस्योपाऽऽप्त्यै ॥ १३ ॥ तदु वा ऽआहुः । वपाया ऽएव शुक्रवत्यौ स्यातामेतावद्धे पशोः शुक्रं यद्वपा शुक्रवत्यौ नियुत्वत्यौ हविषो यदेव नियुत्वद्रूपं तस्योपाऽऽप्त्या ऽइति ॥ १४ ॥ यद्वेवैतं पशुमालभते । एतस्मिन्ह पशौ सर्वेषां पशूनाꣳ रूपं यत्तूपरो लप्सुदी तत्पुरुषस्य रूपं तूपरो हि लप्सुदी पुरुषो यत्तूपरः केसरवाँस्तदश्वस्य रूपं तूपरो हि केसरवा-

* कद्वत्यौ याज्यानुवाक्याः प्राजापत्यस्य ( का० श्रौ० सू० १६. १. ४०-४३ ) ।

न्नश्वो यदष्टाशफस्तद्गोरूपमष्टाशफो हि गौरथ यदस्याऽवेरिव शफास्तदुवे रूपं स्यद्जस्तदजस्य तद्यदेतमालभते तेन हैवाऽस्यैते सर्वे पशव ऽआलब्धा भवन्त्यतो यतमदस्य कर्म्मोपकल्पेते ते वा पञ्चपशव ऽएष वा प्राजापत्य ऽएष वा नियुत्वतीयः ॥ १५ ॥ तं * पौर्णमास्यामालभेत । अमावास्यायामालभेतेत्यु हैक ऽआहुरसौ वै चन्द्रः प्रजापतिः स ऽएतार्ठ० रात्रिमिह वसति तद्यथोपतिष्ठन्तमालभेतैवं तदिति ॥ १६ ॥ तद्वै पौर्णमास्यामेव । असौ वै चन्द्रः पशुस्तं देवाः पौर्णमास्यामालभन्ते यत्रैनं देवा ऽआलभन्ते तदेनमालभा ऽइति तस्मात्पौर्णमास्यां यद्वेव पौर्णमास्यां पौर्णमासी ह वाऽत्र प्रथमा व्युवास तस्माद्वेव पौर्णमास्याम् ॥ १७ ॥ तद्वै फाल्गुन्यामेव । एषा ह संवत्सरस्य प्रथमा रात्रिर्यत्फाल्गुनी पौर्णमासी योत्तरैषोत्तमा या पूर्वा मुखत ऽएव तत्संवत्सरमारभते ॥ १८ ॥ स वा ऽइष्ट्वैव पौर्णमासेन । अथ पशुमालभते पौर्णमासेन वा ऽइन्द्रो वृत्रं पाप्मानर्ठ० हत्वाऽपहतपाप्मैतत्कर्म्माऽऽरभत तथैवैतद्यजमानः पौर्णमासेनैव वृत्रं पाप्मानर्ठ० हत्वाऽपहतपाप्मैतत्कर्म्माऽऽरभते ॥ १९ ॥ तद्वा † ऽउपार्ठ०शु भवति । एतद्वैतैः प्रजापतिः पशुभिः कर्म्मैयेष तद्धाऽत्राऽनद्धेवैवासाऽनिरुक्तमिव तस्मादुपार्ठ०शुः ॥ २० ॥ यद्वेवोपार्ठ०शु । प्राजापत्यं वा ऽएतत्कर्म्म प्रजापतिर्ठ० ह्येतेन कर्म्मणाऽऽरभतेऽनिरुक्तो

* का० श्रौ० सू० १६. १. ५–७।
† का० श्रौ० सू० १६. १ २५, २६।

वै प्रजापतिः ॥ २१ ॥ यद्वेवोपाꣳशु । रेतो वा ऽअत्र यज्ञ ऽउपाꣳशु वै रेतः सिच्यते वपा पशुपुरोडाशो हविरेतावान्हि पशुः ॥२२॥ अष्टकायामुखाꣳ* सम्भरति। प्राजापत्यमेतदहर्यदष्टका प्राजापत्यमेतत्कर्म्म यदुखा प्राजापत्य ऽएव तदहन्प्राजापत्यं कर्म्म करोति ॥ २३ ॥ यद्वेवाऽष्टकायाम् । पर्वैतत्संवत्सरस्य यदष्टका पर्वैतदग्नेर्यदुखा पर्वण्येव तत्पर्व करोति ॥ २४ ॥ यद्वेवाऽष्टकायाम् । अष्टका वा ऽउखा निधिर्द्वा ऽउर्द्धी तिरश्ची † रास्ना तच्चतुश्चतस्र ऽऊर्द्ध्वास्तदष्टावष्टकायामेव तदष्टकां करोति ॥ २५ ॥ ‡ अमावास्यायां दीक्षते । अमावास्यायै वा ऽअधि यज्ञस्तायते यतो यज्ञस्तायते ततो यज्ञं जनयानीति ॥ २६ ॥ यद्वेवाऽमावास्यायाꣳ । रेतो वा ऽएतद्भूतमात्मानꣳ सिञ्चत्युखायां योनौ यद्दीक्षते तस्मा ऽएतं पुरस्ताल्लोकं करोति यद्दीक्षितो भवति तं कृतं लोकमभिजायते तस्मादाहुः कृतं लोकपुरुषोऽभि जायत ऽइति ॥ २७ ॥ स यत्कनीयः संवत्सराद्दीक्षितः स्यात् । अलोका ऽइष्टका ऽउपदध्यादिष्टका लोकानतिरिच्येरन्नथ यद्भूयसो लोकान्कुर्त्वेष्टका नाऽनूपदध्याल्लोका ऽइष्टका ऽअतिरिच्येरन्नथ यदमावास्यायां दीक्षित्वाऽमावास्यायां क्रीणाति तद्यावन्तमेव लोकं करोति तावतीरिष्टका ऽउपदधात्यथाऽस्याऽऽपूर्य्यमाणपक्षे सर्वोऽग्निश्चीयते ॥ २८ ॥

---

* का॰ श्रौ॰ सू॰ १६. २. १।

† का॰ श्रौ॰ सू॰ १६. ३. ३१।

‡ अथ शतम् ३५५०, का॰ श्रौ॰ सू॰ १६. ४. २७।

तदाहुः । यद्यावत्य ऽएतस्याऽग्नेरिष्टकास्तावन्ति क्वयेऽहोरात्राणि सम्पद्यन्तेऽथ यान्यूर्द्ध्वानि क्वयादुहानि कथमस्यते लोका ऽअनूपहिता भवन्तीति यद्वा ऽअमावास्यायां दीक्षित्वाऽमावास्यायां क्रीणाति तद्यावन्तमेव लोकं करोति तावतीरिष्टका ऽउपदधात्यथ यान्यूर्द्ध्वानि क्वयादुहानि तस्मिन्नवकाशेऽद्ध्वर्युरग्निं चिनोति क्वो हि चिनुयान्न च सोऽवकाशः स्याद्यावन्ति वै संवत्सरस्याऽहोरात्राणि तावत्य ऽएतस्याऽग्नेरिष्टका ऽउप च त्रयोदशो मासस्त्रयोदशो वा ऽएष मासो यान्यूर्द्ध्वानि क्वयादुहानि तद्या ऽअमूस्त्रयोदशस्य मास ऽइष्टकास्ताभिरस्य ते लोका ऽअनूपहिता भवन्ति तत्समा लोकाश्चेष्टकाश्च भवन्ति ॥ २९ ॥

एतद्द वै यैव प्रथमा पौर्णमासी । तस्यां पशुमालभते या प्रथमाऽष्टका तस्यामुखार्थं सम्भरति या प्रथमाऽमावास्या तस्यां दीक्षत ऽएतद्वै यान्येव संवत्सरस्य प्रथमान्यहानि तान्यस्य तदारभते तानि च तदाप्नोत्यथाऽतः सम्पदेव ॥ ३० ॥

तदाहुः । कथमस्यैतत्कर्म्म संवत्सरमग्निमाप्नोति कथꣳ संवत्सरेणाऽग्निना सम्पद्यत ऽइत्येतेषां वै पञ्चानां पशूनां चतुर्विꣳशतिः सामिधेन्यो द्वादशाऽऽप्रियस्तत्षट्त्रिꣳशदेकादशाऽनुयाजा * ऽएकादशोपयजस्तदष्टा पञ्चाशत् ॥३१॥

ततो याऽष्टाचत्वारिꣳशत् । साऽष्टाचत्वारिꣳशदक्षरा जगतीयं वै जगत्यस्याꣳ हीदꣳ सर्वं जगदियमु वा ऽअग्निरस्यै हि सर्वोऽग्निश्चीयते यावानग्निर्यावत्यस्य मात्रा तावत्तद्

* आप० श्रौ० सू० ७. २७. ११ ।

भवति ॥ ३२ ॥ यद्वेवाऽष्टाचत्वारिंशत् । अष्टाचत्वारिंशदक्षरा वै जगती जगती सर्वाणि च्छन्दांसि सर्वाणिच्छन्दांसि प्रजापतिः प्रजापतिरग्निरग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद् भवति ॥ ३३ ॥ अथ यानि दश । सा दशाक्षरा विराड्विराडग्निर्दश दिशो दिशोऽग्निर्दश प्राणाः प्राणा ऽअग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद् भवति ॥ ३४ ॥ वपा पशुपुरोडाशः । तत्पष्टिः षष्टिर्म्मासस्याऽहोरात्राणि तन्मासमाप्नोति मास ऽआप्तऽऋतुमाप्नोत्यृतुः संवत्सरं तत्संवत्सरमग्निमाप्नोति ये च संवत्सरे कामा ऽअथ यदतोऽन्यद्यदेव संवत्सरेऽन्नं तत्तत् ॥ ३५ ॥ अथैतस्य प्राजापत्यस्य । एकविंशतिः सामिधेन्यो द्वादशाऽऽप्रियस्तत्त्रयस्त्रिंशदेकादशाऽनुयाजाऽएकादशोपयज तत्पञ्च पञ्चाशद्वपा पशुपुरोडाशो हविस्तदष्टापञ्चाशत्स योऽष्टापञ्चाशति कामोऽत्रैव तमाप्नोति द्वावाघारौ तत्पष्टिः स यः षष्ट्यां कामोऽत्रैव तमाप्नोत्यथ यदतोन्यद्यदेव संवत्सरेऽन्नं तत्तत् ॥ ३६ ॥ अथैतस्य नियुत्वतीयस्य । सप्तदश सामिधेन्यो द्वादशाऽऽप्रियस्तदेकां न त्रिंशदेकादशानुयाजा ऽएकादशोपयजस्तदेकपञ्चाशद्वपा पशुपुरोडाशो हविस्तच्चतुष्पञ्चाशद् द्वावाघारौ द्वौ स्विष्टकृतौ तदष्टापञ्चाशत्स योऽष्टापञ्चाशति कामोऽत्रैव तमाप्नोति वनस्पतिश्च वसाहोमश्च तत्पष्टिः स यः पष्ट्यां कामोऽत्रैव तमाप्नोत्यथ यदतोऽन्यद्यदेव संवत्सरेऽन्नं तत्तदेवमु हाऽस्यैतत्कर्म्म संवत्सरमग्निमाप्नो-

स्यैव संवत्सरेणाऽग्निना सम्पद्यते ॥ ३७ ॥ तदाहुः । नैतस्य पशोः समिष्टयजूꣳष्यपि जुहुयान्न हृदयशूलेनाऽव-भृथमभ्यवेयादारम्भो वा ऽएषोऽग्नेः पशुर्व्यवसर्गो देव-तानाꣳ समिष्टयजूꣳषि सꣳस्थाऽवभृथो नेदारम्भे देवता व्यवसृजानि नेद्यज्ञꣳ सꣳस्थापयानीति स वै समेव स्थापयेदेतेन पशुनेष्ट्वा तत्प्रजापतिरपश्यद्यथैतस्याऽग्नेरन्तं न पर्यैत्तस्मात्सꣳस्थापयेद्यद्वेव सꣳस्थापयति प्राण ऽएष पशुस्तस्य यदन्तरियात्प्राणस्य तदन्तरियाद्यदु वै प्राणस्या-ऽन्तरियात्तत ऽएव म्रियेत तस्मात्समेव स्थापयेदथाऽतो व्रतानामेव ॥ ३८ ॥ तदाहुः । नैतेन पशुनेष्ट्वोपरि शयीत* न माꣳसमश्नीयान्न मिथुनमुपेयात्पूर्वदीक्षा वा ऽएष पशुरनवक्लृप्तं वै तद्यद्दीक्षित ऽउपरि शयीत यन्माꣳसम-श्नीयाद्यन्मिथुनमुपेयादिति नेत्त्वेवैषा † दीक्षा नेव हि मेखलाऽस्ति न कृष्णाजिनमिष्टकां वा ऽएतां कुरुते तस्मादु काममेवोपरि शयीतैतदु सर्वमन्नं यदेते पश-वस्तदस्याऽत्राऽऽप्तमारब्धं भवति तद्यानि कानि चाऽमधुनो-ऽशनानि तेषामस्य सर्वेषां कामाशनं यदि लभेत मिथुनं तु नोपेयात्पुरा मैत्रावरुण्यै पयस्यायै तस्योपरि बन्धुः ॥ ३९ ॥ तदाहुः । दद्यादेतस्मिन्यज्ञे दक्षिणां नेन्मेऽयं यज्ञोऽदक्षिणोऽसद् ब्रह्मण ऽआदिष्टदक्षिणां दद्याद् ब्रह्मा वै सर्वो यज्ञस्तदस्य सर्वो यज्ञो भिषज्यितो भवतीति न

* "मैथुनं चर्जयेदापयस्यायाः, मांसोपर्याशने चेच्छन्" (का० श्रौ० सू० १६.१ ८,९) ।

† 'मेखलया दीक्षयति' 'कृष्णाजिनेन दीक्षयति' इति दीक्षाविधानादत्रोभयोरभावादियं दीक्षा न भवतीति ( तै० सं० ६. १. ३. १४ ४ ) स्पष्टम् ।

तथा कुर्यादिष्टकां वा ऽएतां कुरुते तद्यथेष्टकामिष्टकायां दध्यात्तादृक्तदमुखेन दध्याद्यदस्योपकल्पेत ॥४०॥ (B)

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ चितीनामृषिदेवतासम्बन्धेनोत्पत्तिप्रकारः ]

एतद्वै देवा ऽअब्रुवन् । चेतयध्वमिति चितिमिच्छतेति वाऽव तदब्रुवँस्तेषां चेतयमानानां प्रजापतिरिमां प्रथमाᳬ स्वयमातृण्णां चितिमपश्यत्तस्मात्तां प्रजापतिनोपदधाति ॥ १ ॥ तमग्निरब्रवीत् । उपाऽहमायानीति केनेति पशुभिरिति तथेति पश्विष्टकया ह तदुवाचैषा वाऽव पश्विष्टका यद्दूर्वेष्टका तस्मात्प्रथमायै स्वयमातृण्णाया ऽअनन्तर्हिता दूर्वेष्टकोपधीयत्ते तस्मादस्या ऽअनन्तर्हिता ऽओषधयोऽनन्तर्हिताः पशवोऽनन्तर्हितोऽग्निरनन्तर्हितो ह्येष ऽएतयोपैत् ॥ २ ॥ तेऽब्रुवन् । चेतयध्वमेवेति चितिमिच्छतेति वाऽव तदब्रुवन्नित ऊर्ध्वमिच्छतेति तेषां चेतयमानानामिन्द्राग्नी च विश्वकर्मा चाऽन्तरिक्षं द्वितीयाᳬ स्वयमातृण्णां चितिमपश्यँस्तस्मात्तामिन्द्राग्निभ्यां च विश्वकर्मणा चोपदधाति ॥ ३ ॥ तान्वायुरब्रवीत् । उपाऽहमायानीति केनेति दिग्भिरिति तथेति दिश्याभिर्ह तदुवाच तस्माद् द्वितीयायै स्वयमातृण्णाया ऽअनन्तर्हिता दिश्या ऽउपधीयन्ते तस्मादन्तरिक्षादनन्तर्हिता दिशोऽनन्तर्हितो

(B) एतद्ब्राह्मणस्या विषया शाखाऽप्युपलभ्यन्ते यथा— का० श० ८. २. २ ।

वायुरनन्तर्हितो ह्येष ऽएताभिरुपैत् ॥ ४ ॥ तेऽब्रुवन् । चेतयद्ध्वमेवेति चितिमिच्छतेति वाऽव तदब्रुवंस्त ऽऊर्द्ध्वमिच्छतेति तेषां चेतयमानानां परमेष्ठी दिवं तृतीयाᳪं स्वयमातृण्णां चितिमपश्यत्तस्मात्तां परमेष्ठिनोपदधाति ॥ ५ ॥ तमसावादित्योऽब्रवीत् । उपाऽहमायानीति केनेति लोकम्पृणयेति तथेत्येष वाऽव लोकम्पृणाऽऽत्मना हैव तदुवाच तस्मात्तृतीया स्वयमातृण्णानन्तर्हितालोकम्पृणाया ऽउपधीयते तस्मादसावादित्योऽनन्तर्हितो दिवोऽनन्तर्हितो ह्येष ऽएतयोपैत् ॥ ६ ॥ तदेता वाऽव षड् देवताᳪं । इदᳪं सर्वमभवन्यदिदं किञ्च ते देवाश्चर्षयश्चाऽब्रुवन्निमा वाऽव षड् देवता ऽइदᳪं सर्वमभूवन्नुप तज्जानीत यथा वयमिहाऽप्प्यसामेति तेऽब्रुवँश्चेतयद्ध्वमिति चितिमिच्छतेति वाऽव तदब्रुवँस्तदिच्छत यथा वयमिहाऽप्प्यसामेति तेषां चेतयमानानां देवा द्वितीयां चितिमपश्यन्नृषयश्चतुर्थीम् ॥ ७ ॥ तेऽब्रुवन् । उप वयमायामेति केनेति यदेषु लोकेषूपेति तथेति तद्यदूर्द्ध्वं पृथिव्या ऽअर्वाचीनमन्तरिक्षात्तेन देवा ऽउपाऽयँस्तदेषा द्वितीया चितिरथ यदूर्द्ध्वमन्तरिक्षादर्वाचीनं दिवस्तेनर्षय ऽउपायँस्तदेषा चतुर्थी चितिᳪं ॥ ८ ॥ ते यदब्रुवन् । चेतयद्ध्वमिति चितिमिच्छतेति वाऽव तदब्रुवन्यच्चेतयमाना ऽअपश्यँस्तस्माच्चितयᳪं ॥ ९ ॥ प्रजापतिᳪं प्रथमां चितिमपश्यत् । प्रजापतिरेव तस्याऽआर्षेयं देवा द्वितीयां चितिमपश्यन्देवा ऽएव तस्याऽआर्षेयमिन्द्राग्नी च विश्वकर्मा च तृतीयां चितिमपश्यँस्त-

ऽएव तस्या ऽआर्षेयमृषयश्चतुर्थीं चितिमपश्यन्नृषय ऽएव तस्या ऽआर्षेयं परमेष्ठी पञ्चमीं चितिमपश्यत्परमेष्ठ्येव तस्या ऽआर्षेयꣳ स यो हैतदेवं चितीनामार्षेयं वेदाऽऽर्षेयवत्यो हाऽस्य बन्धुमत्यश्चितयो भवन्ति ॥ १० ॥ (C)

द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥



[ सावित्रहोमः ]

एतद्वै देवा ऽअब्रुवन् । चेतयध्वमिति चितिमिच्छतेति वाऽव तदब्रुवँस्तेषां चेतयमानानाꣳ सवितैतानि सावित्राण्यपश्यद्यत्सविताऽपश्यत्तस्मात्सावित्राणि स ऽएता मष्टागृहीतामाहुतिमजुहोत्ताꣳ हुत्वेमामष्टधाविहितामषाढामपश्यत्पुरैव सृष्टाꣳ सतीम् ॥१॥ ते यदब्रुवन् । चेतयध्वमिति चितिमिच्छतेति वाऽव तदब्रुवन्यच्चेतयमाना ऽअपश्यँस्तस्माच्चितिराहुतिर्वै यज्ञो यदिष्ट्वाऽपश्यत्तस्मादिष्टका ॥२॥ [ अर्धप्रपाठकः ५२ ॥ ] तां वा ऽएताम् । एकाꣳ * सतीमष्टागृहीतामष्टाभिर्यजुर्भिर्जुहोति तस्मादियमेका सत्यष्टधा विहिता ॥ ३ ॥ तामूर्ध्वामुद्गृह्णन् जुहोति । इमाꣳ तदूर्ध्वाꣳ रूपैरुद्गृह्णाति तस्मादियमूर्ध्वा रूपैः ॥४॥ ताꣳ सन्ततां जुहोति । एतद्वै देवा ऽअबिभयुर्यद्वैन ऽइह रक्षाꣳसि नाष्ट्रा

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ८ ७. ३ ।

* "पशुरष्टमाभिर्ऋग्भिरेकामाहुतिं जुहोति" ( आप० श्रौ० सू० १६ १ ४ ) ।

नाऽन्ववेयुरिति त ऽएतं सन्ततहोममपश्यन् रक्षसां नाष्ट्राणामनन्ववायनाय तस्मात्सन्ततं जुहोति ॥५॥ यद्वे-वैतामाहुतिं जुहोति। सवितैषोऽग्निस्तमेतयाऽऽहुत्या पुर-स्तात्प्रीणाति तमिष्ट्वा प्रीत्वाऽथैनꣳ सम्भरति तद्यदेतया सवितारं प्रीणाति तस्मात्सावित्राणि तस्माद्वा ऽएता-माहुतिं जुहोति ॥ ६ ॥ यद्वेवैतामाहुतिं जुहोति। सवि-तैषोऽग्निस्तमेतयाऽऽहुत्या पुरस्ताद्रेतो भूतꣳ सिञ्चति यादृग्वै योनौ रेतः सिच्यते तादृग्जायते तद्यदेतया सवितारꣳ रेतो भूतꣳ सिञ्चति तस्मात्सावित्राणि तस्माद्वा ऽएतामाहुतिं जुहोति ॥ ७ ॥ स्रुवश्चाऽत्र स्रुक्च प्रयुज्येते। वाग्वै स्रुक्प्राणः स्रुवो वाचा च वै प्राणेन चैतदग्रे देवाः कर्म्माऽन्वैच्छꣳस्तस्मात्स्रुवश्च स्रुक्च ॥ ८ ॥ यद्वेव स्रुवश्च स्रुक्च। यो वै स प्रजापतिरासीदेष स स्रुवः प्राणो वै स्रुवः प्राणः प्रजापतिरथ या सा वागासीदेषा सा स्रुग्योषा वै वाग्योषा स्रुगथ यास्ता ऽआप-ऽआयन्वाचो लोकादेतास्ता यामेतामाहुतिं जुहोति ॥ ९ ॥ ताꣳ सन्ततं जुहोति। सन्तता हि ता ऽआप ऽआयन्नथ यः स प्रजापतिस्त्रय्या विद्यया सहाऽपः प्राऽऽविशदेष स यैरेतद्यजुर्भिर्जुहोति ॥ १० ॥ तद्यानि त्रीणि प्रथमानि। इमे ते लोका ऽअथ यच्चतुर्थं यजुस्त्रयी सा विद्या जगती सा भवति जगती सर्वाणि च्छन्दाꣳसि सर्वाणि च्छन्दाꣳसि त्रयी विद्याऽथ यानि चत्वार्य्युत्तमानि द्विश-स्तानीमे च वै लोका द्विशश्च प्रजापतिरथैषा त्रयी

विया ॥ ११ ॥ स * जुहोति । 'युञ्जानः प्रथमं मन' ऽइति प्रजापतिर्वै युञ्जानः स मन ऽएतस्मै कर्म्मणे-ऽयुङ्क्त तद्यन्मन ऽएतस्मै कर्म्मणेऽयुङ्क्त तस्मात्प्रजापतिर्युञ्जानः ॥ १२ ॥ 'तत्त्वाय सविता धिय' ऽइति । मनो वै सविता प्राणा धियो'ऽग्नेर्ज्योतिर्निचाय्ये'त्यग्नेर्ज्योतिर्दृष्ट्वेत्येत'त्पृथिव्या ऽअध्याभरादि'ति पृथिव्यै ह्येनदुध्याभरति ॥ १३ ॥ 'युक्तेन मनसा वयमि'ति । मन-ऽएवैतदेतस्मै कर्म्मणे युङ्क्ते न ह्ययुक्तेन मनसा किञ्चन सम्प्रति शक्नोति कर्त्तुं 'देवस्य सवितुः सव' ऽइति देवेन सवित्रा प्रसूता ऽइत्येत'त्स्वर्ग्याय शक्त्येति' यथैतेन कर्म्मणा स्वर्गं लोकमियादेवमेतदाह शक्त्येति शक्त्या हि स्वर्गं लोकमेति ॥ १४ ॥ 'युक्त्वाय सविता देवानि'ति । मनो वै सविता प्राणा देवाः 'स्वर्य्यतो धिया दिवमि'ति स्वर्गंहैनां लोकं यतो धियैतस्मै कर्म्मणे युयुजे 'बृहज्ज्योतिः

* चयनं चिकीर्षन् फाल्गुनकृष्णप्रतिपदि पौर्णमासेष्टिं सम्पाद्य पुरुषाश्वगोऽव्यजानालभ्याजेन यागं विधाय पुरुषादि पञ्चपशूनां शिरांसि घृतेनाऽभ्यज्य प्रथमचितावुपधानार्थं क्वचित् संस्थाप्य तेषां कबन्धान्यजशेषं च मृद्युक्ते तडागादिजले प्रक्षिपेत् । उखानिर्माणार्थं इष्टकानिर्माणार्थं च मृदं जलं तत एवाऽऽदेयम् । ततः फाल्गुनकृष्णाष्टम्यामुखानिर्माणम् । तदर्थमाहवनीयदक्षिणाग्नी उद्धृत्याऽऽहवनीयात्प्राक् कृते चतुष्कोणे गर्त्ते ततस्तडागान्मृत्पिण्डमानीय भूसमं स्थापयेत् । पिण्डाहवनीयान्तराले सच्छिद्रां वल्मीकमृदं निदध्यात् । आहवनीयाद्दक्षिणप्रान्तेऽश्वगर्दभाजा प्राङ्मुखाः प्रागपराः मुञ्जरसनाबद्धा स्थाप्याः । आहवनीयोत्तरे वैणव्युभयतस्तीक्ष्णा कल्माषी हिरण्मयी वाऽभ्रिः स्थाप्या । ततः 'अष्टागृहीतं जुहोति सन्ततमुद्गृह्णन् युञ्जान इति' ( म० मा० का० श्रौ० सू० १६. २. ७ ) ।

( १ ) शु० सं० अ० ११ क० १ । ( २ ) शु० सं० अ० ११ क० १ । ( ३ ) शु० सं० अ० ११ क० १ । ( ४ ) शु० सं० अ० ११ क० १ । ( ५ ) शु० सं० अ० ११ क० २ । ( ६ ) शु० सं० अ० ११ क० २ । ( ७ ) शु० सं० अ० ११ क० २ । ( ८ ) शु० सं० अ० ११ क० ३ । ( ९ ) शु० सं० अ० ११ क० ३ । ( १० ) शु० सं० अ० ११ क० ३ ।

करिष्यत' ऽइत्यसौ वा ऽआदित्यो बृहज्ज्योतिरेष ऽउ-
ऽएषोऽग्निरेतमन्वेते संस्करिष्यन्तो भवन्ति 'सविता प्प्रसुवाति
तानि'ति सवितृप्प्रसूता ऽएतत्कर्म्म करवन्नित्येतत् ॥ १५ ॥
'युञ्जते मन ऽउत युञ्जते धिय' ऽइति । मनश्चैवैतत्प्राणां-
श्चैतस्मै कर्म्मणे युङ्क्ते 'विप्प्रा विप्रस्ये'ति प्रजापतिर्वै
विप्प्रो देवा विप्प्रा 'बृहतो विपश्चित' ऽइति प्प्रजापतिर्वै
बृहन्विपश्चि'द्धि होत्रा दध' ऽइति यद्वा ऽएष चीयते
तदेष होत्रा विधत्ते चिते ह्येतस्मिन् होत्रा ऽअधिविधीयन्ते
'वयुनाविदि'त्येष हीदं वयुनमविन्द'देक ऽइदि'त्येको ह्येष-
ऽइद्ध सर्वं वयुनमविन्द'न्महो देवस्य सवितुः परिष्टुति-
रि'ति महती देवस्य सवितुः परिष्टुतिरित्येतत् ॥ १६ ॥
'युजे वां ब्रह्म पूर्व्यं नमोभिरि'ति । प्राणो वै ब्रह्म पूर्व्यं-
मन्न नमस्तत्तदुपैवाऽऽहुतिरन्नमेतयैव तदाहुत्यै तेनाऽन्नेन
प्प्राणानेतस्मै कर्म्मणे युङ्क्ते 'विश्लोक ऽएतु पथ्येव
सूरेरि'ति यथोभयेषु देवमनुष्येषु कीर्त्तिश्लोको यजमानस्य
स्यादेवमेतदाह 'शृण्वन्तु विश्वे ऽअमृतस्य पुत्रा' ऽइति
प्प्रजापतिर्वा ऽअमृतस्तस्य विश्वे देवाः पुत्रा 'ऽआये धामानि
दिव्यानि तस्थुरि'तीमे वै लोका दिव्यानि धामानि
तद्य ऽएषु लोकेषु देवास्तानेतदाह ॥ १७ ॥ 'यस्य प्प्रयाण-

(१) शु० सं० अ० ११ क० ३। (२) शु० सं० अ० ११ क० ४। (३) शु० सं०
अ० ११ क० ४। (४) शु० सं० अ० ११ क० ४। (५) शु० सं० अ० ११ क० ४।
(६) शु० स० अ० ११ क० ४। (७) शु० सं० अ० ११ क० ४। (८) शु० स०
अ० ११ क० ४। (९) शु० सं० अ० ११ क० ५। (१०) शु० सं० अ० ११ क० ५।
(११) शु० सं० अ० ११ क० ५। (१२) शु० सं० अ० ११ क० ५। (१३) शु०
सं० अ० ११ क० ६।

मुश्वन्न्य ऽइद्युयुरि'ति । प्रजापतिर्वा ऽएतदग्रे कर्म्माऽकरोत्त-त्ततो देवा ऽअकुर्व'न्देवा देवस्य महिमानमोजसे'ति यज्ञो वै महिमा देवा देवस्य यज्ञं श्रीर्य्यमोजसेत्येत'द्यः पार्थिवानि विममे स ऽएतश' ऽइति यद्वै किञ्चाऽस्यां तत्पार्थिवं तदेष सर्वं विमिमीते रश्मिभिर्ह्येनदभ्यवतनोति 'रजांऽसि देवः सविता महित्वने'तीमे वै लोका रजाऽस्यसावादित्यो देवः सविता तानेष महिम्ना विमिमीते ॥ १८ ॥ 'देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाये'ति । असौ वा ऽआदित्यो देवः सविता यज्ञो भगस्तमेतदाह प्रसुव यज्ञं प्रसुव यज्ञपतिं भगायेति 'दिव्यो गन्धर्वः केतपूः केतं नः पुनात्वि'त्यसौ वा ऽआदित्यो दिव्यो गन्धर्वोऽन्नं केतोऽन्नपूरन्नं नः पुनात्वित्येत'द्वाचस्पतिर्वाचं नः स्वदत्वि'ति प्राणो वा ऽइदं कर्म्म प्राणो वाचस्पतिः प्राणो न-ऽइदं कर्म्म स्वदत्वित्येतत् ॥ १९ ॥ 'इमं नो देव सवितर्य्यज्ञं प्रणये'ति । असौ वा ऽआदित्यो देवः सविता यद्वै वा ऽएष यज्ञियं कर्म्म प्रणयति तदनार्त्तऽं स्वस्त्युदृचमश्नुते 'देवाव्यमि'ति यो देवानवदित्येत'त्सखिविदः सत्राजितं धनजितऽं स्वर्जितमि'ति य ऽएतत्सर्वं विन्दादित्येतदृचे'त्यृचां स्तोमः समर्द्धय गायत्रेण रथन्तरं बृहद्गायत्रवर्त्तनी'ति सामानि 'स्वाहे'ति यजूऽंषि सैषा त्रयी विद्या

(१) शु० सं० अ० ११ क० ६। (२) शु० सं० अ० ११ क० ६। (३) शु० सं० अ० ११ क० ६। (४) शु० सं० अ० ११ क० ७। (५) शु० सं० अ० ११ क० ७। (६) शु० सं० अ० ११ क० ७। (७) शु० सं० अ० ११ क० ८। (८) शु० सं० अ० ११ क० ८। (९) शु० सं० अ० ११ क० ८। (१०) शु० सं० अ० ११ क० ८। (११) शु० सं० अ० ११ क० ८।

प्रथमं जायते यथैवाऽदोऽमुत्राऽजायतैवमथ यः सोऽग्निरसृज्यतैष स योऽत ऽऊर्द्ध्वमग्निश्चीयते ॥ २० ॥ तान्येतान्यष्टौ सावित्राणि । अष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्रेतो भूतꣳ सिञ्चति तानि नव भवन्ति स्वाहाकारो नवमो नव दिशो दिशोऽग्निर्नव प्राणाः प्राणा ऽअग्निर्यावानग्निर्यावत्य मात्रा तावतैवैनमेतद्रेतो भूतꣳ सिञ्चति तानि दश भवन्त्याहुतिर्दशमी दशाक्षरा विराड्विराडग्निर्दश दिशो दिशोऽग्निर्दश प्राणाः प्राणा ऽअग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥ २१ ॥ एतस्यामाहुत्याꣳ हुतायाम् । अग्निर्देवेभ्य ऽउदक्रामत्ते देवा ऽअब्रुवन्पशुर्वाऽअग्निः पशुभिरिममन्विच्छाम स स्वाय रूपायाऽविर्भविष्यतीति तं पशुभिरन्वैच्छंस्तस्वाय रूपायाऽविरभवत्तस्माद्ध हैतत्पशुः स्वाय रूपायाऽविर्भवति गौर्वा गवेऽश्वो वाऽश्वाय पुरुषो वा पुरुषाय ॥ २२ ॥ तेऽब्रुवन् । यद्यह सर्वैरन्वेषिष्यामो यातयामा ऽअनुपजीवनीया भविष्यन्ति यद्यु ऽअसर्वैरसर्वमनुवेत्स्याम ऽइति त ऽएतमेकं पशुं द्वाभ्यां पशुभ्यां प्रत्यपश्यन्रासभं गोश्चाऽवेश्च तद्यदेतमेकं पशुं द्वाभ्यां पशुभ्यां प्रत्यपश्यꣳस्तस्मादेष ऽएकः सन्द्विरेताः ॥ २३ ॥ अनद्धा पुरुषं पुरुषात् । एष ह वा ऽअनद्धापुरुषो यो न देवानवति न पितॄन्न मनुष्यास्तꣳसर्वैरह पशुभिरन्वैच्छन्नो यातयामा ऽअनुपजीवनीया ऽअभवन् ॥ २४ ॥ त्रिभिरन्विच्छति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य

मात्रा तावतैवैनमेतद्दुश्चिच्छति ते पञ्च सम्पदा भवन्ति पञ्चचितिकोऽग्निः पञ्चर्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥ २५ ॥ ते मौञ्जीभिरभिधानीभिरभिहिता भवन्ति । अग्निर्देवेभ्य-ऽउदक्रामत्स मुञ्जं प्राऽऽविशत्तस्मात्स सुषिरस्तस्माद्वेवाऽन्तरतो धूमरक्त ऽइव सैषा योनिरग्नेर्यन्मुञ्जोऽग्निरिमे पशवो न वै योनिर्गर्भꣳ हिनस्त्यहिꣳसायै योनेर्वै जायमानो जायते योनेर्जायमानो जायाता ऽइति ॥ २६ ॥ त्रिवृतो भवन्ति । त्रिवृद्ध्यग्निरश्वाभिधानीकृता भवन्ति सर्वतो वा ऽअश्वाभिधानी मुखं परिशेते सर्वतो योनिर्गर्भं परिशेते योनिरूपमेतत्क्रियते ॥ २७ ॥ ते प्राञ्चस्तिष्ठन्ति । अश्वः * प्रथमोऽथ रासभोऽथाऽज-ऽएवꣳ ह्येतेऽनुपूर्वं यद्वै तदश्रु समक्षरितमासीदेष सोऽश्वोऽथ यत्तदुरसदिवैष रासभोऽथ यः स कपाले रसो लिप्त-ऽआसीदेष सोऽजोऽथ यत्तत्कपालमासीदेषा सा मृद्यामेतदाहरिष्यन्तो भवन्त्येतेभ्यो वा ऽएष रूपेभ्योऽग्रे-ऽसृज्यत तेभ्य ऽएवैनमेतज्जनयति ॥ २८ ॥ ते दक्षिणतस्तिष्ठन्ति । एतद्वै देवा ऽअबिभयुर्यद्वै नो यज्ञं दक्षिणतो रक्षाꣳसि नाष्ट्रा न हन्युरिति त ऽएतं वज्रमपश्यन्नमुमेवाऽऽदित्यमसौ वा ऽआदित्य ऽएषोऽश्वस्त ऽएतेन वज्रेण दक्षिणतो रक्षाꣳसि नाष्ट्रा ऽअपहत्याऽभयेऽनाष्ट्र-ऽएतं यज्ञमतन्वत तथैवैतद्यजमान ऽएतेन वज्रेण

* का० श्रौ० सू० १६ २ ४ ।

दक्षिणतो रक्षाᳬसि नाष्ट्रा ऽअपहत्याऽभयेऽनाष्ट्र ऽएतं यज्ञं तनुते ॥२९॥ दक्षिणत ऽआहवनीयो भवति । *उत्तरत ऽएषाऽभ्रिरुपशेते वृषा वा ऽआहवनीयो योषाऽभ्रिर्दक्षिणतो वै वृषा योषामुपशेतेऽरत्निमात्रेऽरत्निमात्राद्धि वृषा योषामुपशेते ॥ ३० ॥ सा वैणवी स्यात् । अग्निर्देवेभ्य ऽउदक्रामत्स वेणुं प्राऽऽविशत्तस्मात्स सुषिरः स ऽएतानि वर्म्माण्यभितोऽकुरुत पर्वाण्यननुप्रज्ञानाय यत्र यत्र निर्ददाह तानि कल्माषाण्यभवन् ॥ ३१ ॥ सा कल्माषी स्यात् । सा ह्याग्नेयी यदि कल्माषीं न विन्देदप्यकल्माषी स्यात्सुषिरा तु स्यात्सैवाऽऽग्नेयी सैषा योनिरग्नेर्यद्वेणुरग्निरियं सृन्न वै योनिर्गर्भᳬ हिनस्त्यहिᳬसायै योनेर्वै जायमानो जायते योनेर्जायमानो जायाता ऽइति ॥ ३२ ॥ प्रादेशमात्री स्यात् । प्रादेशमात्रᳬ हीदमभि वाग्वदत्यरत्निमात्री त्वेव भवति बाहुर्वा ऽअरत्निर्बाहुभ्यां वै वीर्यं क्रियते वीर्यसम्मितैव तद्भवति ॥ ३३ ॥ अन्यतः †क्ष्णुत्स्यात् । अन्यतरतो हीदं वाचः क्ष्णुतमुभयतः क्ष्णुत्त्वेव भवत्युभयतो हीदं वाचः क्ष्णुतं यदेनया दैवं च वदति मानुषं चाऽथो यत्सत्यं चाऽनृतं च तस्मादुभयतःक्ष्णुत् ॥ ३४ ॥ यद्वेवोभयतःक्ष्णुत् । अतो वा ऽअन्यैर्वीर्यं यतोऽस्यै क्ष्णुतमुभयत ऽएवाऽस्यामेतद्वीर्यं दधाति ॥ ३५ ॥ यद्वेवोभयतःक्ष्णुत् । एतद्वा ऽएनं देवा ऽअनु-

* का० श्रौ० सू० १६. २. ५ ।

† "उभयत क्ष्णूरन्यतरः क्ष्णू वा" ( आप० श्रौ० सू० १६ १ ७ ) ।

विश्वेभ्यो लोकेभ्योऽखनँस्तथैवैनमयमेतदनुविश्वेभ्यो लोकेभ्यः खनति ॥ ३६ ॥ स यद्दिति खनति । तदेनमस्माँल्लोकात्खनत्यथ यदूर्ध्वोच्चरति तदमुष्माल्लोकादथ यदन्तरेण सञ्चरति तदन्तरिक्षलोकात्सर्वेभ्य एवैनमेतदेभ्यो लोकेभ्यः खनति ॥ ३७ ॥ * तामादत्ते । देवस्य[1] त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे गायत्रेण च्छन्दसाऽङ्गिरस्वदि'ति सवितृप्रसूतऽएवैनामेतदेताभिर्देवताभिरादत्ते गायत्रेण च्छन्दसाऽथोऽअस्यां गायत्रं छन्दो दधाति 'पृथिव्याः[2] सधस्थादग्निं पुरीष्यमङ्गिरस्वदाभरे'ति पशवो वै पुरीषं पृथिव्या ऽउपस्थादग्निं पशव्यमग्निवदाभरेत्येत'त्त्रैष्टुभेन[3] च्छन्दसाऽङ्गिरस्वदि'ति तदेनां त्रैष्टुभेन च्छन्दसाऽऽदत्तेऽथोऽस्यां त्रैष्टुभं छन्दो दधाति ॥ ३८ ॥ 'अभ्रिरसी[4]'ति । अभ्रिर्ह्येषा तदेनꣳ सत्येनाऽऽदत्ते 'नार्यसी[5]ति' वज्रो वा ऽअभ्रिर्योषा नारी न वै योषा कञ्चन हिनस्ति शमयत्येवैनामेतदहिꣳसायै 'त्वया[6] वयमग्निꣳ शकेम खनितुꣳ सधस्थ ऽए'तीदं वै सधस्थं त्वया वयमग्निꣳ शकेम खनितुमस्मिन्सधस्थऽइत्येत'ज्जागतेन[7] च्छन्दसाऽङ्गिरस्वदि'ति तदेनां जागतेन छन्दसाऽऽदत्तेऽथो ऽअस्यां जागतं छन्दो दधाति ॥ ३९ ॥ त्रिभिरादत्ते । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतै-

---

* का० श्रौ० सू० १६. २. ८ क०।

(१) शु० सं० अ० ११ क० ९। (२) शु० सं० अ० ११ क० ९। (३) शु० सं० अ० ११ क० ९। (४) शु० सं० अ० ११ क० १०। (५) शु० सं० अ० ११ क० १०। (६) शु० सं० अ० ११ क० १०। (७) शु० सं० अ० ११ क० १०।

वैनामतदादत्ते त्रिभिरादायाऽथैनां * चतुर्थेनाऽभिमन्त्रयत-ऽएतद्वा ऽएनां देवास्त्रिभिरादायाऽथाऽस्यां चतुर्थेन वीर्य्यमदधुस्तथैवैनामयमेतत्त्रिभिरादायाऽथाऽस्यां चतुर्थेन वीर्य्यं दधाति ॥ ४० ॥ 'हस्त ऽआधाय सविते'ति । हस्ते ह्यस्याऽऽहिता भवति 'विभ्रदभ्रिमि'ति बिभर्त्ति ह्येनाथं 'हिरण्ययीमि'ति हिरण्मयी ह्येषा या छन्दोम'य्यग्नेर्ज्योतिर्निचाय्ये'-त्यग्नेर्ज्योतिर्दृष्ट्वेत्येत'त्पृथिव्या ऽअध्याभरदि'ति पृथिव्यै ह्येनदध्याभर'त्यानुष्टुभेन च्छन्दसाऽङ्गिरस्वदि'ति तदेनामानुष्टुभेन च्छन्दसाऽऽदत्तेऽथो ऽअस्यामानुष्टुभं छन्दो दधाति तान्येतान्येव छन्दाथंस्येषाऽभ्रिरारम्भायैवेयं वैणवी क्रियते ॥ ४१ ॥ ताथं हैके † हिरण्मयीं कुर्वन्ति । हिरण्ययीति वा ऽअभ्युक्तेति न तथा कुर्य्याद्वा ऽएषा छन्दाथंसि तेनैषा हिरण्ययममृतं हिरण्ययममृतानि च्छन्दाथंसि ॥ ४२ ॥ तां चतुर्भिरादत्ते । चतुरक्षरा वै सर्वा वाग् वागित्येकमक्षरमक्षरमिति त्र्यक्षरं तद्यच्चवागित्येकमक्षरं यैवैषाऽनुष्टुबुत्तमा सा साऽथ यदक्षरमिति त्र्यक्षरमेतानि तानि पूर्वाणि यजूथंषि सर्वयैवैतद्वाचाऽग्निं खनति सर्वया वाचा सम्भरति तस्माच्चतुर्भिः ॥ ४३ ॥ यद्वेव चतुर्भिः । चतस्रो वै दिशश्चतसृषु तद्दिक्षु वाचं दधाति तस्माच्चत-

---

* का० श्रौ० सू० १६ २ ८ । १

(१) शु० सं० अ० ११ कं० ११ । (२) शु० सं० अ० ११ कं० ११ । (३) शु० सं० अ० ११ कं० ११ । (४) शु० सं० अ० ११ कं० ११ । (६) शु० सं० अ० ११ कं० ११ । (५) शु० सं० अ० ११ कं० ११ ।

† का० श्रौ० सू० १६ २. ६ ।

सूपु दिक्षु वाग्वदति छन्दोभिश्च यजुर्भिश्चाऽऽदत्ते तदष्टौ चतस्रो दिशश्चतस्रोऽवान्तरदिशः सर्वासु तद्दिक्षु वाचं दधाति तस्मात्सर्वासु दिक्षु वाग्वदति ॥ ४४ ॥ (A)

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ अश्वादि-पश्चपशूनामभिमन्त्रणादि ]

हस्त ऽएषाऽभ्रिर्भवत्यथ पशूनभिमन्त्रयते । एतद्वा-ऽएषु देवा ऽअह्वेपिष्यन्तः पुरस्ताद्वीर्यमदधुस्तथैवैष्वय-मेतदह्वेपिष्यन्पुरस्ताद्वीर्यं दधाति ॥ १ ॥ † सोऽश्वमभि-मन्त्रयते । 'प्रतूर्त्तं वाजिन्नाद्रवे'ति यद्वै क्षिप्रं तत्तूर्त्तमथ यत्क्षिप्रात्क्षेपीयस्तत्प्रतूर्त्तं 'वरिष्ठामनु संवतमि'तीयं वै वरिष्ठा संवदिमामनु संवतमित्येत'द्दिवि ते जन्म परम-मन्तरिक्षे तव नाभिः पृथिव्यामधि योनिरिदि'ति तदेन-मेता देवताः करोत्यग्निं वायुमादित्यं तदस्मै वीर्यं दधाति ॥ २ ॥ अथ रासभम् । 'युञ्जाथाᳪं रासभं युवमि'त्यद्धर्थ्युं चैतद्यजमानं चाहा'ऽस्मिन्न्यामे वृषण्वसू' ऽइत्यस्मिन्-न्कर्म्मणि वृषण्वसू ऽइत्येत'दग्निं भरन्तमस्मयुमि'त्यग्निं भरन्तमस्मत्प्रेषितमित्येतत्तद्रासभे वीर्यं दधाति ॥ ३ ॥ अथाऽजम् । 'योगे-योगे तवस्तरं वाजे-वाजे हवामह'

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ८ १. १, कठ० १५ ११ १६, १, मै० स० ११ ७ १, तै० स० ४ १ १।

† का० श्रौ० सू० १६. २ ५।

(१) शु० स० अ० ११ क० १२। (२) शु० स० अ० ११ क० १२। (३) शु० स० अ० ११ क० १२। (४) शु० स० अ० ११ क० १३। (५) शु० स० अ० ११ क० १३। (६) शु० स० अ० ११ क० १३। (७) शु० स० अ० ११ क० १४।

ऽइत्यन्नं वै वाजः कर्म्मणि-कर्म्मणि तवस्तरमन्नेऽन्ने हवामह ऽइत्येत'त्सखायं ऽइन्द्रमूतय ऽइतीन्द्रियवन्तमूतयऽइत्येतत्तदजे वीर्य्यं दधाति ॥ ४ ॥ त्रिभिरभिमन्त्रयते । त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैष्वेतद्वीर्य्यं दधाति ॥ ५ ॥ अथैनान्प्राच ऽउत्क्रमयति । तदेनमेतैः पशुभिरन्विच्छति नोपस्पृशत्यग्निरेष यत्पशवो नेन्माऽयमग्निर्हिनसदिति ॥ ६ ॥ सो*ऽश्वमुत्क्रमयति । 'प्रतूर्वन्नेह्यवक्रामन्नशस्तीरि'ति पाप्मा वा ऽअशस्तिस्त्वरमाण ऽएह्यवक्रामन् पाप्मानमित्येत'द्रुद्रस्य गाणपत्यं मयोभूरेही'ति रौद्रा वै पशवो या ते देवता तस्यै गाणपत्यं मयोभूरेहीत्येतत्तदेनमश्वेनाऽन्विच्छति ॥ ७ ॥ अथ रासभम् । उर्वन्तरिक्षं वीहि स्वस्तिगव्यूतिरभयानि कृण्वन्नि'ति यथैव यजुस्तथा बन्धुः 'पूष्णा सयुजा सहे'तीयं वै पूषाऽनया सयुजा सहेत्येतत्तदेनः रासभेनाऽन्विच्छति ॥ ८ ॥ अथाऽजम् । 'पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदाभरे'ति पृथिव्या ऽउपस्थादग्निं पशव्यमग्निवदाभरेत्येतत्तदेनमजेनाऽन्विच्छति ॥ ९ ॥ त्रिभिरन्विच्छति । त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदन्विच्छति त्रिभिः पुरस्तादभिमन्त्रयते तत्षट् षड्ऋतवः संव-

(१) शु० सं० अ० ११ क० १४।

* का० श्रौ० सू० १६. २. १०।

(२) शु० सं० अ० ११ क० १५। (३) शु० सं० अ० ११ क० १५। (४) शु० सं० अ० ११ क० १५। (५) शु० सं० अ० ११ क० १५। (६) शु० सं० अ० ११ क० १६।

स्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावत्तद्भवति ॥१०॥ (B)

## तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥
कण्डिकासंख्या ॥ १०४ ॥



[ पिण्डम्प्रति ब्रह्मादीनामभिगमनादि ]

प्रदीप्ता ऽएतेऽग्नयो भवन्ति । अथ मृदमुच्छयन्तीमे वै लोका ऽएतेऽग्नयस्ते यदा प्प्रदीप्ता ऽअथैत ऽइमे लोकाः पुरो वा ऽएतदेभ्यो लोकेभ्योऽग्रे देवाः कर्म्माऽन्वैच्छँस्तद्यदेतानग्नीनतीत्य मृदमाहरति तदेनं पुरैभ्यो लोकेभ्योऽन्विच्छति ॥ १ ॥ प्राञ्चो यन्ति । प्राची हि दिगग्नेः स्वायामेवैनमेतद्दिश्यन्विच्छति स्वायां दिशि विन्दति ॥ २ ॥ ते * प्प्रयन्ति । 'अग्निं पुरीष्यमङ्गिरस्वदुच्छेम' ऽइत्यग्निं पशव्यमग्निवदुच्छेम ऽइत्येतत् ॥ ३ ॥ † अथाऽनद्धापुरुषमीक्षते । 'अग्निं पुरीष्यमङ्गिरस्वद्भरिष्याम' ऽइत्यग्निं पशव्यमग्निवद्भरिष्याम ऽइत्येतत्तदेनमनद्धापुरुषेणाऽन्विच्छति ॥ ४ ॥ अथ ‡ वल्मीकवपा सुपिरा

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ८. ३. २; कठ० सं० १८. १६, १-३; मै० सं० ११. ७. २; तै० सं० ४. १. २ ।

* का० श्रौ० सू० १६. २. ११ ।

( १ ) शु० सं० अ० ११ क० १५ ।

† का० श्रौ० सू० १६. २. १२ ।

( २ ) शु० सं० अ० ११ क० १६ ।

‡ का० श्रौ० सू० १६. २. १४ ।

तस्मादु हैतदश्वः पशूनां भगितमोऽस्मादास्थानादि'ति यत्रैतत्तिष्ठसीत्येतद् 'द्रविणोदा' इति द्रविणᳪ ह्येभ्यो ददाति 'वाजिन्निति' वाजी ह्येष 'वयᳪ स्याम सुमतौ पृथिव्या अग्निं खनन्त उपस्थे अस्या' इति वयमस्यै पृथिव्यै सुमतौ स्यामाऽग्निमस्या उपस्थे खनन्त इत्येतत् ॥ १३ ॥ अथैनमुत्क्रान्तमभिमन्त्रयते *। एतद्वाऽएनं देवाः प्रोचिवाᳪसं यथा ददिवाᳪसं वन्देतैवमुपाऽस्तुवन्नुपाऽमहयँस्तथैवैनमयमेतदुपस्तौत्युपमहय'त्युदक्रमीदि'-त्युद्ध्यक्रमीद् 'द्रविणोदा' इति द्रविणᳪ ह्येभ्यो ददाति 'वाज्यर्वे'ति वाजी च ह्येषोऽर्वा चा'ऽकः सुलोकः सुकृतं पृथिव्यामि'त्यकरः सुलोकः सुकृतं पृथिव्यामित्येत- 'त्ततः खनेम सुप्रतीकमग्निमि'ति तत एनं खनेमेत्येतत्सुप्रतीकमिति सर्वतो वा अग्निः सुप्रतीकः 'स्वोरुहाणा अधि नाकमुत्तममि'ति स्वर्गो वै लोको नाकः स्वर्गं लोकः रोहन्तोऽधि नाकमुत्तममित्येतत्तं दक्षिणतोपसङ्क्रमयति यत्रेतरौ पशू भवतस्ते दक्षिणतः प्राञ्चस्तिष्ठन्ति स य एवाऽमुत्र दक्षिणत स्थानस्य बन्धुः सोऽत्र ॥१४॥ अथोपविश्य मृदमभिजुहोति। एतद्वै देवा अबिभयुर्वँश्चे-

---

(१) शु० स० अ० ११ क० २१। (२) शु० स० अ० ११ क० २१। (३) शु० ग० अ० ११ क० २१। (४) शु० स० अ० ११ क० २१। (५) शु० स० अ० ११ क० २१।

* का० श्रौ० सू० १६. २. २०।

(६) शु० स० अ० ११ क० २२। (७) शु० स० अ० ११ क० २२। (८) शु० ग० अ० ११ क० २२। (९) [illegible] ११ क० २२। (१०) शु० स० अ० ११ क० २२।

ग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्प्रीणाति ॥ १६ ॥
प्रादेशमात्र्यो भवन्ति । प्रादेशमात्रो वै गर्ब्भो विष्णुरन्नमे-
तदात्मसम्मितेनैवैनमेतदन्नेन प्प्रीणाति यदु वा ऽआत्म-
सम्मितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्क-
नीयो न तदवति तिष्ठन्नादधाति तस्योपरि बन्धुः स्वाहा-
कारेण रेतो वा ऽइदꣳ सिक्तमयमग्निस्तस्मिन्नयत्काष्ठा-
न्यस्वाहाकृतान्यभ्यादध्याद्धिꣳस्याद्धैनं ता यत्समिध-
स्तेन नाऽऽहुतयो यदु स्वाहाकारेण तेनाऽन्नमन्नꣳ हि
स्वाहाकारस्तथो हैनं न हिनस्ति ॥ १७ ॥ (C)

षष्ठाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ भस्मोद्वपनम्, व्रतपरिग्रहः, उखाभेदे प्रायश्चित्तादिकं च ]

अथ विष्णुक्रमान्क्रान्त्वा । वात्सप्प्रेणोपस्थाया ऽस्तमित-
ऽआदित्ये भस्मैव प्रथममुद्वपत्येतद्वा ऽएनमेतेनाऽन्नेन
प्प्रीणात्येताभिꣳ समिद्भिस्तस्याऽन्नस्य जग्धस्यैष पाप्प्मा
सीदति भस्म तेनैनमेतद्व्यावर्त्तयति तस्मिन्नपहतपाप्प्मन्वाचं
विसृजते वाचं विसृज्य समिधमादधाति रात्र्या ऽएवैन-
मेतदन्नेन प्प्रीणाति रात्रीꣳ रात्रीमप्प्रयावं भरन्त ऽइति
तस्योक्तो बन्धू रात्र्या ऽएवैतामरिष्टिꣳ स्वस्तिमाशास्ते
तद्यत्किञ्चाऽतो रात्र्योपसमादधात्याहुतिकृतꣳ हैवाऽस्मै

(C) एतद्ब्राह्मणस्था निगदा अन्यत्राऽप्युपलभ्यन्ते यथा— का० श्रौ० ८. ६. २,१; क्ठ० सं० १६ ७; कपि० १०. ७, मै० सं० ११. ७. ७; तै० सं० ४. १. ९।

तदुपसमादधाति ॥१॥ अथ प्रातरुदित ऽआदित्ये । भस्मैव प्रथममुद्वपत्येतद्वा ऽएनमेतेनाऽन्नेन प्रीणात्येतया समिधा यच्च रात्र्योपसमादधाति तस्याऽन्नस्य जग्धस्यैष पाप्मा सीदति भस्म तेनैनमेतद्व्यावर्त्तयति तस्मिन्नपहतपाप्मन्न्वाचं विसृजते वाचं विसृज्य † समिधमादधात्यह ऽएवैनमेतदेन्नन प्रीणा'त्यहरहरप्रयावं भरन्त' ऽइति तस्योक्तो बन्धुरह ऽएवैतामरिष्टिꣳ स्वस्तिमाशास्ते तद्यत्किञ्चाऽतोऽह्नोपसमादधात्याहुतिकृतꣳ हैवाऽस्मै तदुपसमादधाति ॥२॥ अहोरात्रे वा ऽअभिवर्त्तमाने संवत्सरमाप्नुतꣳ संवत्सर ऽइदꣳ सर्वमाह्नायैवैतामरिष्टिꣳ स्वस्तिमाशास्ते ॥ ३ ॥ अथ यदाऽस्मै व्रतं प्रयच्छन्ति । अथ व्रते * ऽभ्युज्य समिधमादधाति न व्रते न्यञ्ज्यादित्यु हैक ऽआहुराहुतिं तज्जुहुयादनवक्लृप्तं वै तद्यददीक्षित ऽआहुतिं जुहुयादिति ॥ ४ ॥ स वै ऽभ्यज्यादेव । दैवो वा ऽअस्यैष ऽआत्मा मानुषोऽयꣳ स यन्न न्यञ्ज्यान्न हैतं दैवमात्मानं प्रीणीयादथ यन्न्यनक्ति तथो हैतं दैवमात्मानं प्रीणाति सा यत्समित्तेन नाऽऽहुतिर्यदु व्रते न्यक्ता तेनाऽन्नमन्नꣳ हि व्रतꣳ ॥ ५ ॥ स वै समिधमाधायाऽथ व्रतयति दैवो वाऽअस्यैष ऽआत्मा मानुषोऽयं देवा ऽउ वा ऽअग्रेऽथ मनुष्यास्तस्मात्समिधमाधायाऽथ व्रतयति ॥ ६ ॥ 'अन्नपते-

---

† का० श्रौ० सू० १६. ४. ४० ।
( १ ) शु० सं० अ० ११ कं० ८३ ।
* का० श्रौ० सू० १६. ६. ८ ।

ऽन्नस्य नो देही'ति । अशनपतेऽशनस्य नो देहीत्येतद्'न-मीवस्य शुष्मिण' ऽइत्यनशनायस्य शुष्मिण ऽइत्येत'त्प्र-प्रदातारं तारिष' ऽइति यजमानो वै दाता प्रयजमानं तारिष ऽइत्येत'दूर्जं नो धेहि द्विपदे चतुष्पद' ऽइत्याशि-षमाशास्ते यदु भिन्नायै प्रायश्चित्तिमाहोत्तरस्मिँस्तदन्वा-ख्यान ऽइति ॥ ७ ॥ यद्युपोखा * भिद्येत । याभिन्ना न वा स्थाल्युरुविली स्यात्तस्यामेनं पर्यावपेद्वाच्छैति वा ऽएषोखा या भिद्यतेऽनार्त्ता वा ऽइयं देवताऽनार्त्तायामिममनार्त्तं विभ-राणीति तत्रोखायै कपालं पुरस्तात्प्रास्यति तथो हैष-ऽएतस्यै स्वायै योनेर्न च्यवते ॥ ८ ॥ अथ मृदमा-हृत्य । उखां चोपशयां च † पिष्ट्वा सꣳसृज्योखां करोत्येतयै-वाऽऽवृताऽनुपहरन्न्यजुस्तूष्णीमेव पक्त्वा पर्यावपति कर्म्मणि-रेव तत्र प्रायश्चित्तिः पुनस्तत्कपालमुखायामुपसमस्योखां ‡ चोपशयां च पिष्ट्वा सꣳसृज्य निदधाति प्रायश्चित्तिभ्यः ॥ ९ ॥ अथ यद्युप ऽउत्योऽग्निरनुगच्छेत् । गार्हपत्यं वाव स गच्छति गार्हपत्याद्धि स ऽआहृतो भवति गार्हपत्यादेवैनं प्राञ्चमुद्धृत्योपसमाधायोखां § प्रवृञ्ज्यादेतयैवाऽऽवृताऽनु-पहरन्न्यजुस्तूष्णीमेव तां यदाग्निरारोहति ॥ १० ॥ अथ

---

(१) शु० य० अ० ११ क० ८३ । (२) शु० य० अ० ११ क० ८३ । (३) शु० स० अ० ११ क० ८३ । (४) शु० स० अ० ११ क० ८३ ।

* का० श्रौ० सू० १६ ७, ८ ।

† का० श्रौ० सू० १६ ७ ९ ।

‡ का० श्रौ० सू० १६ ७ ११ ।

§ का० श्रौ० सू० १६ ७ ६ ।

* प्रायश्चित्ती करोति। सर्वेभ्यो वा ऽएषु ऽएतं कामेभ्य ऽआधत्ते तद्यदेवाऽस्याऽत्र कामानां व्यवच्छिद्यते· ऽग्नावनुगते तदेवैतत्सन्तनोति सन्दधात्युभे प्रायश्चित्ती करोत्यङ्कुरप्रायश्चित्तिं चाऽग्निप्रायश्चित्तिं चाऽङ्कुरस्य पूर्वामथाऽग्नेस्तस्योक्तो बन्धुः॥ ११ ॥ स समिधाज्यस्योपहृत्य। आसीन ऽआहुतिं जुहोति † 'विश्वकर्म्मणे स्वाहे'त्यथोपोत्थाय ‡ समिधमादधाति 'पुनस्त्वाऽऽदित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैरि'त्येतास्त्वा देवताः पुनः समिन्धतामित्येतद् 'घृतेन त्वं तन्वं वर्द्धयस्व सत्याः सन्तु यजमानस्य कामा' ऽइति घृतेनाऽऽह त्वं तन्वं वर्द्धयस्व येभ्य ऽउ त्वां कामेभ्यो यजमान ऽआधत्त तेऽस्य सर्वे सत्याः सन्त्वित्येतत् ॥ १२ ॥ अथ यदि ‡‡ गार्हपत्योऽनुगच्छेत्। अरणी वाऽव स गच्छत्यरणिभ्याᳫं हि सऽआहृतो भवत्यरणिभ्यामेवैनं मथित्वोपसमाधाय प्रायश्चित्ती करोति॥ १३ ॥ अथ यदि § प्रसुत ऽआहवनीयोऽनुगच्छेत्। गार्हपत्यं वाऽव स गच्छति गार्हपत्याद्धि स ऽआहृतो भवति गार्हपत्यादेवैनं प्राञ्चः साङ्काशिनेन हृत्वोपसमाधाय प्रायश्चित्ती करोति यस्तस्मिन्काले ऽध्वरः स्यात्तामङ्कुरप्रायश्चित्तिं कुर्य्यात्समान्यग्निप्रायश्चित्तिः

* का० श्रौ० सू० २६ ७. २५,२६।

† का० श्रौ० सू० २६. ७. ७।

‡ का० श्रौ० सू० २६. ७ २।

( १ ) शु० सं० अ० १२ क० ४४। ( २ ) शु० सं० अ० १२ क० ४४।

‡‡ का० श्रौ० सू० २६ ७ ३।

§ का० श्रौ० सू० २६. ७ ४।

॥ १४ ॥ अथ * यद्याग्नीध्रीयोऽनु गच्छेत् । गार्हपत्यं वाऽव स गच्छति गार्हपत्याद्धि स ऽआहृतो भवति गार्हपत्याद्वेवैनं प्राञ्चमुत्तरेण सदो हृत्वोपसमाधाय प्रायश्चित्ती करोत्यथ यदि गार्हपत्योऽनुगच्छेत्तस्योक्तो बन्धुः ॥१५॥ (D)

षष्ठाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति षष्ठोऽध्यायः ॥ ६ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥ ४ ॥
कण्डिकासंख्या १००॥

[ रुक्मप्रतिमोकविध्यादि, उखाया आसन्द्यां निधानम्, उरयाग्नेः परिग्रहश्च ]

रुक्मं † प्रतिमुच्य बिभर्त्ति । सत्यꣳ हैतद्यद्रुक्मꣳ सत्यं वा ऽएतं यन्तुमर्हति सत्येनैतं देवा ऽअबिभरुꣳ सत्येनैवैनमेतद्बिभर्त्ति ॥१॥ तद्यत्तत्सत्यम् । असौ स ऽआदित्यꣳ स हिरण्मयो भवति ज्योतिर्वै हिरण्यं ज्योतिरेषोऽमृतꣳ हिरण्यममृतमेष परिमण्डलो भवति परिमण्डलो ह्येष ऽएकविꣳशति निर्बाध ऽएकविꣳशो ह्येष बहिष्टान्निर्बाधं बिभर्त्ति रश्मयो वा ऽएतस्य निर्बाधा बाह्यत ऽउ वा ऽएतस्य रश्मयꣳ ॥ २ ॥ यद्वेव रुक्मं प्रतिमुच्य बिभर्त्ति । असौ वा ऽआदित्य ऽएष रुक्मो नो हैतमग्निं मनुष्यो

* का० श्रौ० सू० १६ ७ ५ ।

( D ) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ८. ६ ४ कपि० ग० २५. १, तै० ग० ४. २. ३ ।

† का० श्रौ० सू० १६ ५ ३ ।

मनुष्यरूपेण यन्तुमर्हत्येतेनैव रूपेणैतद्रूपं विभर्त्ति ॥ ३ ॥ यद्वेव रुक्मं प्रतिमुच्य विभर्त्ति । रेतो वा ऽइदः सिक्तमयमग्निस्तेजो वीर्य्यः रुक्मोऽस्मिँस्तद्रेतसि तेजो वीर्य्यं दधाति ॥ ४ ॥ यद्वेव रुक्मं प्रतिमुच्य विभर्त्ति । एतद्वै देवा ऽअबिभयुर्य्यद्वै न ऽइममिह रक्षाᳬसि नाष्ट्रा न हन्युरिति तस्मा ऽएतमन्तिकाद्गोप्तारमकुर्वन्नमुमेवाऽऽदित्यमसौ वा ऽआदित्य ऽएष रुक्मस्तथैवाऽस्मा ऽअयमेतमन्तिकाद्गोप्तारं करोति ॥ ५ ॥ कृष्णाजिने निष्यूतो भवति । यज्ञो वै कृष्णाजिनं यज्ञो वा ऽएतं यन्तुमर्हति यज्ञेनैतं देवा ऽअबिभरुर्य्यज्ञेनैवैतमेतद्बिभर्त्ति लोमतश्छन्दाᳬसि वै लोमानि च्छन्दाᳬसि वा ऽएतं य्यन्तुमर्हन्ति छन्दोभिरेतं देवा ऽअबिभरुश्छन्दोभिरेवैनमेतद्बिभर्त्ति ॥ ६ ॥ अभि शुक्लानि च कृष्णानि च लोमानि निष्यूतो भवति । ऋक्सामयोर्हैते रूपे ऽऋक्सामे वा ऽएतं य्यन्तुमर्हत ऽऋक्सामाभ्यामेतं देवा ऽअबिभरुर्ऋक्सामाभ्यामेवैनमेतद्बिभर्त्ति शाणो रुक्मपाशस्त्रिवृत्तस्योक्तो बन्धुः ॥ ७ ॥ * तमुपरिनाभि विभर्त्ति । असौ वा ऽआदित्य ऽएष रुक्म ऽउपरि नाभ्यु वा ऽएषः ॥ ८ ॥ यद्वेवोपरिनाभि । अवाग्वै नाभे रेतः प्प्रजातिस्तेजो वीर्य्यः रुक्मो नेन्मे रेतः प्प्रजातिं तेजो वीर्य्यः रुक्मः प्प्रदहादिति ॥ ९ ॥ यद्वेवोपरिनाभि । एतद्वै पशोर्म्मेध्यतरं य्यदुपरिनाभि पुरीषसᳬहिततरं यदवाङ्नाभेस्तद्यदेव पशोर्म्मेध्यतरं तेनैनमेतद्बिभर्त्ति ॥ १० ॥

* अत्र शतम् ३६०० ।

युद्धेवोपरिनाभि । यद्वै प्राणस्याऽमृतमूर्द्ध्वं तन्नाभेरूर्द्ध्वंᳵ प्राणे-
रुच्चरत्यथ यन्मर्त्यं पराक्तन्नाभिमत्येति तद्यदेव प्राणस्या-
ऽमृतं तदेनमेतदभिसम्पादयति तेनेनमेतद्बिभर्त्ति ॥ ११ ॥
अथैनमासन्द्या * विभर्त्ति । इयं वा ऽआसन्द्यस्याᳵ हीदᳵ
सर्वमासन्नमियं वा ऽएतं स्यन्तुमर्हत्यनयैतं देवा ऽअवि-
भरुरनयैवैनमेतद्बिभर्त्ति ॥ १२ ॥ औदुम्बरी भवति । ऊर्ग्वै
रस ऽउदुम्बर ऽऊर्ज्जैवैनमेतद्रसेन विभर्त्यथो सर्वे ऽएते
वनस्पतयो यदुदुम्बरᳵ सर्वे वा ऽएतं वनस्पतयो यन्तुम-
र्हन्ति सर्वैरेतं वनस्पतिभिर्देवा ऽअविभरुᳵ सर्वैरेवैनमेतद्वन-
स्पतिभिर्विभर्त्ति ॥ १३ ॥ प्रादेशमात्र्यूर्द्ध्वा भवति । प्रादेश-
मात्रो वै गर्भो विष्णुर्योनिरेषा गर्भसम्मितां तद्योनिं
करोत्यरत्निमात्री तिरश्ची बाहुर्वा ऽअरत्निर्बाहु नो वै वीर्यं
क्रियते वीर्यसम्मितैव तद्भवति वीर्यं वा ऽएतं स्यन्तुमर्हति
वीर्येणैतं देवा ऽअविभरुर्वीर्येणैवैनमेतद्बिभर्त्ति ॥१४॥ चतुᳵ
स्रक्तयᳶ पादा भवन्ति । चतुᳵ स्रक्तीन्यनूच्यानि चतस्रो
वै दिशो दिशो वा ऽएतं स्यन्तुमर्हन्ति दिग्भिरेतं देवा-
ऽअविभरुर्दिग्भिरेवैनमेतद्बिभर्त्ति मौञ्जीभी रज्जुभिर्व्युता
भवति त्रिवृद्भिस्तस्योक्तो बन्धुर्मृदा दिग्धा तस्यो ऽएवो-
क्तोऽथो ऽअनतिदाहाय ॥१५॥ अथैनᳵ शिक्येन विभर्त्ति ।
इमे वै लोका ऽएषोऽग्निर्दिशᳵ शिक्यं दिग्भिर्हीमे लोकाᳵ
शक्नुवन्ति स्थातुं ऽयच्छक्नुवन्ति तस्माच्छिक्यं दिग्भिरे-
वैनमेतद्बिभर्त्ति षड्ड्यामं भवति षड्ढि दिशो मौञ्जं

* का० श्रौ० सू० १६ ५ २ ।

त्रिवृत्तस्योक्तो वन्धुर्म्मृद्वा दिग्धं तस्यो ऽएवोक्तोऽथो ऽअन-तिदाहाय ॥ १६ ॥ तस्याऽप ऽएव प्प्रतिष्ठा । अप्सु हीमे लोकाः प्प्रतिष्ष्ठिता ऽआदित्य ऽआसञ्जनमादित्ये हीमे लोका दिग्भिरासक्ताः स यो हैतदेवं वेदैतेनैव रूपेणैतद्रूपं विभर्त्ति ॥ १७ ॥ यद्वेवैनः शिक्येन विभर्त्ति । संवत्सर ऽएषो-ऽग्निर्ऋतवः शिक्यमृतुभिर्हि संवत्सरः शक्नोति स्थातुं ष्यच्छक्नोति तस्माच्छिक्यमृतुभिर्ह्येवैनमेतद्बिभर्त्ति षड्ड्यामं भवति षड्ढ्यृतवः ॥ १८ ॥ तस्याऽहोरात्रे ऽएव प्प्रतिष्ठा । अहोरात्रयोर्ह्ययः संवत्सरः प्प्रतिष्ष्ठितश्चन्द्रमा ऽआसञ्जनं चन्द्रमसि ह्ययः संवत्सर ऽऋतुभिरासक्तः स यो हैतदेवं वेदैतेनैव रूपेणैतद्रूपं विभर्त्ति तस्य ह वा ऽएष संवत्सर-भृतो भवति य ऽएवं वेद संवत्सरोपासितो हैव तस्य भवति य ऽएवं न वेदेत्यधिदेवतम् ॥ १९ ॥

## ❀ शतपथस्यार्धम् ❀

कण्डिकाः ३८१२ ॥



ऽएतस्याऽऽयुः श्रियो ऽएष रोचते'ऽग्निरमृतो ऽअभवद्वयोभि-
रि'तिसैर्वैर्वा ऽएष वयोभिरमृतोऽभव'द्यदेनं द्यौरजनयद्वि'ति
द्यौर्वा ऽएतमजनय'त्सुरेता' ऽइति सुरेता ह्येषा यस्या ऽएष
रेतः ॥ २ ॥ अथैनमिण्ड्वाभ्यां * परिगृह्णाति । नक्तोषासा
समनसा विरूपे ऽइत्यहोरात्रे वै 'नक्तोषासा समनसा
विरूपे धापयेते शिशुमेकः समीची' ऽइति यद्वै किञ्चा-
ऽहोरात्रयोस्तेनैतमेव समीची धापयेते 'द्यावा क्षामा रुक्मो-
ऽअन्तर्विभाती'ति हरन्नेतद्यजुर्जपतीमे वै द्यावापृथिवी
द्यावा क्षामा ते ऽएष यदन्तरा विभाति तस्मादेतद्धरन्यजु-
र्जपति 'देवा ऽअग्निं धारयन्द्रविणोदा' ऽइति परिगृह्य
निदधाति प्राणा वै देवा द्रविणोदास्त ऽएतमग्र ऽएवमधार-
यँस्तैरेवैनमेतद्धारयति ॥ ३ ॥ अथ † शिक्यपाशं प्रतिमु-
ञ्चते । 'विश्वा रूपाणि प्रतिमुञ्चते कविरि'त्यसौ वा-
ऽआदित्यः कविर्विश्वा रूपा शिक्यं 'प्रासावीद्भद्रं द्विपदे
चतुष्पदे' ऽइत्युद्यन्वा ऽएष द्विपदे चतुष्पदे च भद्रं प्रसौति
'वि नाकमख्यत्सविता वरेण्य' ऽइति स्वर्गो वै लोको
नाकस्तमेष ऽउद्यन्नेवाऽनुविपश्यत्य'नु प्रयाणमुषसो
विराजती'त्युषा वा ऽअग्रे व्युच्छति तस्या ऽएष व्युष्टिं

(१) शु० स० अ० ११ क० १। (२) शु० स० अ० १२ क० १। (३) शु० स० अ० १२ क० १।

* का० श्रौ० सू० १६ ५ ३-५।

(४) शु० स० अ० १२ क० २। (५) शु० स० अ० १२ क० २। (६) शु० स० अ० १२ क० २।

† का० श्रौ० सू० १६ ५ ६।

(७) शु० स० अ० १२ क० ३। (८) शु० स० अ० १२ ३। (९) शु० स अ० १२ क० ३। (१०) शु० स० अ० १२ क० ३।

विराजन्ननुदेति ॥ ४ ॥ अथैनमतो * विकृत्या विकरोति । इदमेवैतद्रेतः सिक्तं विकरोति तस्माद्योनौ रेतः सिक्तं विक्रियते ॥ ५ ॥ 'सुपर्णोऽसि गरुत्मानि'ति । वीर्यं वै सुपर्णो गरुत्मान् वीर्यमेवैनमेतदभि संस्करोति 'त्रिवृत्ते शिर' ऽइति त्रिवृतमस्य स्तोमꣳ शिरः करोति 'गायत्रं चक्षुरि'ति गायत्रं चक्षुः करोति 'बृहद्रथन्तरे पक्षावि'ति बृहद्रथन्तरे पक्षौ करोति 'स्तोमं ऽआत्मे'ति स्तोममात्मानं करोति पञ्चविꣳशं 'छन्दाꣳस्यङ्गानी'ति छन्दाꣳसि वा ऽएतस्याऽङ्गानि 'यजूꣳषि नामे'ति यदेनमग्निरित्याचक्षते तदस्य यजूꣳषि नाम 'साम ते तनूर्वामदेव्य'मित्यात्मा वै तनूरात्मा ते तनूर्वामदेव्यमित्येत'द्यज्ञायज्ञियं पुच्छमि'ति यज्ञायज्ञियं पुच्छं करोति 'धिष्ण्याः शफा' ऽइति धिष्ण्यैर्वा ऽएषोऽस्मिँल्लोके प्रतिष्ठितः 'सुपर्णोऽसि गरुत्मान्दिवं गच्छ स्वः पते'ति तदेनꣳ सुपर्णं गरुत्मन्तं कृत्वाऽऽह देवान्गच्छ स्वर्गं लोकं पतेति ॥ ६ ॥ तं वा ऽएतम् । अत्र पक्षपुच्छवन्तं विकरोति यादृग्वै योनौ रेतो विक्रियते तादृग्जायते तद्यदेतमत्र पक्षपुच्छवन्तं विकरोति तस्मादेषोऽमुत्र पक्षपुच्छवान् जायते ॥ ७ ॥ तꣳ हैके । एतया † विकृत्याऽभिमन्त्र्याऽग्न्यां

* का० श्रौ० सू० १६. ५. ७।

(१) शु० सं० अ० १२ क० ४। (२) शु० सं० अ० १२ क० ४। (३) शु० सं० अ० १२ क० ४। (४) शु० सं० अ० १२ क० ४। (५) शु० सं० अ० १२ क० ४। (६) शु० सं० अ० १२ क० ४। (७) शु० सं० अ० १२ क० ४। (८) शु० सं० अ० १२ क० ४। (९) शु० सं० अ० १२ क० ४। (१०) शु० सं० अ० १२ क० ४। (११) शु० सं० अ० १२ क० ४।

† का० श्रौ० सू० १६. ५. ९।

अथाऽध्यात्मम् । आत्मैवाऽग्निः प्राणाः शिक्यं प्राणैर्ह्ययमात्मा शक्नोति स्थातुं स्यच्छक्नोति तस्माच्छिक्यं प्राणैरेवैनमेतद्बिभर्त्ति षडुद्यामं भवति षड्ढि प्राणाः ॥ २० ॥ तस्य मन ऽएव प्रतिष्ठा । मनसि ह्ययमात्मा प्रतिष्ठितोऽन्नमासञ्जनमन्ने ह्ययमात्मा प्राणैरासक्तः स यो हैतदेवं वेदैतेनैव रूपेणैतद्रूपं बिभर्त्ति ॥ २१ ॥ अथैनमुखया बिभर्त्ति । इमे वै लोका ऽउखेमे वा ऽएतं लोका यन्तुमर्हन्त्येभिरेतं लोकैर्देवा ऽअबिभरुरेभिरेवैनमेतल्लोकैर्बिभर्त्ति ॥ २२ ॥ सा यदुखा नाम । एतद्वै देवा ऽएतेन कर्म्मणैतयाऽऽवृतेमांल्लोकानुदखनन्यदुदखनँस्तस्मादुत्खोत्खा ह वै तामुखेत्याचक्षते परोऽक्षं परोऽक्षमा हि देवाः ॥ २३ ॥ तद्वा ऽउखेति द्वे ऽअक्षरे । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्बिभर्त्ति सो ऽएव कुम्भी सा स्थाली तत्षट् षड्ऋतवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥ २४ ॥ अथैनमिण्ड्वाभ्यां * परिगृह्णाति । असौ वा ऽआदित्य ऽएषोऽग्निरहोरात्रे ऽइण्ड्वे ऽअमुं तदादित्यमहोरात्राभ्यां परिगृह्णाति तस्मादेषोऽहोरात्राभ्यां परिगृहीतः ॥ २५ ॥ यद्वेवैनमिण्ड्वाभ्यां † परिगृह्णाति । असौ वा ऽआदित्य ऽएषोऽग्निरिमा ऽउ लोकाविण्ड्वे ऽअमुं तदादित्यमाभ्यां लोकाभ्यां परिगृह्णाति तस्मादेष ऽआभ्यां लोकाभ्यां

* "उखोद्धारणसाधनभूतः परिमण्डलः' पदार्थविशेष 'इण्ड्व' इत्युच्यते" ।

† का० श्रौ० सू० १६. ५ ३।

परिगृहीतः परिमण्डले भवतः परिमण्डलौ हीमौ लोकौ मौञ्जे त्रिवृती तस्योक्तो बन्धुर्म्मृदा दिग्धे तस्यो ऽएवोक्तोऽथो ऽअनतिदाहाय ॥ २६ ॥ अथाऽतः सम्पदेव। आसन्दी चोखा च शिक्यं च रुक्मपाशश्चाऽग्निश्च रुक्मश्च तत्पट् षड्तवः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावत्तद्भवतीण्डे तदष्टावष्टाक्षरा गायत्री गायत्रोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावत्तद्भवति ॥ २७ ॥ अथ सर्वसम्पत्। चत्वारः पादाश्चत्वार्य्यनूच्यानि * शिक्यं च रुक्मपाशश्च यदु किञ्च रज्ज्व्यः शिक्यं तदनूखाऽग्नी रुक्मस्तत्त्रयोदश त्रयोदश मासाः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावत्तद्भवति ॥ २८ ॥ (A)

सप्तमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ रुक्मप्रतिमुञ्चनादि ]

तं तिष्ठन्प्रतिमुञ्चते। असौ वा ऽआदित्य ऽएष रुक्मस्तिष्ठतीव वा ऽअसावाऽऽदित्योऽथो तिष्ठन्वै वीर्य्यवत्तर ऽउदङ् प्राङ् तिष्ठँस्तस्योक्तो बन्धुः॥१॥ 'दृशानो रुक्मऽउर्व्या व्यद्यौदि'ति। दृश्यमानो ह्येष रुक्म ऽउर्व्या विद्योतते 'दुर्म्मर्षमायुः श्रिये रुचान' ऽइति दुर्म्मरं ब्रा-

* "मौञ्ज त्रिवृद्भवति" ( का० श्रौ० सू० १७ २ ६ )।

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ८ ७ १।

(१) शु० स० अ० ११ क० १। (२) शु० स० अ० ११ क० १।

चितिं चिन्वन्ति * द्रोणचितं वा रथचक्रचितं वा कङ्क-चितं वा प्र ऽउगचितं वोभयतः प्र ऽउगं वा समुह्यपुरीषं वा न तथा कुर्य्याद्यथा पक्षपुच्छवन्तं गर्भं परिवृश्च्येत्ता-दृक्तत्तस्मादेनः सुपर्णचितमेव चिनुयात् ॥ ८ ॥ तमे-तया विकृत्या । इत ऽऊर्द्ध्वं प्राञ्चं प्रगृह्णात्यसौ वा ऽआदित्य-ऽएषोऽग्निरमुं तदादित्यमित ऽऊर्द्ध्वं प्राञ्चं दधाति तस्मा-दसावादित्य ऽइत ऽऊर्द्ध्वः प्राङ् धीयते परोबाहु प्रगृह्णाति परोबाहु ह्येष ऽइतोऽथैनमुपाऽवहरति तमुपाऽवहृत्योपरिनाभि धारयति तस्योक्तो बन्धुः ॥ ९ ॥ अथ † विष्णुक्रमान्क्र-मते । एतद्वै देवा विष्णुर्भूत्वेमाँल्लोकानक्रमन्त यद्विष्णु-र्भूत्वाऽक्रमन्त तस्माद्विष्णुक्रमास्तथैवैतद्यजमानो विष्णु-र्भूत्वेमाँल्लोकान्क्रमते ॥ १० ॥ स यः स विष्णुर्यज्ञः सः । स यः स यज्ञोऽयमेव स योऽयमग्निरुखायामेतमेव तद्देवा-ऽआत्मानं कृत्वेमाँल्लोकानक्रमन्त तथैवैतद्यजमान ऽएतमे-वाऽऽत्मानं कृत्वेमाँल्लोकान्क्रमते ॥ ११ ॥ उदङ् प्राङ् तिष्ठन् । एतद्वै तत्प्रजापतिर्विष्णुक्रमैरुदङ् प्राङ् तिष्ठ-न्प्रजा ऽअसृजत तथैवैतद्यजमानो विष्णुक्रमैरुदङ् प्राङ् तिष्ठन्प्रजाः सृजते ॥ १२ ॥ '[1]विष्णोः क्रमोऽसी'ति । विष्णुर्हि भूत्वा क्रमते '[2]सपत्नहे'ति सपत्नान्ह्यत्र हन्ति

* द्रोणश्चतुरस्रस्तदाकारा चितिर्द्रोणचित्, रथचक्रं वृत्तम् तदाकारा वृत्ता चिती रथचक्रचित्, कङ्को बकस्तदाकारा चिति कङ्कचित्, प्रउगं शकटस्याग्रम् तदग्रभागस्थमस्ति तदाकारा चिति प्रउग-चित्, उभयतस्त्र्यस्रद्वयाकारा मध्यस्थूला चिति उभयतः प्रउगचित्, अन्यत आनीय समूह्य समू-हीकृत्य पुरीकृत पुरीषो मृत्तिका तदिव चिति समुह्यपुरीषचिदित्युच्यते (शु० सू० सू० ४. १) इति।

† का० श्रौ० सू० १६. ५ ११-१३।

(१) शु० स० अ० १२ क० ५।, (२) शु० स० अ० १२ क० ५।

'गायत्रं छन्द ऽआरोहे'ति गायत्रं छन्द ऽआरोहति 'पृथिवी-मनु विक्रमस्वे'ति पृथिवीमनु विक्रमते प्प्रहरति पादं क्रमत-ऽऊर्द्धमग्निमुद्गृह्णात्यूर्द्ध्वो हि रोहति ॥ १३ ॥ 'विष्णोः क्रमोऽसी'ति । विष्णुर्हि भूत्वा क्रमते'ऽभिमातिहे'त्यभि-मातीर्ह्यत्र हन्ति 'त्रैष्टुभं छन्द ऽआरोहे'ति त्रैष्टुभं छन्द-ऽआरोह'त्यन्तरिक्षमनु विक्रमस्वे'त्यन्तरिक्षमनु विक्रमते प्प्रहरति पादं क्रमत ऽऊर्द्धमग्निमुद् गृह्णात्यूर्द्ध्वो हि रोहति ॥ १४ ॥ 'विष्णोः क्रमोऽसी'ति । विष्णुर्हि भूत्वा क्रम-ते'ऽरातीयतो हन्ते'त्यरातीयतो ह्यत्र हन्ति 'जागतं छन्द ऽआरोहे'ति जागतं छन्द ऽआरोहति 'दिवमनु विक्रम-स्वे'ति दिवमनु विक्रमते प्प्रहरति पादं क्रमत ऽऊर्द्धमग्नि-मुद् गृह्णात्यूर्द्ध्वो हि रोहति ॥ १५ ॥ 'विष्णोः क्रमोऽसी'ति। विष्णुर्हि भूत्वा क्रमते 'शत्रूयतो हन्ते'ति शत्रूयतो ह्यत्र ह'न्त्यानुष्टुभं छन्द ऽआरोहे'त्यानुष्टुभं छन्द ऽआरोहति 'दिशोऽनु विक्रमस्वे'ति सर्वा दिशोऽनु वीक्षते न प्प्रहरति पादं नेदिमाँल्लोकानतिप्प्रणश्यानी'त्यूर्द्धमेवाऽग्निमुद् गृह्णाति सᳪ ह्यारोहति ॥ १६ ॥ (B)

सप्तमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

---

(३) शु० स० अ० १२ क० ५। (२) शु० स० अ० १२ क० ५। (३) शु०
(१) शु० स० अ० १२ क० ५। (२) शु० स० अ० १२ क० ५। (५) शु० स० अ० १२ क० ५।
स० अ० १२ क० ५। (४) शु० स० अ० १२ क० ५। (८) शु० स०
(६) शु० स० अ० १२ क० ५। (७) शु० स० अ० १२ क० ५। (१०) शु० स० अ० १२ क० ५।
अ० १२ क० ५। (९) शु० स० अ० १२ क० ५। (१२) शु० स० अ० १२ क० ५। (११) शु०
(११) शु० सं० अ० १२ क० ५। (१२) शु० स० अ० १२ क० ५।
स० अ० १२ क० ५। (१४) शु० स० अ० १२ क० ५।

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ८, ७ २, कठ० १६ ८, मै० स० ११ ८, तै० स० ४ १ १०।

[ विष्णुक्रमः ]

अथैनमिति * प्रगृह्णाति । एतद्वै देवा ऽअकामयन्त पर्ज्जन्यो रूपꣳ स्यामेति त ऽएतेनाऽऽत्मना पर्ज्जन्यो रूपमभवँस्तथैवैतद्यजमान ऽएतेनाऽऽत्मना पर्ज्जन्यो रूपं भवति ॥ १ ॥ 'अक्रन्ददग्निस्तनयन्निव द्यौरि'ति । क्रन्दतीव हि पर्ज्जन्यस्तनय'न्क्षामा रेरिहद्वीरुधः समञ्जन्नि'ति क्षमा वै पर्ज्जन्यो रेरिह्यमाणो वीरुधः समनक्ति 'सद्यो जज्ञानो वि हीमिद्धो ऽअख्य'दिति सद्यो वा ऽएष जज्ञान ऽइदꣳ सर्वं विख्यापयत्या रोदसी भानुना भात्यन्तरि'तीमे वै द्यावापृथिवी रोदसी ते ऽएष भानुना भाति परोबाहु प्रगृह्णाति परोबाहु हि पर्ज्जन्यः ॥ २ ॥ अथैन'मुपाऽवहरति । एतद्वै योऽस्मिँल्लोके रसो यदुपजीवनं तेनैतत्सहोर्द्ध्वऽइमाँल्लोकान्रोहत्यग्निर्वा ऽअस्मिँल्लोके रसोऽग्निरुपजीवनं तद्यत्तावदेव स्यान्न हाऽस्मिँल्लोके रसो नोपजीवनꣳ स्यादथ यत्प्रत्यवरोहत्यस्मिन्नेवैतल्लोके रसमुपजीवनं दधाति ॥ ३ ॥ यद्वेव प्रत्यवरोहति । एतद्वा ऽएतदिमाँल्लोकानित ऽऊर्द्ध्वो रोहति † स स पराङिव रोह ऽइयमु वै प्रतिष्ठा तद्यत्तावदेव स्यात्प्रहाऽस्माल्लोकाद्यजमानश्च्यवेताऽथ यत्प्रत्यवरोहतीमामेवैतत्प्रतिष्ठामभिप्रत्यैतस्यामेवैतत्प्रतिष्ठायां प्रतिति-

* का० श्रौ० सू० १६ ५ १४।

(१) शु० स० अ० १२ क० ६। (२) शु० स० अ० १२ क० ६। (३) शु० स० अ० १२ क० ६। (४) शु० स० अ० १२ क० ६।

† का० श्रौ० सू० १६ ५ १५।

‡ 'स पराङिव' इति पाठ 'ज' पुस्तके।

ष्ठति ॥ ४ ॥ यदेव प्रत्यवरोहति। एतद्वा ऽएतदिमाँल्लोकानित ऽऊर्द्ध्वो जयति स स पराङिव जयो यो वै पराङेव जयत्यन्ये वै तस्य जितमन्ववस्यन्त्यथ य ऽउभयथा जयति तस्य तत्र कामचरणं भवति तद्यत्प्रत्यवरोहतीमानेवैतल्लोकानितश्चोर्द्ध्वानमुतश्चाऽर्वाचो जयति ॥ ५ ॥
'अग्नेऽभ्यावर्त्तिन्। अभि मा निवर्त्तस्वाऽग्ने ऽअङ्गिरः पुनरूर्ज्जा सह रय्ये'त्येतेन मा सर्वेणाऽभि निवर्त्तस्वेत्येतच्चतुष्कृत्वः प्रत्यवरोहति चतुर्हि कृत्व ऽऊर्द्ध्वो रोहति तद्यावत्कृत्व ऽऊर्द्ध्वो रोहति तावत्कृत्वः प्रत्यवरोहति तमुपाऽवहृत्योपरिनाभि धारयति तस्योक्तो बन्धुः ॥ ६ ॥ अथैन * मभिमन्त्रयते। आयुर्वा ऽअग्निरायुरेवैतदात्मन्धत्त 'ऽआ त्वाहार्षमि'त्याहैनः हर'न्त्यन्तरभू'रित्यायुरेवैतदात्मन्धत्ते 'ध्रुवस्तिष्ठाऽविचाचलिरि'त्यायुरेवैतद् ध्रुवमन्तरात्मन्धत्ते 'विशस्त्वा सर्वा वाञ्छन्त्वि'त्यन्नं वै विशोऽन्नं त्वा सर्वं वाञ्छत्वित्येत'न्मा त्वद्राष्ट्रमधिभ्रशदि'ति श्रीर्वै राष्ट्रं मा त्वच्छ्रीरभिभ्रशदित्येतत् ॥७॥ [ अर्धप्रपाठकः ५१॥ ] अथ † शिक्यपाशश्च रुक्मपाशं चोन्मुञ्चते। वारुणो वै पाशो वरुणपाशादेव तत्प्रमुच्यते वारुण्यर्चा स्वेनैव तदात्मना स्वया

(१) शु० सं० अ० १२ क० ७–१०।
* का० श्रौ० सू० १५. ५. १६।
(२) शु० सं० अ० १२ क० ११। (३) शु० सं० अ० १२ क० ११। (४) शु० सं० अ० १२ क० ११। (५) शु० सं० अ० १२ क० ११। (६) शु० सं० अ० १२ क० ११।
† का० श्रौ० सू० १५. ५ १७

देवतया वरुणपाशात्प्रमुच्यत 'ऽउदुत्तमं वरुणपाशमस्मदवा-
धमं वि मध्यमꣳ श्रथाये'ति यथैव यजुस्तथा बन्धु'रथा
वयमादित्य व्रते तवाऽनागसो ऽअदितये स्यामे'तीयं वा-
ऽअदितिरनागसस्तुभ्यं चाऽस्यै च स्यामेत्येतत् ॥८॥ अथनै-
मिति * प्रगृह्णाति । एतद्वा ऽएनमदो विक्रयेत ऽउर्द्ध्वं
प्राञ्चं प्रगृह्णाति तं तत ऽइति प्रगृह्णाति तद्यत्तावदेवाऽभ-
विष्यदत्र हैवैष व्यरꣳस्यताऽथ यदेनमिति प्रगृह्णाति
तस्मादेष ऽइतीत्वाऽथेति पुनरैति ॥ ९ ॥ 'अग्रे बृहन्नुषसा-
मूर्द्ध्वो ऽअस्थादि'ति । अग्रे ह्येष बृहन्नुषसामूर्द्ध्वस्तिष्ठति
'निर्जगन्वान्तमसो ज्योतिषाऽगादि'ति निर्जगन्वाञ्वा ऽएष
रात्र्यै तमसोऽह्ना ज्योतिषै'त्यग्निर्भानुना रुशता स्वङ्ग' ऽइत्य-
ग्निर्वा ऽएष भानुना रुशता स्वङ्ग 'ऽआ जातो विश्वा सद्मा-
न्यप्रा' ऽइतीमे वै लोका विश्वा सद्मानि तानेष जात-
ऽआपूरयति परोवाहु प्रगृह्णाति परोवाहु ह्येष ऽइतोऽथैनमुपा-
ऽवहरतीमामेवैतत्प्रतिष्ठामभिप्रत्यैत्यस्यामेवैतत्प्रतिष्ठायां प्र-
तितिष्ठति जगत्या जगती हेमाँल्लोकानमुतोऽर्वाचो व्यश्नुते
॥ १० ॥ † 'हꣳसः शुचिषदि'ति । असौ वा ऽआदित्यो
हꣳसः शुचिषद्वसुरन्तरिक्षसदिति वायुर्वै 'वसुरन्तरिक्ष-

(१) शु० सं० अ० १२ क० १२। (२) शु० सं० अ० १२ क० १२।
* का० श्रौ० सू० १६ ५. १४ म।
(३) शु० सं० अ० १२ क० १३। (४) शु० सं० अ० १२ क० १३। (५) शु०
सं० अ० १२ क० १३। (६) शु० सं० अ० १२ क० १३।
† का० श्रौ० सू० १६.५ १८, १९।
(७) शु० सं० अ० १२ क० १४। (८) शु० सं० अ० १२ क० १४।

सद्धोता वेदिषदि'त्यग्निर्वै होता वेदिषदतिथिरिति सर्वेषां वा ऽएष भूतानामतिथिर्दुरोणसदि'ति विषमसदित्येत-
न्नृषदि'ति प्राणो वै नृषन्मनुष्या नरस्तद्योऽयं मनुष्येषु प्राणोऽग्निस्तमेतदाह 'वरसदि'ति सर्वेषु ह्येष वरेषु सन्नऽ-
'ऋतसदि'ति सत्यसदित्येत'द्व्योमसदि'ति सर्वेषु ह्येष व्योमसु सन्नो'ऽब्जा गोजा' ऽइत्यब्जाश्च ह्येष गोजाश्च-
'र्तजा' ऽइति सत्यजा ऽइत्येत'दद्रिजा' ऽइत्यद्रिजा ह्येष 'ऋतमि'ति सत्यमित्येत'द्वृहदि'ति निदधाति वृहद्ध्येष
तद्यदेष तदेनमेतत्कृत्वा निदधाति ॥ ११ ॥ द्वाभ्यामक्षराभ्याम् । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य
मात्रा तावतैवैनमेतन्निदधाति ॥ १२ ॥ अथैनमुपतिष्ठते । एतद्वा ऽएनमेतल्लघूयतीव यदेनेन सहेति चेति चेमाँल्लोका-
न्क्रमते तस्मा ऽएवैतन्निह्नुतेऽहिंसायै ॥ १३ ॥
यद्वेवोपतिष्ठते * । एतद्वै देवा ऽअबिभयुर्यद्वै नोऽयमिमाँ-
ल्लोकाननन्तिकान्न हिंस्यादिति तदेभ्य ऽएवैनमेतल्लोकेभ्यो-
ऽशमयँस्तथैवैनमयमेतदेभ्यो लोकेभ्यः शमयति ॥ १४ ॥
'सीद त्वं मातुः । अस्या ऽउपस्थेऽन्तरग्ने रुचा त्वम् शिवो भूत्वा मह्यमग्ने ऽअथो सीद शिवस्त्वमि'ति

(१) शु० स० अ० १२ क० १४। (२) शु० स० अ० १२ क० १४। (३) शु० स० अ० १२ क० १४। (४) शु० स० अ० १२ क० १४। (५) शु० स० अ० १२ क० १४। (६) शु० स० अ० १२ क० १४। (७) शु० स० अ० १२ क० १४। (८) शु० स० अ० १२ क० १४। (९) शु० स० अ० १२ क० १४। (१०) शु० स० अ० १२ क० १४।

* का० श्रौ० सू० १५ ५ २१, २२।

(११) शु० स० अ० १२ क० १५-१७।

शिवꣳ-शिव ऽइति शमयत्येवैनमेतदहिꣳसायै तथो हैष ऽइमाँल्लोकाञ्छान्तो न हिनस्ति ॥ १५ ॥ त्रिभिरुपतिष्ठते । त्रय ऽइमे लोका ऽअथो त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवाऽस्मा ऽएतन्निह्नुतेऽथो तावतैवैनमेतदेभ्यो लोकेभ्यꣳ शमयति ॥ १६ ॥ (C)

सप्तमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ वात्सप्रोपस्थानम् ]

अथ * वात्सप्रेणोपतिष्ठते । एतद्वै प्रजापतिर्विष्णुक्रमैꣳ प्रजाꣳ सृष्ट्वा ताभ्यो वात्सप्रेणाऽऽयुष्यमकरोत्तथैवैतद्यजमानो विष्णुक्रमैꣳ प्रजाꣳ सृष्ट्वा ताभ्यो वात्सप्रेणाऽऽयुष्यं करोति ॥ १ ॥ स हैष दाक्षायणहस्तꣳ । यद्वात्सप्रं तस्माद्यं जातं कामयेत सर्वमायुरियादिति वात्सप्रेणैनमभिमृशेत्तदस्मै जातायाऽऽयुष्यं करोति तथो ह स सर्वमायुरेत्यथ यं कामयेत वीर्य्यवान्त्स्यादिति विकृत्यैनं पुरस्तादभिमन्त्रयेत तथो ह स वीर्य्यवान्भवति ॥ २ ॥ 'दिवस्परि प्रथमं जज्ञे ऽअग्निरि'ति । प्राणो वै दिवꣳ प्राणाद्ध वा ऽएष प्रथममजायता'ऽस्मद्द्वितीयं परि जातवेदा' ऽइति यदेनमदो द्वितीयं पुरुषविधोऽजनय'त्तृतीयमप्स्वि'ति यदेनमदु-

(c) एतद्ब्राह्मणस्था विद्या अ यत्राऽऽपुराम्नायन्ते यथा—का० शा० ८ ७ २ ३, कठ० ३९ ८ कपि० ३५ १, मै० सं० ३३ ८, तै० सं० ४ १ १०।

* का० श्रौ० सू० १५. ५ २१।

(१) यु० मा० अ० १२ क० १८। (२) यु० मा० अ० १२ क० १८। (३) यु० मा० अ० १२ क० १८।

स्तृतीयमन्नयोऽजनय'न्नृमणा ऽअजस्रमि'ति प्रजापतिर्वै नृमणा ऽअग्निरजस्र 'ऽइन्धान ऽएनं जरते स्वाधीरि'ति यो वा ऽएनमिन्धे स ऽएनं जनयते स्वाधीः ॥ ३ ॥ 'विद्मा ते ऽअग्ने त्रेधा त्रयाणी'ति । अग्निर्वायुरादित्य-ऽएतानि ह्यऽस्य तानि त्रेधा त्रयाणि 'विद्मा ते धाम विभृता पुरुत्रे'ति यदिदं बहुधा विह्रियते 'विद्मा ते नाम परमं गुहा यदि'ति यविष्ठ ऽइति वा ऽअस्य तन्नाम परमं गुहा 'विद्मा तमुत्सं यत ऽआ जगन्थे'त्यापो वा ऽउत्सो-ऽद्भ्यो वा ऽएष प्रथममाजगाम ॥ ४ ॥ 'समुद्रे त्वा नृमणा ऽअप्स्वन्तरि'ति प्रजापतिर्वै नृमणा ऽअप्सु त्वा प्रजापतिरित्येत'न्नृचक्षा ऽईधे दिवो ऽअग्न ऽऊधन्नि'ति प्रजापतिर्वै नृचक्षा ऽआपो दिव ऽऊध'स्तृतीये त्वा रजसि तस्थिवा॑ꣳसमि'ति द्यौर्वै तृतीयः रजो'ऽपामुपस्थे महिषा ऽअवर्द्धन्नि'ति प्राणा वै महिषा दिवि त्वा प्राणा-ऽअवर्द्धन्नित्येतत् ॥ ५ ॥ ता ऽएता ऽएकव्याख्यानाः । एतमेवाऽभि ता ऽआग्नेय्यस्त्रिष्टुभस्ता यदाग्नेय्यस्तेना-ऽग्निरथ यत्त्रिष्टुभो यदेकादश तेनेन्द्र ऐन्द्राग्नोऽग्निर्यो-वानग्निर्योवत्यस्य मात्रा तावतैवैनमेतदुपतिष्ठत ऽइन्द्राग्नी वै सर्वे देवाः सर्वदेवत्योऽग्निर्योवानग्निर्योवत्यस्य मात्रा

---

(१) शु० सं० अ० १२ क० १८। (२) शु० सं० अ० १२ क० १८। (३) शु० सं० अ० १२ क० १९। (४) शु० सं० अ० १२ क० १९। (५) शु० सं० अ० १२ क० १९। (६) शु० सं० अ० १२ क० १९। (७) शु० सं० अ० १२ क० २०। (८) शु० सं० अ० १२ क० २०। (९) शु० सं० अ० १२ क० २०। (१०) शु० सं० अ० १२ क० २०।

तावत्तैवैनमेतदुपतिष्ठते ॥ ६ ॥ यद्वेव विष्णुक्रमवात्सप्रे भवतः । विष्णुक्रमैर्वै प्रजापतिरिमं लोकमसृजत वात्सप्रेणाऽग्निं विष्णुक्रमैर्वै प्रजापतिरन्तरिक्षमसृजत वात्सप्रेण वायुं विष्णुक्रमैर्वै प्रजापतिर्दिवमसृजत वात्सप्रेणाऽऽदित्यं विष्णुक्रमैर्वै प्रजापतिर्दिशोऽसृजत वात्सप्रेण चन्द्रमसं विष्णुक्रमैर्वै प्रजापतिर्भूतमसृजत वात्सप्रेण भविष्यद्विष्णुक्रमैर्वै प्रजापतिर्वित्तमसृजत वात्सप्रेणाऽऽशां विष्णुक्रमैर्वै प्रजापतिरहरसृजत वात्सप्रेण रात्रिं विष्णुक्रमैर्वै प्रजापतिः पूर्वपक्षानसृजत वात्सप्रेणाऽपरपक्षान्विष्णुक्रमैर्वै प्रजापतिरर्द्धमासानसृजत वात्सप्रेण मासान्विष्णुक्रमैर्वै प्रजापतिॠतूनसृजत वात्सप्रेण संवत्सरं तद्यद्विष्णुक्रमवात्सप्रे भवतऽएतदेव तेन सर्वं सृजते ॥ ७ ॥ यद्वेव विष्णुक्रमवात्सप्रे भवतः । विष्णुक्रमैर्वै प्रजापतिः स्वर्गं लोकमभिप्राऽयात्सऽएतदवसानमपश्यद्वात्सप्रं तेनाऽवास्यदुप्रदाहाय यद्धि युक्तं न विमुच्यते प्र तद्दह्यते तथैवैतद्यजमानो विष्णुक्रमैरेव स्वर्गं लोकमभिप्रयाति वात्सप्रेणाऽवस्यति ॥ ८ ॥ स वै विष्णुक्रमाश्क्रान्त्वा । अथ तदानीमेव वात्सप्रेणोपतिष्ठते यथा प्रयायाऽथ तदानीमेव विमुञ्चेत्तादृक्तद्देवानां वै विधामनु मनुष्यास्तस्मादु हेदमुत मानुषो ग्रामः प्रयायाऽथ तदानीमेवाऽवस्यति ॥ ९ ॥ तद्वा ऽअहोरात्रेऽएव विष्णुक्रमा भवन्ति । अहोरात्रे वात्सप्रमहोरात्रेऽएव तद्यत्यहोरात्रे क्षेम्यो भवति तस्मादु हेदमुत मानुषो ग्रामोऽहोरात्रे या त्वाऽहोरात्रे क्षेम्यो

भवति ॥ १० ॥ स वा ऽअर्द्धमेव संवत्सरस्य विष्णुक्रमान्क्रमते । अर्द्धं वात्सप्रेणोपतिष्ठते मद्ध्ये ह संवत्सरस्य स्वर्गो लोकः स यत्कनीयोऽर्द्धात्क्रमेत न हैतछ स्वर्गं लोकमभिप्राप्नुयादथ यद् भूयोऽर्द्धात्पराङ् हैतछ स्वर्गं लोकमतिप्रणश्येदथ यदर्द्धं क्रमतेऽर्द्धमुपतिष्ठते तत्सम्प्रति स्वर्गं लोकमाप्त्वा विमुञ्चते ॥ ११ ॥ ताभ्यां वै विपर्य्यासमेति । यथा महान्तमध्वानं विमोकः समश्नुवीत तादृक्तस्य वै पुरस्ताच्चोपरिष्टाच्चोभे विष्णुक्रमवात्सप्रे समस्यत्यहर्वै विष्णुक्रमा रात्रिर्वात्सप्रमेतद्वा ऽइदः सर्वं प्रजापतिः प्रजनयिष्यँश्च प्रजनयित्वा चाऽहोरात्राभ्यामुभयतः पर्य्यगृह्णात्तथैवैतद्यजमान ऽइदः सर्वं प्रजनयिष्यँश्च प्रजनयित्वा चाऽहोरात्राभ्यामुभयतः परिगृह्णाति ॥ १२ ॥ तदाहुः । यदहर्विष्णुक्रमा रात्रिर्वात्सप्रमथोभेऽएवाऽहन्भवतो न रात्र्यां कथमस्याऽपि रात्र्यां कृते भवतऽइत्येतद्वा ऽएने ऽअदो दीक्षमाणः पुरस्तादपराह्णे ऽउभे समस्यति रात्रिर्हैतद्यदपराह्णोऽथैने ऽएतत्सन्निवप्स्यन्नुपरिष्टात्पूर्वाह्णे ऽउभे समस्यत्यहर्हैतद्यत्पूर्वाह्ण ऽएवमु हाऽस्योभेऽएवाऽहन्कृते भवत ऽउभे रात्र्याथं ॥ १३ ॥ स यदहः सन्निवप्स्यन्त्स्यात् । तदहः * प्रातरुदित ऽआदित्ये भस्मेव प्रथममुद्वपति भस्मोद्धुप्य वाचं विसृजते वाचं विसृज्य समिधमादधाति समिधमाधाय भस्माऽपोऽभ्यवहरति यथैव तस्याऽभ्यवहरणं तथाऽपाऽऽदाय भस्मनः प्रत्येत्यो-

* का० श्रौ० सू० १६. ६ १।

स्वायामोऽप्युपतिष्ठतेऽथ प्रायश्चित्ती करोति ॥ १४ ॥ स * यदि विष्णुक्रमीयमहः स्यात् । विष्णुक्रमाङ्क्रान्त्वा वात्सप्रेणोपतिष्ठेताऽथ यदि वात्सप्रीयं वात्सप्रेणोपस्थाय विष्णुक्रमाङ्क्रान्त्वा वात्सप्रमन्ततः कुर्य्यान्न विष्णुक्रमानन्ततः कुर्य्याद्यथा प्रयाय न विमुञ्चेत्तादृक्तदथ यद्वात्सप्रमन्ततः करोति प्रतिष्ठा वै वात्सप्रं यथा प्रतिष्ठाप्येदवसाययेत्तादृक्तत्तस्माद्वात्सप्रमेवाऽन्ततः कुर्य्यात् ॥ १५ ॥ (D)

सप्तमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ अथ वनीवाहनम् ]

( तत्र गार्हपत्यचयनीयाग्निप्रणयनम्, उख्याग्नेः स्थापनादिविधिश्च )

वनीवाह्येताग्निं विभ्रदित्याहुः । देवाश्चाऽसुराश्चोभये प्राजापत्या ऽअस्पर्द्धन्त ते देवाश्चक्रमचरञ्छालमसुराऽआसँस्ते देवाश्चक्रेण चरन्त ऽएतत्कर्म्माऽपश्यँश्चक्रेण हि वै देवाश्चरन्त ऽएतत्कर्म्माऽपश्यँस्तस्माद्वनस ऽएव पौरोडाशेषु यजूंष्यनसोऽग्नौ ॥ १ ॥ स यो † वनीवाह्यते । देवान्कर्म्मणेति देवढः हाऽस्य कर्म्म कृतं भवत्यथ यो

* का० श्रौ० सू० १६ ६ ५।

( D ) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० शा० ८, ७ ४, मठ० १६ १, मै० स० ११ ७. १, तै० स० ४ २. २।

† "प्रागनः कृष्णेत्यारभ्य वासेऽनडुहश्चेनदन्तं कर्म वनीवाहनमित्युच्यते" ( का० श्रौ० सू० १६ ६ १५–२२ )।

न वनीवाह्यतेऽसुरान्कुर्म्मणैत्यसुर्य्यं हाऽस्य कर्म्म कृतं भवति ॥ २ ॥ तद्धैक ऽआहुः । स्वयं वा ऽएष वनीवाहितो विष्णुक्रमैर्वा ऽएष प्रयाति वात्सप्रेणाऽवस्यतीति न तथा विद्याद्दैवं वा ऽअस्य तत्प्रयाणं यद्विष्णुक्रमा दैवमवसानं यद्वात्सप्रमथाऽस्येदं मानुषं प्रयाणं यदिदं प्रयाति मानुषमवसानं यदवस्यति ॥ ३ ॥ प्रजापतिरेषोऽग्निः । उभयम्वेतत्प्रजापतिर्यच्च देवा यच्च मनुष्यास्तद्यद्विष्णुक्रमवात्सप्रे भवतो यद्देवाऽस्य दैवं रूपं तदस्य तेन संस्करोत्यथ यद्वनीवाह्यते यदेवाऽस्य मानुषं रूपं तदस्य तेन संस्करोति स ह वा ऽएतं सर्वं कृत्स्नं प्रजापतिं संस्करोति य ऽएवं विद्वान्वनीवाह्यते तस्माद् * वनीवाह्येतैव ॥ ४ ॥ स यत्रैतत् प्रयास्यन्त्स्यात् । तदुहरुत्तरतोऽग्नेः † प्रागनसऽउपस्थाप्याऽथाऽस्मिन्त्समिधमादधात्येतद्वा ऽएनं देवाऽएष्यन्तं पुरस्तादन्नेनाऽप्रीणन्नेतया समिधा तथैवैनमयमेऽएष्यन्तं पुरस्तादन्नेन प्रीणात्येतया समिधा ॥ ५ ॥ तदेष्यन्तं पुरस्तादन्नेन प्रीणात्येतया समिधा ॥ 'समिधाऽग्निं दुवस्यते'ति । समिधाऽग्निं नमस्यतेत्येतद्‌ 'घृतैर्बोधयताऽतिथिमास्मिन्हव्या जुहोतने'ति घृतैर्ह बोधयताऽतिथिमो ऽअस्मिन्हव्यानि जुहुतेत्येतद्धुत्वत्येत्यायैवैनमेतद्बोधयति ॥ ६ ॥ अथैनमुपयच्छति ‡ । 'उदु त्वा विश्वे देवा ऽअग्ने भरन्तु चित्तिभिरि'ति विश्वे वा ऽएत-

* 'व्रनीवाह्यैतैव' इति पाठः 'ख' पुस्तके ।
† का० श्रौ० सू० १६. ६. १५ ।
(१) शु० सं० अ० १२ क० ३० । (२) शु० सं० अ० १२ क० ३० ।
‡ का० श्रौ० सू० १६. ६. १६ ।
(३) शु० सं० अ० १२ क० ३१ ।

मग्ने देवाश्चित्तिभिरुदभरन्नेतद्ध्येषां तदा चित्तमासीत्तथैवै-
नमयमेतच्चितिभिरुद्भरत्येतद्ध्यस्य तदा चित्तं भवति 'स नो
भव शिवस्त्वꣳ सुप्रतीको विभावसुरि'ति यथैव यजुस्तथा
बन्धुस्तं दक्षिणत ऽउदश्चमादधाति तस्योक्तो बन्धुꣳ
स्थाल्यां गार्हपत्यꣳ समुप्याऽपरमादधाति स यदि काम-
येतोपाधिरोहेत्पाश्शर्वतो वा व्रजेत् ॥ ७ ॥ अथाऽनड्वाहौ*
युनक्ति। दक्षिणमग्रेऽथ सव्यमेवं देवत्रेतरथा मानुषे स
यां काश्च दिशं ध्यास्यन्त्स्यात्प्राङेवाऽग्रे प्रयायात्प्राची हि
दिगग्नेꣳ स्वामेव तद्दिशमनु प्रयाति ॥ ८ ॥ 'प्रेदग्ने ज्योति-
ष्माय्याहि। शिवेभिरर्चिभिष्ट्वमि'ति प्रेदग्ने त्वं ज्योतिष्मा-
न्याहि शिवेभिरर्चिभिर्दीप्यमानैरित्येतद् 'बृहद्भिर्भानु-
भिर्भासन्मा हिꣳ सीस्तन्वा प्रजा' ऽइति बृहद्भिरर्चि-
भिर्दीप्यमानैर्मा हिꣳसीरात्मना प्रजा ऽइत्येतत् ॥ ९ ॥
स यदाक्ष † ऽउत्सर्जेत्। अथैतद्यजुर्जपदेसुर्या वा ऽएषा
वाग्याऽक्षस्य तामेतच्छमयति तामेतद्देवत्रा करोति ॥ १० ॥
यद्वेवैतद्यजुर्जपति। यस्मिन्वै कस्मिँश्चाऽऽहितेऽक्ष ऽउत्स-
र्जति तस्यैव सा वाग्भवति तद्यदग्नावाहितेऽक्ष ऽउत्सर्ज-
त्यग्नेरेव सा वाग्भवत्यग्निमेव तद्देवा ऽउपाऽस्तुवन्नुपाऽमहयँ-
स्तथैवैनमयमेतदुपस्तौत्युपमहय'त्यक्रन्ददग्निस्तनयन्निव द्यौ-

( १ ) शु० सं० अ० १२ क० ३१।
* का० श्रौ० सू० १६ ६ १८।
( २ ) शु० सं० अ० १२ क० ३२। ( ३ ) शु० सं० अ० १२ क० ३२।
† का० श्रौ० सू० १६. ६. २०।
( ४ ) शु० सं० अ० १२ क० ३३।

रि॑ति त॒स्योक्तो ब॒न्धुः ॥११॥ स य॒दि पु॒रा * ब॒सत्यै॑ विमु॒ञ्चेत। अ॒नस्ये॒वाऽग्निः॑ स्या॒दथ य॒दा व॒सत्यै॑ विमु॒ञ्चेत प्रा॒गग्न ऽउप॑स्था॒प्योत्तर॒त ऽउद्ध॒त्यावोक्षति य॒त्रै॒नमुपा॒ऽवह॒रति त॒ं दक्षिण॑त ऽउ॒दञ्चमुपा॒ऽवह॒रति त॒स्योक्तो ब॒न्धुः ॥१२॥ अ॒थाऽस्मिन्त्स॒मिधमा॒दधाति। एत॒द्वा ऽएनं दे॒वा ऽईयि॒वाꣳसमुपरि॒ष्टाद॒न्नेनाऽप्रीणन्नेत॒या समि॒धा त॒थै॒वैनमय॒मेत॒दीयि॒वाꣳसमुपरि॒ष्टाद॒न्नेन प्रीणात्येत॒या समि॒धा ॥१३॥ 'प्र॒ प्रा॒यम॒ग्निर्भ॒रत॒स्य शृण्वे' ऽइति। प्र॒जापति॒र्वै भरत॒ः स॒ हीदꣳ स॒र्वं बि॒भर्त्ति 'वि॒यत्सूर्यो॒ न रो॒चते बृ॒हद्भा' ऽइति वि॒यत्सूर्य ऽइव रो॒चते बृहद्भा ऽइत्येत॒'दभि॒यः पूरुं॒ पृत॒नासु त॒स्थावि॒'ति पू॒रुर्ह॒ नामाऽसु॒ररक्ष॒समास त॒मग्निः॒ पृतनास्व॒भि॒तष्ठौ 'दीदा॒यं दै॒व्यो ऽअतिथिः॒ शि॒वो न' ऽइति दी॒प्यमानो दैवो॒ऽतिथिः॒ शि॒वो न ऽइत्येत॒त्स्थित॒वत्या व॒सत्यै॑ ह्येनं त॒त्स्थाप॒यति ॥ १४ ॥ अ॒थाऽतः॒ सम्प॒देव॒। समि॒धं प्रथमेना॒ऽऽद॒धात्युय॒च्छत्य॒ेकेन प्र॒यात्ये॒केना॒ऽक्षमे॒केना॒ऽनुमन्त्रयते समि॒धमे॒व प॒ञ्चमेना॒ऽऽदधाति त॒त्पञ्च प॒ञ्चचितिकोऽग्निः॒ प॒ञ्चर्त॒वः॒ संवत्सर॒ः संवत्स॒रोऽग्नि॒र्याव॒ानग्नि॒र्याव॒त्यस्य मा॒त्रा ता॒वत्त॒द् भवति ॥ १५ ॥ (A)

अष्टमाध्याये प्रथमं ब्राह्मणम् ॥ ८ ॥

* का० श्रौ० सू० १६. ६ २१।

(१) शु० सं० अ० १२ क० ३४।(२) शु० सं० अ० १२ क० ३४।(३) शु० सं० अ० १२ क० ३४।(४) शु० सं० अ० १२ क० ३४।

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ६. ८. १; कठ० सं० १६. १०; मै० सं० ११. ५. १०; तै० सं० ४. २. ३।

[ भस्मापोऽभ्यवहरणम्, उपस्थानम्, द्विविधप्रायश्चित्तविधिश्च ]

अथाऽतोभस्मन ऽएवाऽभ्यवहरणस्य । देवा वाऽएतदग्रे भस्मोदवपँस्तेऽब्रुवन्न्यदि वा ऽइदमित्थमेव सदात्मानमभि संस्करिष्यामहे मर्त्याः कुणपा ऽअनपहतपाप्मानो भविष्यामो यद्यु परावप्स्यामो यदत्राऽऽग्नेयं बहिर्द्धा तदग्नेः करिष्याम ऽउप तज्जानीत यथेदं करवामेति तेऽब्रुवँश्चेतयद्ध्वमिति चितिमिच्छतेति वाऽव तदब्रुवँस्तदिच्छत यथेदं करवामेति ॥ १ ॥ ते चेतयमानाः । एतदपश्यन्नप ऽएवैनदभ्यवहरामापो वा ऽअस्य सर्वस्य प्रतिष्ठा तद्यत्राऽस्य सर्वस्य प्रतिष्ठा तदेनत्प्रतिष्ठाप्प्य यदत्राऽऽग्नेयं तदद्भ्योऽधि जनयिष्याम ऽइति * तदपोऽभ्यवाऽहरँस्तथैवैनदयमेतदपोऽभ्यवहरति ॥ २ ॥ 'आपो देवीः । प्रतिगृभ्णीत भस्मैतत्स्योने कृणुद्ध्वः सुरभा ऽउ लोक' ऽइति जग्धं वा ऽएतद्यातयाम भवति तदेतदाह स्वभिष्ठऽएनल्लोके कुरुद्ध्वमिति 'तस्मै नमन्तां जनय' ऽइत्यापो वै जनयोऽद्भ्यो हीदः सर्वं जायते 'सुपत्नीरि'त्यग्निना वा ऽआपः सुपत्न्यो 'मातेव पुत्रं विभृताप्स्वेनदि'ति यथा माता पुत्रमुपस्थे विभृयादेवमेनद्बिभृतेत्येतत् ॥ ३ ॥ 'अप्स्वग्ने सधिष्टव'ेति । अप्स्वग्ने योनिष्ट्वेत्येत'त्सौषधी-

* का० श्रौ० सू० १६. ६. २६ ।

(१) शु० सं० अ० १२ क० ३५ । (२) शु० सं० अ० १२ क० ३५ । (३) शु० सं० अ० १२ क० ३५ । (४) शु० सं० अ० १२ क० ३५ । (५) शु० सं० अ० १२ क० ३६ ।

रनुरुद्ध्यस' इत्योषधीभ्यो ह्येषोऽनुरुद्ध्यते 'गर्भे सञ्जायसे पुनरि'ति गर्भे ह्येष सञ्जायते पुन'र्गर्भो अस्योषधीनां गर्भो वनस्पतीनाम्। गर्भो विश्वस्य भूतस्याग्ने गर्भोऽअपामसी'ति तदेनमस्य सर्वस्य गर्भं करोति ॥ ४ ॥ * त्रिभिरभ्यवहरति। त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनदेतदभ्यवहरत्येकेनाग्रेऽथ द्वाभ्यां द्वाभ्यां वाऽग्रेऽथैकेन द्विस्तु कृत्वोऽभ्यवहरति तद्ये द्विपादाः पशवस्तैरेवैनदेतदभ्यवहरति ॥ ५ ॥ अथाऽपाऽऽदत्ते। † तद्यदुत्राऽग्नेयं तदेतदद्भ्योऽधि जनयत्यनयाऽनया वै भेषजं क्रियतेऽनयैवैनमेतत्सम्भरति 'प्रसद्य भस्मना योनिमपश्च पृथिवीमग्न' इति प्रसन्नो ह्येष भस्मना योनिमपश्च पृथिवीं च भवति 'सꣳसृज्य मातृभिष्ट्वं ज्योतिष्मान्पुनराऽसद' इति सङ्गत्य मातृभिष्ट्वं ज्योतिष्मान् पुनरासदऽइत्येत'त्पुनरासद्य सदनं पुनरूर्जा सह रय्ये'त्येतेन मा सर्वेणाऽभिनिवर्तस्वेत्येतत् ॥ ६ ॥ चतुर्भिरमा पाऽऽदत्ते। तद्ये चतुष्पादाः पशवस्तैरेवैनमेतत्सम्भरत्यथोऽअन्नं वै पशवोऽन्नेनैवैनमेतत्सम्भरति त्रिभिरभ्यवहरति तत्सप्त सप्तचितिकोऽग्निः सप्तर्तवः सम्वत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥७॥ अपाऽऽदाय

(१) शु० सं० अ० १२ क० ३६। (२) शु० सं० अ० १२ क० ३६। (३) शु० सं० अ० १२ क० ३७।

* का० श्रौ० सू० १६. ६. २७,२८।

† का० श्रौ० सू० १६. ६. २९।

(४) शु० सं० अ० १२ क० ३८। (५) शु० सं० अ० १२ क० ३८। (६) शु० सं० अ० १२ क० ३९–४१।

भस्मनः प्रत्येत्य । *उखायामोप्योपतिष्ठत एतद्वा एतद्यथायथं करोति यदग्निमपोऽभ्यवहरति तस्मा एवैतन्निह्नुतेऽहिंसाया आग्नेयीभ्यामग्नय एवैतन्निह्नुते बुद्धवतीभ्यां यथैवाऽस्यैतदग्निर्वचो निबोधेत् ॥ ८ ॥ 'बोधा मे ऽअस्य वचसो यविष्ठ्ये'ति । बोध मेऽस्य वचसो यविष्ठेत्येत'न्मंहिष्ठस्य प्रभृतस्य स्वधाव' ऽइति भूयिष्ठस्य प्रभृतस्य स्वधाव ऽइत्येत'त्पीयति त्वो ऽअनु त्वो गृणाती'ति पीयत्येकोऽन्वेको गृणाति 'वन्दारुष्टे तन्वं वन्देऽअग्न' ऽइति वन्दिता तेऽहं तन्वं वन्देऽग्न ऽइत्येत'त्सं बोधि सूरिर्म्मघवा वसुपते वसुदावन् । युयोद्ध्यस्मद् द्वेषाᳪसी'ति यथैवाऽस्माद् द्वेषाᳪसि युयादेवमेतदाह द्वाभ्यामुपतिष्ठते गायत्र्या च त्रिष्टुभा च तस्योक्तो बन्धुः ॥ ९ ॥ तानि नव भवन्ति । नव दिशो दिशोऽग्निर्नव प्राणाः प्राणाऽअग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥ १० ॥ अथ प्रायश्चित्ती करोति । सर्वेभ्यो वा ऽएष ऽएतं कामेभ्य ऽआधत्ते तद्यद्वेवाऽस्याऽत्र कामानां व्यवच्छिद्यतेऽग्नावपोऽभ्यवह्रियमाणे तद्वेवैतत्सन्तनोति सन्दधात्युभे प्रायश्चित्ती करोति ये ऽएवाऽग्नावनुगते तस्योक्तो बन्धुः ॥ ११ ॥ तानि दश भवन्ति । दशाक्षरा विराड्विराडग्निर्दश

* का० श्रौ० सू० १६ ६.२० ।

( १ ) शु० य० अ० १२ क० ४२ । ( २ ) शु० य० अ० १२ क० ४२ । ( ३ ) शु० य० अ० १२ क० ४२ । ( ४ ) शु० य० अ० १२ क० ४२ । ( ५ ) शु० य० अ० १२ क० ४३ ।

दिशो दिशोऽग्निर्दिश प्राणाः प्राणा ऽअग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥ १२ ॥ (B)

अष्टमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे पञ्चमः प्रपाठकः ॥५॥ कण्डिकासंख्या ५३०॥

इत्यष्टमोऽध्यायः ॥ ७ ॥

उखासम्भरणं नाम षष्ठं * काण्डं समाप्तम् ॥ ६ ॥



(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ८. ८. १; कठ० सं० १६. १०, कपि० २५. १०, मै० सं० ३३. ७. ३; तै० सं० ४. २. ३।

* अस्मिन्काण्डे कण्डिका संख्या ५३०।